# निवेदनपत्रम् ।

भो भो मान्यतमा विपश्चिद्वराः,

विदितमस्त्येव तत्रभवतां श्रीमतां यद्वात्स्यायनप्रणीतः कामसूत्राख्यो ग्रन्थः प्राचीनव्यवहारान्वेषिणां सुतरामुपकारकः । समुपलभ्यन्तेऽस्मिन्ग्रन्थे चिरविस्मृतानां प्रततमानामौद्दालकि-दत्तक-चारायण-सुवर्णनाभ-घोटकमुख-गोनर्दीय-गोणिकापुत्र-कुचुमारादीनामाचार्याणां शातवाहनादीनां बहूनां महीपतीनां च नामानि । दृश्यन्ते बहुषु स्थलेषु वर्णिताः प्राक्तनकालप्रवृत्ता मध्यदेश-बाह्लीक-अवन्ति-मालव-आभीर-सिन्धु-मद्र-अपरान्तलाट-स्त्रीराज्य-कोशल-आन्ध्र-महाराष्ट्र-नागर-द्रविड-वानवासिक-गौड-प्राच्य-अहिच्छत्र-साकेत-सूरसेन-वत्स-गुल्म-विदर्भ-सौराष्ट्र हैमवत-वङ्ग-अङ्ग-कलिङ्गादिदेशव्यवहाराः । प्राप्यन्ते चात्र बहूनि 'कीलया गणिकां चित्रसेनां चोलराजो जघान,' 'कर्तर्या कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीम्,' 'नरदेवः कुपाणिर्विद्धया दुष्प्रयुक्तया नटीं काणां चकार,' 'आभीरं हि कोट्टराजं परभवनगतं भ्रातृप्रयुक्तो रजको जघान,' 'काशिराजं जयसेनमश्वाध्यक्षः' इत्यादीनि पुरातनेतिहासोपयुक्तानि वाक्यानि । लभ्यन्तेऽत्र महाकाव्येषु वर्णितानां कुसुमावचय-जलविहार-दोलाकेलि-पानगोष्ठीप्रभृतीनां मूलसूत्राणि । शिक्षयति चायं ग्रन्थः 'बहवश्च कामवशगाः सगणा एव विनष्टाः श्रूयन्ते । यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्यामभिमन्यमानः सबन्धुराष्ट्रो विननाश । देवराजश्चाहल्याम् । अतिबलश्च कीचको द्रौपदीम् । रावणश्च सीताम् । अपरे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टाः ।' इति, 'या गोष्ठी लोकविद्विष्टा या च स्वैरविसर्पिणी । परहिंसात्मिका या च न तामवतरेद्बुधः ॥,' 'न शास्त्रमस्तीत्येतावत्प्रयोगे कारणं भवेत् । शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांस्त्वेकदेशिकान् ॥ रसवीर्यविपाका हि श्वमांस-

स्यापि वैद्यके । कीर्तिता इति तत्किं स्याद्रक्षणीयं विचक्षणैः,' 'धर्ममर्थं तथा कामं लभन्ते स्थानमेव च । निःसपत्नं च भर्तारं नार्यः सद्वृत्तमाश्रिताः ॥' इत्यादिभिर्वाक्यैः सदाचारं, निवारयति चाविनयात् । स्मारयत्युत्सन्नकल्पानां चतुःषष्टिकलानाम् । ददाति सुतरां मानुषप्रकृतिपरिचयम् । समुत्पादयति लोकव्यवहारेष्वनुपमं कौशलम् । उपदिशति च सुखप्रदायकान्गृहस्थव्यापारान् । किं बहुना, ग्रन्थान्ते स्वकण्ठेनैव सूत्रकारः 'तदेतद्ब्रह्मचर्येण परेण च समाधिना । विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः ॥ रक्षन्धर्मार्थकामानां स्थितिं स्वां लोकवर्तिनीम् । अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः ॥' इत्यादि स्वग्रन्थस्य फलमुद्घोषयति ।

एवमस्मिन्ननेकसद्गुणगणपरिपूर्णे ग्रन्थरत्ने प्रसङ्गापतितः क्वचित्किंचिदश्लीलतालेशोऽपि ग्रन्थकृता प्रौढतया तथा वर्णितो यथा व्युत्पन्नतमैरेव बोद्धुं शक्यते, न तु रघुवंशैकोनविंशसर्ग-कुमारसंभवाष्टमसर्ग-शिशुपालवधदशमसर्ग-किरातार्जुनीयनवमसर्ग-नैषधीयचरिताष्टादशसर्गादिवदत्युत्तानतयाश्लीलताडिण्डिमस्ताडितो येन साधारणजनमतिभ्रंशः समुत्पद्येत ।

अथ चैतद्ग्रन्थाधारेण श्रीमाञ्शंकराचार्यः कंचन निबन्धं प्रणिनायेति 'वात्स्यायनप्रोदितसूत्रजातं तदीयभाष्यं च विलोक्य सम्यक् । स्वयं व्यधत्ताभिनवार्थगर्भं निबन्धमेकं नृपवेषधारी ॥' इत्यादिभिर्माधवकविप्रणीतशंकरदिग्विजयस्थपद्यैः प्रतीयते । श्रीक्षेमेन्द्रेण वात्स्यायनसारः प्रणीत इति तत्कृतौचित्यविचारचर्चातोऽवसीयते । श्रीभवभूतिमहाकविरपि मालतीमाधवस्य सप्तमेऽङ्केऽस्यैव ग्रन्थस्य सप्तदशाध्यायस्थानि कतिचन सूत्राणि समुद्धृत्य 'एवं किल कामसुत्तआरा आमणन्ति' इति प्रोक्तवान् । मल्लिनाथादयः प्रसिद्धाष्टीकाकारा अपि तत्तत्स्थलेष्वत्रत्यानि सूत्राणि प्रमाणत्वेनोपन्यस्तवन्तः ।

एवं प्रत्नतमैर्जगन्मान्यैर्विद्वद्भिर्मानितो नितरामुपयुक्तश्च कालकौटिल्येन लुप्तप्रायतां प्राप्तोऽयं ग्रन्थः केनचन यूरोपदेशीयविदुषा आङ्ग्लभाषयानू-

दितो मुद्रितो गुप्ततया प्रचारितश्च । तद्विलोकनदिनादारभ्याहं 'केनचित्समीचीनेन व्याख्यानेन समेतो मूलग्रन्थोऽपि विद्वद्भ्य उपढौकनीयः' इति मनसि संकल्पमकरवम् । समाचकलं च पञ्चपाणि मूलटीकापुस्तकानि विभिन्नप्रदेशेभ्यः । तदालम्बनेन च यथामति संशोध्य यशोधरप्रणीतयातिरुचिरया जयमङ्गलाख्यया व्याख्यया समेतं ग्रन्थमेतममुमुद्रम् ।

यद्यपि पण्डितमात्रगम्यप्रौढसंस्कृतनिबद्धस्यास्य ग्रन्थस्य प्रकटतयापि कृते प्रचारे न कापि साधारणजनक्षतिशङ्का किंतु वर्तमानव्यवहारानुरोधेन गुप्ततयैव विद्वत्स्वेवास्य प्रचारं चिकीर्षामि । प्रहिणोमि चैकं पुस्तकं विद्वन्मुकुटमणीनां श्रीमतां विलोकनार्थम् । कीदृशोऽत्र श्रीमतां निदेश इति सविनयं पृच्छामि च । श्रीमन्तोऽप्याङ्ग्लसंस्कृतान्यतरभाषानिबद्धस्वाभिप्रायप्रेषणेन सत्वरमेव मामनुगृह्णन्त्विति प्रार्थयेऽहं

१५।२।९१. युष्माकमनुचरो

संघी का रस्ता. दुर्गाप्रसादः ।

जयपुर.—(राजपूताना.)

# कामसूत्रस्य विषयानुक्रमः ।






श्रीवात्स्यायनमुनिप्रणीतं

# कामसूत्रम् ।

यशोधरकृतया जयमङ्गलाख्यया व्याख्यया समेतम् ।

## साधारणं नाम प्रथममधिकरणम् ।

### प्रथमोऽध्यायः ।

वात्स्यायनीयं किल कामसूत्रं[1] प्रस्तावितं[2] कैश्चिदिहान्यथैव ।
तस्माद्विधास्ये जयमङ्गलाख्यां टीकामहं सर्वविदं प्रणम्य ॥

इह चत्वारो वर्णा ब्राह्मणादयः, चत्वारश्चाश्रमा ब्रह्मचारी गृहस्थो वैखानसो भिक्षुरिति । तत्र ब्राह्मणादीनां गृहस्थानां मोक्षस्यानभिमतत्वात्त्रिवर्गः पुरुषार्थः । तत्रापि धर्मार्थयोर्हेतुत्वात्काम एव फलभूतः प्रकृष्टः पुरुषार्थ इति कामवादिनः । स चोपायं विना न भवतीति तमुपायमाचिख्यासुराचार्यैर्मल्लनागः[3] पूर्वाचार्यमतानुसारेण शास्त्रमिदं प्रणीतवान् । ननु तद्धेतुत्वाद्धर्मार्थावेवोपादेयौ, तौ च शास्त्रविहितौ । सत्यम् । तद्धेतुत्वेऽप्युपायान्तरापेक्षत्वात्संप्रयोगपराधीनः कामः । संप्रयोगश्चोपायमपेक्षते । उपायपरिज्ञानं च कामशास्त्रात् । न धर्मार्थशास्त्राभ्याम् । वक्ष्यति च प्रयोजनवाक्यम्—'संप्रयोगपराधीनत्वात्स्त्रीपुंसयोरुपायमपेक्षते । सा चोपायप्रतिपत्तिः कामसूत्रात्' इति । तत्रोपायोऽभिधेयः । तत्प्रकाशनं कामशास्त्रेण क्रियमाणं प्रयोजनम् । अन्यथा कथं प्रतिपत्तिः शास्त्रात् । अनधीतशास्त्राणां तु तच्छास्त्रोपायपरिज्ञानं स्वतोऽसंभवात्, परोपदेशात्स्यात् ।

---

१. 'कामशास्त्रम्' इति पुस्तकान्तरे पाठः. २. 'व्याख्यापितम्' इति; 'व्याख्यावितत्' इति च पाठान्तरम्. ३. 'कामसूत्रविन्यास इव मल्लनागघटित' इति वासवदत्तायां विन्ध्यगिरिवर्णने. "मल्लनागेन मुनिविशेषेण, पक्षे गजविशेषेण, घटितो रचितो युक्तश्च. 'मल्लनागोऽभ्रमातङ्गे वात्स्यायनमुनावपि' इति विश्वः ।" इति दर्पणाख्यां वासवदत्ताटीकायां शिवरामः.

परोपदेशश्चेत्कथं न शास्त्राभ्युपगमः । तथा चेदमुपायपरिज्ञानं तद्घुणाक्षरकल्पम् । सम्यक्करणीयवर्जनीयापरिज्ञानात् । ततश्चोपायबाहुल्याच्चैर्नागरिकैरनागरिका नागरिकाः क्रियन्ते । तथा चोक्तम्—'यदविज्ञातशास्त्रेण कदाचित्साधितं भवेत् । न चैतद्बहुमन्तव्यं घुणोत्कीर्णमिवाक्षरम् ॥' इति । यदपि कामशास्त्रविदां केषांचिद्व्यवहाराकौशलम्, तत्तेषामेव दोषः, न शास्त्रस्य । प्रतिपत्तिदोषाच्च शास्त्रानर्थक्यं सर्वत्र तुल्यम् । नहि चिकित्साद्यर्थेषु शास्त्रेषु सर्वे तद्विदः पथ्याहारादिकं सेवन्ते । तस्मात्तदर्थिनो ये भक्तिश्रद्धान्वितास्तेऽपि शास्त्रप्रयोजनहेतवः ।

तत्र देवतानमस्कारपूर्वकं शास्त्रप्रणयनमविघ्नितप्रसरं भवतीत्याह—

**धर्मार्थकामेभ्यो नमः ॥**

अर्थशब्दस्याजाद्यदन्तत्वेऽपि न पूर्वनिपातः । धर्मस्याभ्यर्हितत्वात् । वक्ष्यति च—'पूर्वः पूर्वो गरीयान्' इति ।

अन्यदेवतासद्भावेऽपि किमिति तेभ्यो नम इत्याह—

**शास्त्रे प्रकृतत्वात् ॥** इति ।

'अधिकृतानधिकृते प्रतिपत्तिर्बलीयसी'[1] इति न्यायात् । यथा च पुरुषार्थत्वेन कामोऽस्मिन्शास्त्रेऽधिकृतस्तथा[2] तद्द्वारेण धर्मार्थावपि । एतदुपदिष्टोपायपूर्वकं प्रवर्तमानस्य त्रिवर्गसिद्धेः[3] । तथा च वक्ष्यति—'अन्योन्यानुबद्धं त्रिवर्गं सेवेत । तथा सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः पुत्राः संबन्धः पक्षवृद्धिरनुपस्कृता रतिश्च' इति । तेषां चाधिकारात्तदधिष्ठात्र्यो देवता अधिकृताः । उपचाराच्छब्दवाच्याः । अन्यथा धर्मादीनां वक्ष्यमाणलक्षणानामदेवत्वात्मकत्वान्नमस्कारो नोपपद्येत । अधिष्ठातृदेवतास्तित्वं चागमात् । तथाहि—'पुरूरवाः शक्रदर्शनार्थमितः स्वर्गं गतो मूर्तिमतो धर्मादीन्दृष्ट्वोपागम्य धर्ममेवेतरावनादृत्य प्रदक्षिणीचकार । ततोऽसौ ताभ्यां तिरस्कारामर्षिताभ्यामभिशप्तः । ततोऽस्य कामाभिशापादुर्वशीविरहोत्पत्तिरभूत् । तस्यां च कथंचिदुपशान्तायामर्थाभि-

---

१. 'गरीयसीति मन्यते' इति पा०. २. 'विवक्षितः' पा०. ३. 'क्रियासिद्धेः' पा०.

शापादतिप्रवृद्धलोभश्चातुर्वर्ण्यस्यार्थमाहृतवान् । ततोऽर्थापहाराद्यज्ञादिक्रियाविरहोद्विग्नैर्ब्राह्मणैर्दर्भपाणिभिर्हतो ननाश' इत्यैतिहासिकाः ।

**तत्समयाववोधकेभ्यश्चाचार्येभ्यः ॥** इति ।

तेषां धर्मादीनां समयस्तत्त्वम् । अवबोधयन्तीत्यवबोधकाः । तत्समयस्याववोधका इति । षष्ठीसमासप्रतिषेधस्यानित्यत्वम् । 'तत्प्रयोजको हेतुश्च' इति निदर्शनात् । ये तत्समयं प्रतिपादयितुं तच्छास्त्रं प्रणीतवन्तस्तेभ्यो नमः, नान्येभ्य इत्यर्थः ।

कुत इत्यत आह—

**तत्संवन्धात् ॥** इति ।

तेषामिह शास्त्रे संवन्धादित्यर्थः । तत्प्रणीतशास्त्रसंक्षेपेण हि शास्त्रस्य प्रणयनात् ।

'प्रजापतिर्हि' इत्यादिनागमविशुद्ध्यर्थं गुरुपूर्वक्रमलक्षणं संवन्धमाह—

**प्रजापतिर्हि प्रजाः सृष्ट्वा तासां स्थितिनिवन्धनं त्रिवर्गस्य साधनमध्यायानां शतसहस्रेणाग्रे प्रोवाच ॥**

प्रजापतिर्हीति । हिशब्दो यस्मादर्थे । अविपरीतोऽयमागमो गुरुपरम्परयान्वाख्यायते । यतः स्थितिनिवन्धनमिति । प्रजानां तिस्रोऽवस्थाः, सर्गस्थितिप्रलयलक्षणाः । तत्र सर्गादूर्ध्वं प्रवन्धेनावस्थानं स्थितिः । सा हि द्विविधा, शुभा चाशुभा च । त्रिवर्गोऽपि द्विविधः, उपादेयोऽनुपादेयश्च । तत्र पूर्वो धर्मोऽर्थः काम इति । द्वितीयोऽप्यधर्मोऽनर्थो द्वेष इति । तत्र धर्मादमुत्र शुभा गतिः । अधर्मादशुभा । अर्थादिहैव परिभोगो धर्मप्रवर्तनं च । अनर्थात्क्लिष्टजीवनमधर्मप्रवर्तनं च । कामात्सुखं प्रजोत्पत्तिश्च । द्वेषान्नोभयम् । तस्य च निःसुखस्याप्रजस्य तृणस्येव स्थितिः । इत्येवं स्थितेस्त्रिवर्गो निवन्धनम् । तस्योपेयानुपेयस्य प्राप्तिपरिहारौ नोपायं विनेति तदुपायशासनत्वाच्छास्त्रं च सम्यगुपचारात्तन्निवन्धनम् । शतसहस्रेणेति लक्षेण । अग्रे प्रोवाचेति तदानीं शास्त्रान्तराभावादिद-

१. 'कृत्स्न—' पा०. २. 'अथ विपरीतः' पा०. ३. 'शातेन' पा०.

मेवाग्र्यमिति । श्रुतिरपि सर्वजनविषयेति तामेव हृदिस्थामनुसंचिन्त्य साधारणभूतं स्मार्तशास्त्रं प्रकर्षेणोवाच ।

**तस्यैकदेशिकं मनुः स्वायंभुवो धर्माधिकारिकं पृथक्चकार ॥**

तस्येति । प्रजापतिप्रोक्तस्यैकदेशाश्रयः, तत्र यत्र धर्मोऽधिकृतस्तन्मनुः पृथक्चकार । यत्रार्थस्तद्बृहस्पतिः । यत्र कामस्तन्नन्दीति । स्वायंभुव इति वैवस्वतनिवृत्त्यर्थम् । धर्माधिकारिकमिति । धर्मप्रस्तावो यत्रास्ति तत् । धर्मशास्त्रमित्यर्थः ।

**बृहस्पतिरर्थाधिकारिकम् ॥**

अर्थाधिकारिकमिति । अर्थशास्त्रं चकारेत्यर्थः । द्वयोरप्यनयोरप्रस्तुतत्वान्नाध्यायसंख्या दर्शिता ।

**महादेवानुचरश्च नन्दी सहस्रेणाध्यायानां पृथक्कामसूत्रं प्रोवाच ॥**

महादेवेति । महादेवमनुचरति यः । नान्योऽयं नन्दिनामा कश्चित् । तथा हि श्रूयते—दिव्यं वर्षसहस्रमुमया सह सुरतसुखमनुभवति महादेवे वासगृहद्वारगतो नन्दी कामसूत्रं प्रोवाचेति । अत्राध्यायसंख्यानमुक्तम् । शास्त्रस्य प्रस्तुतत्वात् ।

**तदेव तु पञ्चभिरध्यायशतैरौद्दालकिः श्वेतकेतुः संचिक्षेप ॥**

तदेव त्विति । नन्दिप्रोक्तम् । तस्यैकदेशम् । तुशब्दो विशेषणार्थः । औद्दालकिरित्युद्दालकस्यापत्यं यः श्वेतकेतुः । तथाहि परदाराभिगमनं लोके प्रागासीत् । यथोच्यते—'पक्वान्नमिव राजेन्द्र सर्वसाधारणाः स्त्रियः । तस्मात्तासु न कुप्येत न रज्येत रमेत च ॥' इति । इयमौद्दालकेन व्यवस्था निर्वर्तिता । तथा चोक्तम्—'मद्यपानान्निवृत्तिश्च ब्राह्मणानां गुरोः सुतात् । परस्त्रीभ्यश्च लोकानामृषेरौद्दालकादपि ॥ ततः पितुरनुज्ञानाद्गम्यागम्यव्यवस्थया । श्वेतुकेतुस्तपोनिष्ठः सुखं शास्त्रं निबद्धवान् ॥' इति ।

**तदेव तु पुनरध्यर्धेनाध्यायशतेन साधारणसांप्रयोगिककन्यासं-**

---

१. 'अग्र्यमिति दर्शयितुम्' पा०. २. 'अनुस्मृत्य' पा०. ३. 'तस्यैकदेश स्वायभुवो मनुः' पा०. ४. 'पक्वान्नमिव' इत्यारभ्य 'तथा चोक्तम्' इत्यन्त पुस्तकान्तरे नास्ति.

प्रयुक्तकभार्याधिकारिकपारदारिकवैशिकौपनिपदिकैः स
करणैर्बाभ्रव्यः पाञ्चालः संचिक्षेप ॥

तदेव त्विति । यदेवौद्दालकिसंक्षिप्तम् । पुनरर्थतो ग्रन्थतश्च
पूर्वत्र परदाराभिगमनं सामान्येन प्रतिपिद्धम्, इह तु विशेषेण
दारिकमत्रोक्तम् । अध्यर्धेन पञ्चाशदधिकेन । तत्रोत्तरेषामधिकर
स्य साधारणत्वात्साधारणम् । संप्रयोगः प्रयोजनमस्येति सांप्रयो
कन्यायाः संप्रयुक्तं संप्रयोगो -यस्मिन्निति कन्यासंप्रयुक्तकम् । भ
कारिणी यस्मिन्नस्तीति भार्याधिकारिकम् । तथा पारदारिकम् । वे
श्यावृत्तम् । तत्प्रयोजनमस्येति वैशिकम् । तथौपनिपदिकम् । उप
हस्यम् । साधारणाद्युपादानं शास्त्रशरीरख्यापनार्थम् । एतावन्त
शास्त्र इति । आचार्योऽपि तथैव स्वशास्त्रमतः संचिक्षेप । सप्तभिरिति
यमार्थम् । अधिक्रियन्ते प्रकरणार्था येष्वित्यधिकरणानि । बाभ्रव्यो
रपत्यं यः पाञ्चालः । 'मधुबभ्र्वोः—' इति यञ् ।

तस्य[3] षष्ठं वैशिकमधिकरणं पाटलिपुत्रिकाणां गणिकानां नि
गाद्दत्तकः पृथक्चकार ॥

तस्येति बाभ्रव्यसंक्षिप्तस्य । षष्ठमितीयमेवानुपूर्वी नान्येति प्रदर्शन
र्थम् । अन्यथा पाठादेव संख्या लब्धा । तां चानुपूर्वीं वर्णयिष्यामः । प
टलिपुत्रिकाणामिति मगधेषु पाटलिपुत्रं नाम नगरं तत्र भवा इति । 'रोप
धेतोः प्राचाम्' इति वुञ् । नियोगादिति । अन्यतमो माथुरो ब्राह्मण
पाटलिपुत्रे वसतिं चकार । तस्योत्तरे वयसि पुत्रो जातः । तस्य जातमा-
त्रस्य माता मृता । पितापि तत्रान्यस्यै ब्राह्मण्यै तं पुत्रत्वेन दत्त्वा कालेन
लोकान्तरं गतः । ब्राह्मण्यापि ममायं दत्तकः पुत्र इत्यनुगतार्थमेव नाम
चक्रे । स च तया संवर्धितोऽचिरेण कालेन सर्वा विद्याः कलाश्चाधीतवान् ।
व्याख्यानशीलत्वाद्दत्तकाचार्य इति प्रतीतिमुपागतः । एकदा च तस्य चे-
तस्येवमभवत्, लोकयात्रा[4] परा ज्ञेयास्ति । सा प्रायशो वेश्यानु स्थितेति ।

---

१. 'अधिकरणानामसाधारणत्वात्' पा०. २. 'लज्जारामम्' पा०. ३. 'तस्यैष्टेदा
षष्ठम्' पा०. ४ 'लोकगर्भयात्रा' पा०.

ततो वेश्याजनं परिचयपूर्वकं प्रत्यहमुपागम्य तथा तां विवेद यथा स एवोपदेशग्रहणायास्य प्रार्थनीयोऽभूत् । ततोऽसौ वीरसेनाप्रमुखेण गणिकाजनेनाभिहितः, अस्माकं पुरुषरञ्जनमुपदिश्यतामिति । तन्नियोगात्पृथक्चकारेत्याम्नायः । अन्यस्तु श्रद्धामधिगम्य युक्तियुक्तमाह—यत्र गर्भयात्रायां दत्तकनामा तत्पदावधूतेन प्रेतिशयितेन त्र्यक्षेण शप्तः स्त्री बभूव । पुनश्च कालेन लब्धवरः पुरुषोऽभूत् । तेनोभयज्ञेन पृथक्कृतमिति । यदि बाभ्रव्योक्तमेव पृथक्कृतं किमपूर्वं स्वसूत्रेषु दर्शितम् । येनोभयरसज्ञता कल्प्यते । यदि चायमर्थः शास्त्रकृतोऽप्यभिमतः स्यात्तदानीं 'नियोगादुभयरसज्ञो दत्तकः' इत्येवमभिदध्यात् ।

तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं पृथक्प्रोवाच । सुवर्णनाभः सांप्रयोगिकम् । घोटकमुखः कन्यासंप्रयुक्तकम् । गोनर्दीयो भार्याधिकारिकम् । गोणिकापुत्रः पारदारिकम् । कुचुमार औपनिषदिकमिति । एवं बहुभिराचार्यैस्तच्छास्त्रं खण्डशः प्रणीतमुत्सन्नकल्पमभूत् । तत्र दत्तकादिभिः प्रणीतानां शास्त्रावयवानामेकदेशत्वात्, महदिति च बाभ्रवीयस्य दुरध्येयत्वात्, संक्षिप्य सर्वमर्थमल्पेन ग्रन्थेन कामसूत्रमिदं प्रणीतम् ॥

तत्प्रसङ्गाच्चारायणः साधारणमधिकरणं प्रोवाच । सुवर्णनाभः सांप्रयोगिकम् । कन्यासंप्रयुक्तकं घोटकमुखः । गोनर्दीयो भार्याधिकारिकम् । गोणिकापुत्रः पारदारिकम् । कुचुमार औपनिषदिकमिति । दत्तकेन वैशिकं पृथक्कृतमित्येतत्प्रसङ्गाच्चारायणादयोऽपि पृथक्प्रकर्षेणोचुः । प्रकर्षश्च ग्रन्थेषु स्वमतप्रकाशनम् । तच्च स्थानस्थानेषु स्वशास्त्रे दर्शयिष्यति । एवमित्यादिना स्वशास्त्रस्य प्रयोजनमाह—तच्छास्त्रं बाभ्रव्योक्तम् । खण्डश इति खण्डं खण्डं कृत्वा । उत्सन्नकल्पमीषदुत्सन्नमिव । क्वचिद्दृश्यमानत्वात् । नन्द्यादिप्रणीतमुत्सन्नमेवेत्यर्थोक्तम् । तत्रेति शास्त्रप्र-

---

१. 'इत्ययमभिप्रायः' पा०. २. 'प्रतिसेवितत्र्यक्षेण शप्तः' पा०. ३. 'अभवत्' पा०. ४. 'सर्वमल्पेन ग्रन्थेन कामसूत्रमिदं प्रणीतवानिति वात्स्यायनः' पा०.

स्थाने । शास्त्रावयवानामित्यवयवभूतानाम् । एकदेशार्थत्वान्न कामाङ्गीभूताशेषवस्तुपरिज्ञानम् । बाभ्रवीयस्येति । बाभ्रव्यप्रोक्तस्य संपूर्णशास्त्रस्याप्रयोजनमाह—तस्य संपूर्णस्यापि महदिति कृत्वा दुःखेनाध्ययनम् । तत्सप्तभिरधिकरणैः सप्त सहस्राणि (सप्त शास्त्राणि) संक्षिप्य, सर्वमर्थमल्पेन ग्रन्थेनेति संपूर्णतां स्वध्येयतां च दर्शयति । इदमिति बुद्धिस्थमाह । प्रणीतमिति समाप्तमाशंसते ।

तस्येत्यादिना स्वशास्त्रस्यार्थावयवानाचष्टे—

तस्यायं प्रकरणाधिकरणसमुद्देशः—

शास्त्रसंग्रहः । त्रिवर्गप्रतिपत्तिः । विद्यासमुद्देशः । नागरिकवृत्तम् । नायकसहायदूतीकर्मविमर्शः । इति साधारणं प्रथममधिकरणम् । अध्यायाः पञ्च । प्रकरणानि पञ्च ।

प्रमाणकालभावेभ्यो रतावस्थापनम् । प्रीतिविशेषाः । आलिङ्गनविचाराः । चुम्बनविकल्पाः । नखरदनजातयः । दशनच्छेद्यविधयः । देश्या उपचाराः । संवेशनप्रकाराः । चित्ररतानि । प्रहणनयोगाः । तद्युक्ताश्च सीत्कृतोपक्रमाः । पुरुषायितम् । पुरुषोपसृप्तानि । औपरिष्टकम् । रतारम्भावसानिकम् । रतविशेषाः । प्रणयकलहः । इति सांप्रयोगिकं द्वितीयमधिकरणम् । अध्याया दश । प्रकरणानि सप्तदश ।

वरणविधानम् । संबन्धनिर्णयः । कन्याविस्रम्भणम् । बालाया उपक्रमाः । इङ्गिताकारसूचनम् । एकपुरुषाभियोगः । प्रयोज्यस्योपावर्तनम् । अभियोगतश्च कन्यायाः प्रतिपत्तिः । विवाहयोगः । इति कन्यासंप्रयुक्तकं तृतीयमधिकरणम् । अध्यायाः पञ्च । प्रकरणानि नव ।

एकचारिणीवृत्तम् । प्रवासचर्या । सपत्नीषु ज्येष्ठावृत्तम् । कनिष्ठावृत्तम् । पुनर्भूवृत्तम् । दुर्भगावृत्तम् । आन्तःपुरिकम् । पुरु-

---

१. 'बालोपक्रमाः' पा०. २ 'कन्याप्रतिपत्तिः' पा०.

षस्य बह्वीषु प्रतिपत्तिः । इति भार्याधिकारिकं चतुर्थमधिकरणम्
अध्यायौ द्वौ । प्रकरणान्यष्टौ ।

स्त्रीपुरुषशीलावस्थापनम् । व्यावर्तनकारणानि । स्त्रीषु सिद्धा पुरुषाः । अयत्नसाध्या योषितः । परिचयकारणानि । अभि योगाः । भावपरीक्षा । दूतीकर्माणि । ईश्वरकामितम् । आन्तःपु रिकं दाररक्षितकम् । इति पारदारिकं पञ्चममधिकरणम् । अ ध्यायाः षट् । प्रकरणानि दश ।

गम्यचिन्ता । गमनकारणानि । उपावर्तनविधिः । कान्तानु वर्तनम् । अर्थागमोपायाः । विरक्तलिङ्गानि । विरक्तप्रतिपत्तिः निष्कासनप्रकाराः । विशीर्णप्रतिसंधानम् । लाभविशेषः । अथ नर्थानुबन्धसंशयविचारः । वेश्याविशेषाश्च । इति वैशिकं षष्ठ धिकरणम् । अध्यायाः षट् । प्रकरणानि द्वादश ।

सुभगंकरणम् । वशीकरणम् । वृष्याश्च योगाः । नष्टराग नयनम् । वृद्धिविधयः । चित्राश्च योगाः । इत्यौपनिषदि मधिकरणम् । अध्यायौ द्वौ । प्रकरणानि षट् ।

एवं षट्त्रिंशदध्यायाः । चतुःषष्टिः प्रकरणानि । अधि सप्त । सपादं श्लोकसहस्रम् । इति शास्त्रस्य संग्रहः ॥

अयमिति वक्ष्यमाणो ग्रन्थः । प्रक्रियन्ते प्रस्तूयन्ते ये प्रकरणानि । तेषामधिकरणानां च समुद्देशः संक्षेपेणाभिधानम् । संग्रहः, त्रिवर्गप्रतिपत्तिः, इत्यादय उक्तार्थाः । तत्साहचर्याद् अपि तत्समाख्याः । यथा—कंसवधकाव्यमिति । शास्त्रं चेदं त पश्चेति द्विधा स्थितम् । तत्र तन्त्र्यते जन्यते रतिर्येन तत्तन्त्रम् नादि । तदुपदिश्यते येन तदपि तन्त्रं सांप्रयोगिकमधिकरणम् । न्तादावाप्यन्ते स्त्रियः पुरुषाश्च येन स आवापः । समागमोपाय इत्य स येनोपदिश्यते तदप्यावापः कन्यासंप्रयुक्तकाद्यधिकरणचतुष्टयम् ।

प- तुस- मेकदे- सर्वमर्थ- सांप्रयो- कम् । वै- क- ।

१. 'अनुवृत्तम्' पा०. २. 'क्रमाः' पा०. ३. 'शास्त्रसंग्रहः' पा०. ४. 'शास्त्रसंग्रह.' पा
५. 'इत्यादयोऽनुक्तार्थाः'; 'इत्यादयो मुक्तार्थाः' पा०.

तन्त्रावापानुष्ठानं न साधारणानुष्ठानं विनेति प्राक्साधारणमुच्यते । औपनिषदिकं तु तन्त्रावापाभ्यामसिद्धे व्याप्रियत इत्यन्ते वक्ष्यति । तदुभयमपि तन्त्रावापान्तर्गतमेव । तदङ्गत्वात् । तत्र साधारणे शास्त्रसंग्रहप्रकरणमादावुक्तम् । तत्र शास्त्रस्य संगृह्यमाणत्वात् । षट्त्रिंशदित्यादिना स्वशास्त्रस्यावयवसमुदायाभ्यां संख्यानमाह । तत्राध्यायसंख्यानं पूर्वशास्त्रेभ्य इदं स्तोकमिति दर्शनार्थम् । प्रकरणाधिकरणसंख्यानमन्यनिरपेक्षार्थम् । श्लोकसंख्यानमहीनाधिकत्वज्ञापनार्थम् ।

उत्तरग्रन्थसंधानायाह[1]—

संक्षेपमिममुक्त्वास्य विस्तरोऽतः प्रवक्ष्यते ।
इष्टं हि विदुषां लोके समासव्यासभाषणम् ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे
शास्त्रसंग्रहः प्रथमोऽध्यायः ।

[illegible]नविं[illegible]ेति । अस्येति शास्त्रस्य । विस्तरोऽतः प्रवक्ष्यते संक्षेपादूर्ध्वम् । विधयः ।[illegible]ास्त्रविन्यास इत्यत आह—इष्टं हीति । लोके ये शास्त्रेऽधि[illegible]हणनयोगास्तः । तेषां संक्षेपविस्तराभ्यां शास्त्रस्य मनसि धारणमिष्टम् । [illegible]पस्थानि [illegible]र्थित्वादसंमोहो यथाभिलपितप्रकरणार्थप्रत्यवमर्शः स्यात् ॥

[illegible]त्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरह[illegible]
[illegible] । [illegible]तरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां
साधारणे प्रथमेऽधिकरणे शास्त्रसंग्रहः प्रथमोऽध्यायः ।

---

द्वितीयोऽध्यायः ।

[illegible]प्रतिपत्तिफलं शास्त्रम् । तस्मिन्प्रतिपत्तौ विप्रतिपत्तौ वा इति पर्येषणमपि युक्तम् । तस्माच्छास्त्रसंग्रहादनन्तरं त्रिवर्गप्रतिपत्ति[illegible]इति प्रकरणसंबन्धः । उद्देशापेक्षया च संबन्धित्वे कथमुद्देश इति

---

१. 'इह' पा०. २. 'साधनायाह' पा० ३. 'इदम्' पा०. ४. 'साधारणे' इति पुस्तकान्तरे नास्ति. ५. 'मननसिद्धिरितीष्टम्'; 'मनसि धारणमिष्ट—' पा०. ६. 'प्रकरणार्थः स्यात्'; 'प्रत्यवमर्षः स्यात्' पा०. ७. 'संबन्धादुद्देशापेक्षायाः संबन्धित्वे' पा०.

चिन्त्यम् । प्रतिपत्तिस्त्रिविधा, अनुष्ठानमवबोधः संप्रतिपत्तिश्चेति । तत्र प्राधान्यादनुष्ठानमधिकृत्याह—

**शतायुर्वै पुरुषो विभज्य कालमन्योन्यानुबद्धं परस्परस्यानुपघातकं त्रिवर्गं सेवेत ॥**

शतायुरिति । शतमायुरस्येति शतायुः । शतशब्दः सामान्यवाच्यपि वर्षगतसंख्यानमाह । वृत्तौ तथार्थस्य विवक्षितत्वात् । कालविभागार्थं चेत्तदपि[१] विच्छिन्नायुषो विभागासंभवात् । पुरुष इति प्राधान्यख्यापनार्थम् । स्त्रीणां तु पुरुषाधीना त्रिवर्गसेवेत्यस्वातन्त्र्यम् । विभज्य वक्ष्यमाणेन न्यायेन । अन्योन्यानुबद्धमिति धर्मादीनामन्यतमं द्वाभ्यामेकेन वानुबद्धम् । तद्यथा प्रजार्थिनो धर्मपत्न्यामनभिप्रेतायामृतावभिगमनं[२] धर्मोऽर्थानुबद्धः । प्रजार्थिनोऽभिप्रेतायामृतावभिगमनं धर्मः कामानुबद्धः । अपरिणीतस्य सवर्णादनभिप्रेतकन्यालाभोऽर्थो धर्मानुबद्धः । परिणीतस्याधमवर्णादभिप्रेतकन्यालाभोऽर्थः कामानुबद्धः । धर्मपत्न्यामभिप्रेतायां कामातुरायामनृतौ कामो धर्मानुबद्धः । परिणीतस्य निष्किंचनस्याधमवर्णायामर्थवत्यामभिप्रेतायामधिगतायां[३] कामोऽर्थानुबद्धः । इत्येकानुबद्धाः । अपरिणीतस्य सवर्णायामनन्यपूर्वायामभिप्रेतायां[४] यथाविधिसंयोगो धर्मोऽर्थकामानुबद्धः । तस्यैवाभिप्रेतसवर्णकन्यालाभोऽर्थो धर्मकामानुबद्धः । तस्यैवार्थरूपवत्यां परस्परोत्कण्ठयोद्वाहितायां कामो धर्मार्थानुबद्धः । इति द्व्यनुबद्धाः । परस्परस्यानुपघातकमिति । यत्रानुबन्धो नास्ति[५] तत्रैकमितरयोरनुपघातकम्[६], एकानुबन्धे चान्यस्यानुपघातकं सेवेत । अत्रोदाहरणं वक्ष्यामः ।

वयोद्वारेण कालविभागमाह—

**बाल्ये विद्याग्रहणादीनर्थान् ॥**

बाल्य इति । वयोविभागस्तत्रान्तर उक्तः—'आ षोडशाद्भवेद्बालो यावत्क्षीरान्नवर्तनः[७] । मध्यमः सप्तति यावत्परतो वृद्ध उच्यते ॥' इति । विद्याग्रहणमादिर्येषामर्थानां तान्सेवेतेति ।

---

१. 'वैतदपि' पा०. २. 'ऋतावेव गमनम्' पा०. ३. 'अभिगतायाम्' पा०. ४. 'सवर्णयानन्यपूर्वयाभिप्रेतया' पा०. ५. 'अस्ति' पा०. ६. 'अनुपघातकमिति' पा०. ७. 'वर्तिकः'; 'वृत्तिकः' पा०.

एवम्—

**कामं च यौवने ॥** इति ।

तदोचितत्वात् ।

**स्थाविरे धर्मं मोक्षं च ॥**

स्थाविरे धर्ममोक्षावनुभूतविषयत्वात् । मोक्षग्रहणं परमतापेक्षम् । ज्ञानवादिनां चतुर्वर्गः पुरुषार्थः । अस्मिन्नेव काले तैरप्याध्यात्मिकं चिन्त्यमिति । ननु त्रिवर्गस्य नियतकालत्वादन्योन्यानुबन्धो नास्ति, तत्तश्चासेवनप्रसङ्ग इति नायं नियमः । अनुबद्धत्वाभावे निरनुबद्धमप्युक्तम् । अथवा यथाकालमहन्यहनि सेवा । प्रतिषेधपरत्वाद्धर्मादिनियमस्य । यथाकालं धर्मादिषु सेव्यमानेषु यद्यनुषङ्गादितरानुबन्धः, भवतु । न दोषाय ।

**अनित्यत्वादायुषो यथोपपादं वा सेवेत ॥**

अनित्यत्वादिति वर्षशतादर्वाग्विनाशदर्शनात् । यथोपपादमिति यद्यदोपपद्यते तदा सेवेत । बाल्येऽर्थम्, धर्ममपि । यौवने कामम्, धर्मार्थावपि । स्थाविरे धर्मम्, अर्थकामानुष्ठानसामर्थ्ये चेत्तावपीति । अन्यथैकसेवायामसमग्रः पुरुषार्थः स्यात् । सेवेतेति पुनर्वचनं पूर्वस्मात्पक्षात्पक्षान्तरा[द]र्थम् । अन्यस्मिन्पक्षे विद्याग्रहणार्थस्य सेवायाः कालत्रयेऽप्यसंप्रङ्गवान्नियमयति—

**ब्रह्मचर्यमेव त्वा विद्याग्रहणात् ॥**

यावद्विद्या न गृह्यते तावत्कामं न सेवेत । अन्यथा ह्यधर्मः, तद्ग्रहणविघातः, विद्यार्थलाभाभावश्च । भूम्याद्यर्जने तु न नियमः । अन्ये तु विद्याग्रहणवर्जं प्रायेण भूम्याद्यर्जनं न संभवति, अतस्त्रयस्त्रिंशदब्दाश्चत्वारश्च मासा इति प्रत्येकं वयो विभज्य योजयन्ति । अस्मिन्विभागे षोडशवर्षादूर्ध्वं कामस्य भावात्, बाल्येऽपि धर्मार्थकामान्सेवेतेत्युक्तमनुष्ठानर्मवबोधोऽपि ।

---

१. 'अर्थं काम च' पा०. २. 'प्रत्यहन्यासेवा' पा०. ३. 'दोपायेन्याद' पा०. ४. 'पदात्पक्षान्तरादर्थम्'; 'पक्षात्पक्षान्तरादर्थम्' पा०. ५. 'विद्याग्रहणार्थसेवाया काल-त्रयेऽपि संभवात्' पा०. ६. 'वा' पा०. ७. 'विभज्यते' पा०. ८. 'अवबोधोऽपि' इत्यादि किंचित्सदिग्धम्.

स्वरूपं[1] यतश्च परिज्ञातं तदुभयमप्याह—अलौकिकत्वादित्यादिना ।

**अलौकिकत्वाददृष्टार्थत्वादप्रवृत्तानां यज्ञादीनां[2] शास्त्रात्प्रवर्तनम्, लौकिकत्वाद्दृष्टार्थत्वाच्च प्रवृत्तेभ्यश्च[3] मांसभक्षणादिभ्यः शास्त्रादेव निवारणं धर्मः ॥**

तत्र लोके रूपादिवदविदितस्वरूपत्वादलौकिका[4] यज्ञादयः । ननु विशिष्टद्रव्यगुणकर्मात्मकत्वाद्विदितस्वरूपाः कथमलौकिका इत्यत आह—अदृष्टार्थत्वादिति । तेषामनन्तरं फलस्यादर्शनात् । येऽदृष्टफलाः सन्तोऽलौकिका न ते प्रेक्षावद्भिरदृष्टसामर्थ्यौषधिवत्प्रवर्त्यन्त इत्यप्रवृत्ताः[5] । आदिशब्दात्तपश्चरणादयः । तेषामप्रवृत्तानां शास्त्रात्प्रवर्तनं धर्म इति । अयं प्रवृत्तिरूपो धर्मः । लौकिकत्वाद्दृष्टार्थत्वादिति । ये दृष्टतृप्त्यादिफलाः सन्तो लौकिकास्ते तदर्थिभिर्मृगादिमांसभक्षणवत्प्रवर्त्यन्ते । तस्मात्प्रवृत्तेभ्यश्च मांसभक्षणादिभ्यः । आदिशब्दात्सत्त्वाभिद्रोहपरस्वादानादिभ्यः । शास्त्रादेव निवारणं प्रतिषेधनमिति । अयं निवृत्तिरूपः । कथमत्र शास्त्रं प्रमाणमिति चेदुत्तरत्र वक्ष्यति ।

**तं श्रुतेर्धर्मज्ञसमवायाच्च प्रतिपद्येत ॥**

तमित्युक्तस्वरूपं धर्मम् । श्रुतेरिति स्मृत्यनुगताद्वेदात्, योऽधिकृतः शास्त्रे । अनधिकृतो वा धर्मज्ञसमवायात् । श्रुतिस्मृत्यर्थतत्त्वज्ञसंसर्गादित्यर्थः । प्रतिपद्येतावबुध्येत ।

**विद्याभूमिहिरण्यपशुधान्य[6]भाण्डोपस्करमित्रादीनामर्जनमर्जितस्य[7] विवर्धनमर्थः ॥**

विद्या आन्वीक्षिक्यादयः । भूमिः कृष्टा[8], कृष्या वा । हिरण्यं सुवर्णादि । पशुर्हस्त्यश्वादिः । धान्यं पूर्वमध्यावरवापः । भाण्डोपस्करं गृहोपकरणं लोहकाष्ठमृद्विदलचर्ममयम् । मित्रं सहपांशुक्रीडितादि । आदिश-

१. 'स्वरूपज्ञानं तत्स्वरूपम्' पा०. २. 'यज्ञादीनाम्' इति पुस्तकान्तरे नास्ति. ३. 'च' इति पुस्तकान्तरे नास्ति. ४. 'स्वरूपा–' पा०. ५. 'प्रवृत्ताः' पा०. ६. 'धान्य' इति पुस्तकान्तरे नास्ति. ७ 'अर्जितस्य रक्षणं रक्षितस्य विवर्धनम्' पा०. ८. 'कृष्टाकृष्टा वा'; 'कृष्याकृष्या वा' पा०.

व्दाद्वस्त्राभरणादयः। अर्जनं द्विविधम्। निष्पन्नानां हस्त्यादीनां स्वीकरणम्, अनिष्पन्नानां धान्यादीनां निष्पादनम्। अर्जितस्येत्येकवचनमेकैकस्य द्रव्यस्यार्जनवर्धनयोरन्वर्थोपदर्शनार्थम्। अन्यथा समुदायस्यैवार्जनं वर्धनं चार्थः स्यात्। वर्धनमुपचयभोगादिव्यापारदर्शनार्थम्। तयोः शास्त्रेणोपदिश्यमानत्वात्।

तमध्यक्षप्रचाराद्वार्तासमयविद्भ्यो वणिग्भ्यश्चेति ॥

अध्यक्षाः प्रचरन्त्यनेनेत्यध्यक्षप्रचारः। वार्ता शास्त्रम्। तस्माच्छास्त्रे योऽधिकृतः। इतरश्च वार्तासमयविद्भ्यः कृषिपाशुपाल्यवणिज्यादितत्त्वविद्भ्यः। वणिग्भ्य इत्युपलक्षणार्थम्। कर्षकेभ्यो गवादिपोषकेभ्यश्च प्रतिपद्यतेत्येवम्।

श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानामात्मसंयुक्तेन मनसाधिष्ठितानां स्वेषु स्वेषु विषयेष्वानुकूल्यतः प्रवृत्तिः कामः ॥

त्वगिति कार्येन्द्रियम्। कायो द्विविधः, सामान्यो विशेषश्च। तत्र सामान्यमाह—आत्मसंयुक्तेन मनसेति। आत्मा समवायिकारणम्। सुखदुःखेच्छाद्वेषप्रयत्नादिगुणानां तत्र समवायात्। तत्र यदास्य प्रयत्नगुण उत्पद्यते तदायं मनसा संयुज्यते। मन इन्द्रियेण। इत्यनेन क्रमेणाधिष्ठितानाम्। स्वेषु स्वेष्विति। तथाक्रमं शब्दस्पर्शरूपरसगन्धेषु। आनुकूल्यत इति। यदात्मनः सुखादीन्विषयान्भोक्तुमिच्छा भवति तदा प्राप्याप्राप्यकारिणां श्रोत्रादीनां बुद्धीन्द्रियाणामानुलोम्येन या प्रवृत्तिः। इच्छोपगृहीता श्रोत्रादिबुद्धिरित्यर्थः। सा विषयोपभोगस्वभावा काम इत्युपचर्यते। आत्मा हि तद्द्वारेण विषयं भुञ्जानः सुखमनुभवति यच्चसुखं प्रधानं कामः। तस्य निबन्धनमिच्छोपगृहीता प्रवृत्तिः। सापि काम इत्युच्यते। तस्माद्धेतुफलभेदात्सामान्यकामो द्विविधः। प्रातिकूल्यतः प्रवृत्तिस्तु दुःखहेतुत्वाद्द्वेषं इत्यर्थोक्तम्।

---

१. 'भूम्यादिव्यापार–' पा०. २. 'श्रोत्रेन्द्रियादीनाम्' पा०. ३. 'द्वेषं' पा०.

विशेषकामो द्विविधः, प्रधानमप्रधानं च । तदुभयमपि दर्शयन्नाह—

**स्पर्शविशेषविषयात्त्वस्याभिमानिकसुखानुविद्धा फलवत्यर्थप्रतीतिः प्राधान्यात्कामः ॥**

स्पर्शविशेषविषयात्त्विति । वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि । तेषां वचनादानविहरणोत्सर्गानन्दकर्मनिष्पादनात् । तत्र स्त्रीपुंसयोर्यदधोव्यञ्जनं संबाधकादि तन्मात्रस्वभावं तत्त्वगिन्द्रियमेव । तस्य कश्चिदेव प्रदेश उपस्थेन्द्रियमुच्यते । यो विसृष्टयवस्थायामानन्दकर्म जनयति । तस्य व्यञ्जनस्य योऽन्तर्गतः स्पर्शविशेषस्तस्मिन्विषये प्रतीतिरसावर्थप्रतीतिस्त्वगिन्द्रियबुद्धिः । अस्याः संप्रयोगेच्छालक्षणः कामिताख्यो भावः कारणम् । अस्येति । स्त्र्यात्मनः, पुरुषात्मनश्च । तत्र स्त्र्यात्मनः पुरुषाद्व्यञ्जनस्पर्शविशेषविषये स्त्रीव्यञ्जनत्वगिन्द्रियप्रतीतिः, पुरुषात्मनश्च स्त्रीव्यञ्जनस्पर्शविशेषविषये पुरुषव्यञ्जनत्वगिन्द्रियप्रतीतिरित्यर्थः । विशेषग्रहणात्पुरुषस्योरुकक्षादिस्पर्शनविषये स्त्रियाश्चोरुनाभ्यादिस्पर्शविषये प्रतीतिर्निरस्ता । तस्या अप्रधानत्वात् । एवंविधा प्रतीतिः सामान्यकाम एव । कथं विशेषत्वमिति चेदाह—फलवतीति । तस्यां प्रतीतौ प्रबन्धेनोत्पद्यमानायां शुक्रक्षरणं तत्तुल्यकालमेव चानन्दाख्यं फलं सुखमित्युक्तम् । तेन युक्ता स्पर्शविशेषविषये प्रतीतिरपरा भवति । तस्याश्च पूर्विकैव प्रतीतिरफला कारणम् । अतो विषयभेदात्स्वरूपभेदाच्च द्विधा प्रतीतिः । अर्थप्रतीतिरिति । अर्थग्रहणात्स्वप्नव्यञ्जनस्पर्शार्थस्यालीकत्वात्फलवत्यपि न कामः । तस्या अप्रधानत्वात् । यद्येवं वियोनावयोनौ वानभिप्रेतेऽर्थप्रतीतिरेवंविधाप्यस्तीत्यत आह—आभिमानिकसुखानुविद्धेति । आभिमानिकं चुम्बनादिसुखं वक्ष्यति । चुम्बननखदशनच्छेद्यादिषु हि तत्र तत्र स्थाने प्रयोज्यमानेषु स्त्रीपुंसो रागसंकल्पवशात्सुखमित्यभिमन्यते । तेन

---

१. 'विषये त्वाभिमानिक–' पा०. २. 'योन्तर्गतिः' पा०. ३. 'स्पर्शविशेषविषये' पा०. ४. 'उपनाभ्यादि–' पा०. ५. 'प्रीतिः' पा०. ६. 'विशेष इति' पा०. ७. 'पुरुषार्थस्य' पा०. ८. 'स्थानेषु प्रयुज्यमानेषु' पा०. ९. 'स्त्रीपुंसौ रागसंकल्पवशात्सुखमित्यभिमन्येते' पा०.

सुखेनानुविद्धेत्याक्षिप्तसंस्कारेऽर्थप्रतीतिः प्राधान्यात्कामः। तेन वियोना-वयोनौ वानभिप्रेतस्त्रीपुंसयोः फलवत्यर्थप्रतीतिर्न कामः। आभिमानिक-सुखाभावादप्राधान्यात्। तस्मात्स्प्रष्टव्यविशेषविषयो विशेषः कामः।

**तं कामसूत्रान्नागरिकजनसमवायाच्च प्रतिपद्येत॥**

तमित्युक्तस्वरूपं सामान्यं विशेषम्। प्रधानमप्रधानं च। कामसूत्राद-स्मादेव, शास्त्रेऽधिकृतो यः। इतरश्च नागरिकसमवायात्कामव्यवहारज्ञ-संपर्कात्प्रतिपद्येतेति।

एवं धर्मादीनि युगपत्सेवितुमधिगन्तुं वा न संभवन्तीति गुरुलाघव-मपि बुध्येतेत्याह—

**एषां समवाये पूर्वः पूर्वो गरीयान्॥**

समवाये संनिपाते। तदुपायसंनिधानात्। पूर्वः पूर्व इति कामादर्थो गरीयान्। कामस्यार्थसाध्यत्वात्। ततोऽपि धर्मः। अमुत्राप्यर्थस्य धर्म-साध्यत्वात्।

नायं सर्वविधिविषयक्रम इत्यत आह—

**अर्थश्च राज्ञः। तन्मूलत्वाल्लोकयात्रायाः। वेश्यायाश्चेति त्रिव-र्गप्रतिपत्तिः॥**

अर्थस्तु राज्ञो गरीयान्। तन्मूलकत्वादिति। वर्णाश्रमाचारलक्षणा लोकयात्रा। सा मा भूदन्यथेति तस्याः पालनं राज्ञो धर्मः। तच्च प्रभु-शक्तौ सत्याम्। प्रभुशक्तिश्च कोपदण्डबलम्। ते चार्थत इति तन्मूला लोकयात्रा। वेश्यायाश्चार्थो गरीयान्। अर्थप्रतिबद्धत्वात्तज्जीविकायाः। वेश्या हि कामातुरब्राह्मणाभिप्रेतनागरकविषयौ धर्मकामावुपनतौ त्यक्त्वा पश्चाद्भविष्यत इत्यनिष्टेऽप्ययमर्थद इति प्रवर्तते। त्रिवर्गप्रतिपत्तिरनुष्ठा-नावबोधलक्षणोक्तेत्यर्थः।

---

१. 'आक्षिप्तः' पा०. २. 'नागरिकसमवायात्' पा०. ३. 'जनः' पा०. ४. 'अतिगु-रुलाघवमपि' पा०. ५. 'तेषाम्' पा०. ६. 'वेश्यायाः कामश्चेति' पा०. ७ 'राज्ञ इति। वर्णाश्रमा–' पा०. ८. 'अनिष्टोऽपि' पा०.

इदानीं विप्रतिपत्तिपूर्विकां संप्रतिपत्तिं दर्शयन्नाह—

**धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रं युक्तम् । उपायपूर्वकत्वादर्थसिद्धेः । उपायप्रतिपत्तिः शास्त्रात् ॥**

धर्मस्येत्यादि । कामसूत्र एव तद्विप्रतिपत्तिं दर्शयति—अलौकिकत्वादिति । यथोक्तं प्राक् । अभिधायकं ज्ञापकम् । अर्थसिद्धेरिति । अर्जनवर्धनाख्या चार्थसिद्धिः । अन्यथोपायं विना प्रवर्तमानस्यानर्थोऽपि स्यात् । तत्संशयश्च ।

तत्र धर्मार्थमर्थार्थं च शास्त्रं युक्तम् । कामार्थं त्वयुक्तमित्याह—

**तिर्यग्योनिष्वपि तु स्वयं प्रवृत्तत्वात्कामस्य नित्यत्वाच्च न शास्त्रेण कृत्यमस्तीत्याचार्याः ॥**

तिर्यग्योनिष्वपीति । गवादिष्वपि तमोबहुलेषु शास्त्रोपदेशं विना कामः प्रवर्तमानो दृश्यते, किं पुनर्मनुष्येषु रजोबहुलेषु न प्रवर्तते । तथा चोक्तम्—'विनोपदेशं सिद्धो हि कामोऽनाख्यातशिक्षितः । स्वकान्तारमणोपाये को गुरुर्मृगपक्षिणाम् ॥' इति । नित्यत्वाच्चेति । आत्मनि द्रव्यपदार्थे सदैवेच्छाद्वेषादयो गुणाः स्थिताः । ततश्च नित्यः कामः । तथा चोक्तम्—'मुमुक्षवोऽपि सिद्ध्यन्ति विरागाद्रागपूर्वकात् । विषयेच्छानुबन्धिन्यो निसर्गात्प्राणिनां धियः ॥' तस्मात्प्रवर्तमानेन शास्त्रेण कार्यं तन्निवर्तनं तु युक्तम् । आचार्या धर्मार्थमोक्षवादिनः ।

अत्र संप्रतिपत्तिमाह—

**संप्रयोगपराधीनत्वात्स्त्रीपुंसयोरुपायमपेक्षते ॥**

संप्रयोगपराधीनत्वादिति । विशेषः सामान्यो वा कामः संप्रयोगपराधीनः । संप्रयोगश्च द्विविधः, आयतनसंप्रयोगोऽङ्गसंप्रयोगश्च । तत्रायतनं कामस्य स्त्र्यधिष्ठानम् । अङ्गानि च माल्यादीनि । तथा चोक्तम्—'सुखं कामस्तदङ्गानि भूषणालेपनस्रजः । तथोपवनहर्म्याग्रवल्लकीमदिरा-

---

१. 'इदानीम्' इति पुस्तकान्तरे नास्ति. २. 'शास्त्रमुक्तम्' पा०. ३. 'चार्थसिद्धेः' पा०. ४. 'च शास्त्रादेव' पा०. ५. कार्यमस्तीति कार्यम्. ६. 'संप्रयोगः पराधीनत्वादुपायम्' पा०.

दयः ॥ यस्यायतनमुद्दामरूपयौवनविभ्रमाः । ललनाश्चाटुदाक्षिण्याश्चाकृष्टजनमानसाः ॥' इति। तत्र य आयतनसंप्रयोगः स च द्विविधः, बाह्य आभ्यन्तरश्च। तत्र यो रहसि स आभ्यन्तरो रताख्यः। स विशेषकामस्य निमित्तम्। बाह्यः समागमलक्षणो रतस्य। यश्च बुद्धीन्द्रियाणां यथास्वमङ्गैः संप्रयोगः सोऽङ्गसंप्रयोग इति। इन्द्रियार्थसंनिकर्षलक्षणः। स च सामान्यकामस्य निमित्तम्। अनयोश्च कामयोर्यथास्वं पूर्वोक्तमेवेच्छाकारणम्। तत्पूर्वकत्वात्। तदभावेऽभावात्। तत्राद्यः संप्रयोगः समागमलक्षणः स स्त्रीपुंसयोरन्यतरानिच्छया रक्षणाल्लज्जया भयाद्वा परतन्त्रायां न घटत इत्यत्रायमुपायमपेक्षते। रताख्यश्च[1] पाश्चात्यश्चतुःषष्टिप्रयोगानभिज्ञायां कथं स्यादिति तन्त्रमुपायम्[2]। द्वितीयोऽपि संप्रयोगो नित्यनैमित्तिकनागरिकसंवृत्तं विना न भवतीत्युपायापेक्षा।

**सा चोपायप्रतिपत्तिः कामसूत्रादिति वात्स्यायनः ॥**

उपायपरिज्ञानं च कामसूत्रात्। तेनोपदिश्यमानत्वात्। वात्स्यायन 'इति स्वगोत्रनिमित्ता समाख्या। मल्लनाग इति च संस्कारिकी।

गवादिषु कथमिति चेत्तदाह—

**तिर्यग्योनिषु पुनरनावृतत्वात्[3]स्त्रीजातेश्च, ऋतौ यावदर्थं प्रवृत्तेरबुद्धिपूर्वकत्वाच्च प्रवृत्तीनामनुपायः प्रत्ययः ॥**

पुनःशब्दो विशेषणार्थः। अनावृतत्वादिति रक्षणाद्यावरणाभावात्। स्त्रीजातिः स्वतन्त्रा। किं तत्रोपायेनेत्यनुपायः प्रत्यय इति संबन्धः। प्रत्ययशब्देनोभयरूपोऽपि संप्रयोग उक्तः। तस्य कामोत्पत्तौ निमित्तत्वात्। तत्रावरणाभावादाचार्योक्तोपायशून्यः[4] समागम इत्यर्थः। ऋतौ यावदर्थमिति। ऋतुकाल एव ते तिर्यञ्चः संप्रयुज्यन्ते। मनुष्यास्तु प्रजार्थमृतौ, स्त्रीरमणार्थं चानृतावपीत्यसमानम्। तथा चोक्तम्—'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम्' इति। तत्रापि यावदर्थं यावदेव तृप्तिलक्षणोऽर्थो निष्पद्यते तावदेव संप्रयुज्यन्ते। न तु द्वितीयं संप्रयोगिणमपेक्षन्ते,

१. 'रतारम्भश्च' पा०. २. 'तन्त्रमुपायम्' इति पुस्तकान्तरे नास्ति. ३. 'अनावृतत्वाच्च' पा०. ४. 'आवापोक्तोपायशून्यः'; 'आचार्योक्तो य उपायस्तदन्यः' पा०.

किमस्य तृप्तिरभून्न वेति । तस्मादसमानार्थत्वादनुपाय आन्तरसंप्रयोगः । तत्र समानार्थजन्यमेव प्रेम स्त्रीरक्षणोपायो नास्तीति मनुष्येष्वेवमिति चेदत एवास्योपदेशः । अन्यथान्यसमानार्थत्वादनुपायः । तत्पत्न्याः पुरुषान्तरगमने न कश्चित्पुरुषार्थोऽस्य स्यात् । तथा चोक्तम्—'भजते संभृतप्रेमा परं चेदस्य कामिनी । नष्टे धर्मे हते वृत्ते सुखं दूरे हतं कुलम् ॥' तस्मात्समानार्थताजन्यमेव प्रेम स्त्रीरक्षणोपायः । यच्च स्त्रीरक्षणार्थं मनुप्रोक्तमसुकुमारत्वसाधनार्थं कुट्टनादि गृहकर्म तदुपायोद्वेगजननादनुपाय एव । तथा चोक्तम्—'कर्माण्यसुकुमाराणि रक्षणार्थेऽवदन्मनुः । तासां स्रज इवोद्दामगजालानोपसंहिताः ॥ असति प्रेम्णि तत्सर्वमित्याचार्या व्यवस्थिताः । समानार्थतया तच्च न शास्त्रेणोपदिश्यते ॥' इति । अबुद्धिपूर्वकत्वादिति । धर्मोऽर्थः पुत्राः संबन्धः पक्षवृद्धिः स्यादित्येवं बुद्धिपूर्वं न प्रवर्तन्ते । केवलं पशुधर्ममात्रेणेत्यनुपायः प्रत्यय आन्तरसंयोगः । अनुबन्धोपायरहितत्वात् । तस्मादेवरक्ताः किंशुका इति किं तिर्यग्योनिषु शास्त्रप्रणयनेन । अनुकूलेषु वा पुरुषेषु । इतरत्र तु विपर्ययेण सोपायः प्रत्यय इति युक्तं शास्त्रप्रणयनम् ।

धर्मे विप्रतिपत्तिमाह—

**न धर्मांश्चरेत् । एष्यत्फलत्वात्, सांशयिकत्वाच्च ॥**

एष्यत्फलत्वादिति । यज्ञादयो नेहलौकिका जन्मान्तरफला उक्ताः । हस्तगतद्रव्यत्यागं न प्रेक्षावान्समीहते । किं त्विहैव तेन कृष्यादिफलं निष्पाद्योपभुङ्क्ते । न परम्परामपेक्षते । सांशयिकत्वाच्च भविष्यतः फलस्येति । उपस्कारतस्तपश्चर्याक्लेशादर्थक्षयाच्च निष्पादितेऽपि यज्ञादौ ततः किं स्वर्गादिफलं स्यान्न वेति संदिग्धम् । कारणानां कार्योत्पादननियमादर्शनात् । संदिग्धे च कोऽसंशयितार्थत्यागेन प्रवर्तेत इति हेतुद्वयम् ।

तत्र प्रथमस्य लोकेप्रसिद्धिमाह—

**को ह्यबालिशो हस्तगतं परगतं कुर्यात् ॥**

१. 'जृम्भितप्रेमा' पा०. २. 'अननुकूलेषु'; 'अनानुकूल्येषु' पा०. ३. 'त्यागेन' पा०. ४. 'लोकसिद्धमाह' पा०. ५. 'पादगतम्' पा०.

को हीति । अबालिशः प्रेक्षावान् । यथा कश्चित्स्वहस्तगतं द्रव्यं परहस्तीकृतं कार्यकाले स्वयं गत्वा साध्यं हारितं भक्षितं वानेन स्यादिति न विप्रकृष्टं करोति, तथा जन्मान्तरे मोक्ष्येऽहमिति यज्ञादिषु नियोज्य विप्रकृष्टं कः कुर्यात् ।

तत्र तत्स्यादिह द्रव्यसाध्यं फलं तावन्मात्रकं तावत्कालं वामुत्र विपरीतमित्याह—

**वरमद्य कपोतः[1] श्वो मयूरात् ॥**

वरमद्येति । यथा पक्षिमांसार्थिनो महतः श्वो मयूरलाभादद्य कपोतलाभोऽपि गरीयांस्तद्वदिहापीति ।

द्वितीयस्य लोकप्रसिद्धिमाह[2]—

**वरं सांशयिकान्निष्कादसांशयिकः कार्षापणः । इति लौकायतिकाः ॥**

वरमिति । गृहाण कार्षापणम्, नो चेदेष्यति मेऽद्य हेमशतं ततो निष्कं दास्यामीति । तत्र प्रत्युपस्थितकार्यस्यासंदिग्धः स्वल्पोऽपि कार्षापणो गरीयान् । संदिग्धनिष्कात् । लौकायतिका इति लोकायतमधीयते ये । उक्थादिपाठाट्ठक्प्रत्ययः ।

तत्र संप्रतिपत्तिमाह—

**शास्त्रस्यानभिशङ्क्यत्वादभिचारानुव्याहारयोश्च[3] क्वचित्फलदर्शनान्नक्षत्रचन्द्रसूर्य[4]ताराग्रहचक्रस्य लोकार्थं[5] बुद्धिपूर्वकमिव प्रवृत्तेर्दर्शनाद्वर्णाश्रमाचारस्थितिलक्षणत्वाच्च लोकयात्राया हस्तगतस्य च बीजस्य भविष्यतः सस्यार्थे त्यागदर्शनाच्चरेद्धर्मानिति वात्स्यायनः ॥**

शास्त्रस्येति । धर्मस्यालौकिकत्वात्तदभिधायकं शास्त्रमुक्तम्[6] । तच्चाम्नं पौरुषेयमपौरुषेयं च । तत्र पूर्वमभिशङ्कनीयम्—किमिदं सत्यं मिथ्या वेति । पुरुषा हि रागादिभिरविद्यया चोपप्लुता वितथमपि ब्रुवन्ति । अ-

१. 'कपोतो न श्वो मयूरः' पा०. २. 'प्रसिद्धमाह' पा०. ३. 'व्यवहारयोश्च' पा०. ४. 'सूर्यचन्द्र—' पा०. ५. 'लोकानुग्रहार्थम्' पा०. ६. 'शास्त्रं पुरुषम्' पा०.

पौरुषेयं च वेदाख्यं पुरुषसंबन्धाभावाददुष्टमनभिशङ्कनीयम् । यथोक्तम्—'दोषाः सन्ति न सन्तीति पौरुषेयस्य युज्यते । वेदे कर्तुरभावात्तु दोषशङ्कैव नास्ति नः ॥' इति । अपौरुषेयत्वसाधनमन्यत्रोक्तम् । तेनेह चरेद्धर्मानिति संबन्धः । तेन संशयितत्वादित्येतदसिद्धम् । अभिचारो हिंसात्मकं कर्म । अनुव्याहारः शान्तिकपौष्टिकम् । तयोश्चोदितयोः 'अभिचरञ्श्येनेन यजेत' इत्यादिना । क्वचिदिति यत्र प्रयुज्यते [तत्र] हिंसाशान्तिपुष्टिफलदर्शनाच्छेपस्याप्यग्निहोत्रादेः स्वर्गादिफलं भविष्यतीति चरेद्धर्मान् । नह्यपौरुषत्वेनाभिन्नयोः शास्त्रावयवयोर्वितथावितथत्वभेदो युज्यते । वितथत्वे चेतरस्यापि वितथत्वप्रसङ्गात् । अदृष्टसाधनमाह—नक्षत्रेति । नक्षत्राण्यश्विन्यादीनि । चन्द्रसूर्यौ प्रसिद्धौ । ताराग्रहा अङ्गारकादयः पञ्च । तेषां चक्रमिव चक्रं संनिवेशविशेषो द्वादशराशिविभक्तः । तस्य । लोकार्थं नात्मार्थम् । बुद्धिपूर्वकमिवेति । बुद्धिपूर्वकस्येव । यथा कैश्चित्पुरुषो बुद्धिपूर्वं प्रवर्तते तद्वदेवैते सूर्यादयो नक्षत्रेण युज्यमाना अन्यथान्यथा प्रवर्तमाना दृश्यन्ते । न च तथैवेतीवार्थः । तथा ह्येषां न 'लोकस्येदं करिष्यामः' इति प्रवृत्तिः । सा च शास्त्रान्तरे बहुप्रकारोक्ता । दर्शनादिति वचनात्प्रत्यक्षप्रमाणसिद्धेति दर्शयति । तस्यां च प्रवृत्तौ लोकस्य शुभाशुभात्मकं फलं द्विविधम् । साधारणमसाधारणं च । तत्र साधारणं सुभिक्षदुर्भिक्षादि । तच्च ग्रहचारे द्रष्टव्यम् । असाधारणं तु प्रतिसत्त्वं नियतं लाभालाभसुखदुःखादि । तच्च जातके द्रष्टव्यम् । सैवंविधा प्रवृत्तिः कारणान्तरमदृष्टं गमयति । तच्च लोकस्य शुभाशुभात्कर्मणः । किमन्यथैषामेकरूपाणां कारणान्तरनिरपेक्षाणां सदा प्रवृत्तिरप्रवृत्तिर्वा स्यात् । कालान्नियम इति चेत्सोऽपि कारणनिरपेक्षः सर्वदा स्यात् । तस्मादस्ति तत्प्रवर्तकमदृष्टमिति चरेद्धर्मम् । उक्तं च—'नक्षत्रग्रहपञ्जरमहर्निशं लोककर्मविक्षिप्तम् । भ्रमति शुभाशुभमखिलं प्रकाशयत्पूर्वजन्मकृतम् ॥' इति । वर्णाश्रमेति । वर्णा ब्राह्मणादयः । आश्रमा ब्रह्मचारि-

१. 'हिंसायाः शान्ति-' पा०. २. 'विभक्तस्य' पा०. ३. 'कश्चिद्बुद्धिपूर्वम्' पा०. ४. 'किमन्यत् । एषाम्' पा०.

गृहस्थादयः । तेषामाचारः स्वधर्मः । तस्य स्थितिर्व्यवस्था । सैव लक्षणं यस्या लोकयात्रायाः सा । लौकायतिकैर्मा भूदव्यवस्थायां मात्स्यो न्याय इति दृष्टार्थं वर्णिता । संवरणमात्रं हि त्रयी । लोकयात्राविद इति तां च लोकविश्वासनार्थमाचरद्भिः कथं नाचरितो धर्मः । दृष्टार्थश्च यद्यदृष्टार्थोऽपि स्यात्को विरोधः । एतेन न 'धर्मांश्चरेत्' इति प्रतिज्ञाया अभ्युपगमबाधां दर्शयति । यच्चोक्तमेष्यत्फलत्वादिति तद्दृष्टेऽप्यस्तीति दर्शयन्नाह—हस्तगतस्येति । तुल्ये भविष्यत्फलत्वे सत्यप्येकत्र प्रवृत्तिरन्यत्र निषेध इत्ययुक्तमुक्तम् । न कदाचित्तत्र दृष्टमिति चेत्कथं तर्हि लोकवैचित्र्यम् । नहि सर्वत्र समानाद्दृष्टात्कारणादैश्वर्यादिफललाभः । नापि स्वाभाविकम् । तदा सिद्ध्यसिद्धिप्रसङ्गात् ।

अर्थविप्रतिपत्तिमाह—

**नार्थांश्चरेत् । प्रयत्नतोऽपि ह्येतेऽनुष्ठीयमाना नैव कदाचित्स्युः । अननुष्ठीयमाना अपि यदृच्छया भवेयुः ॥**

नार्थानिति । उपायात्किलार्थसिद्धिः । उपायानुष्ठानं च यैतस्तथानुतिष्ठेदित्यर्थः । तदन्वयव्यतिरेकानुविधानादर्थसिद्धेः । यदाह—प्रयत्नत इति । प्रयत्नेनार्ज्यमाना नैव कदाचित्स्युरित्यर्थोक्तम् । यदा स्युस्तदा कालसंनिधानादिति मन्यन्ते । अनुष्ठीयमानाः प्रयत्नेनेत्यर्थः । यदृच्छयेत्येवमेव स्युः । अकस्मान्निधानादिदर्शनात् । तस्मादुपायपरिज्ञानार्थं शास्त्रमप्यनर्थकम् । किं कृतं तर्ह्येतदित्याह—

**तत्सर्वं कालकारितमिति ॥**

कालो नाम द्रव्यपदार्थो नित्यः । तेन कारितमिति प्रयोजकव्यापारेण पुरुषस्य परायत्ततामाह ।

तदेव दर्शयन्नाह—

**काल एव हि पुरुषानर्थानर्थयोर्जयपराजययोः सुखदुःखयोश्च स्थापयति ॥**

---

१. 'कथ साचरितः'; 'कथम चरितः' पा०. २. 'यद्यदृष्टार्थः स्यात्' पा०. ३. 'फललाभेनापि'; 'फलभेदः । नापि'; 'फललाभ नापि' पा०. ४. 'कदाचित्पुनरननुष्ठीयमानाः' पा०. ६. 'यत्नस्तथानुष्ठितादित्यर्थः'; 'यत्र तथानुष्ठितादित्यर्थः' पा०.

काल एवेति । हेयोपादेयाः षट्पदार्था लाभालाभादयः। तेषु काल एव मूलमिति न त्यागोपादानार्थं स्वयं यत्नमातिष्ठेदित्यर्थः ।

लोकप्रसिद्धिमाह—

**कालेन वलिरिन्द्रः कृतः । कालेन व्यवरोपितः । काल एव पुनरप्येनं कर्तेति कालकारणिकाः ॥**

कालेनेति । हेयप्रकृतिकोऽप्यसुरत्वादनर्होऽपि शाक्रे पदे प्रेरितः स्थापितः । व्यवरोपित इति । परिवर्तमानेन तस्मात्पदादपनीय पाताले नियोजितः । पुनरप्येनं कर्तेति । विपरिवर्तिष्यमाणः प्रेरयन्निन्द्रं करिष्यतीत्यर्थः । तथा चाहुः—'कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः ॥' कालकारणिका ये कालकारणमधीयते । ईश्वरकारणिका अप्येवमेव द्रष्टव्याः । तुल्ययोगक्षेमत्वात् ।

अत्र संप्रतिपत्तिमाह—

**पुरुषकारपूर्वकत्वात्सर्वप्रवृत्तीनामुपायः प्रत्ययः ॥**

पुरुषकारपूर्वकत्वादिति । कालादुपायतो वार्थसिद्ध्यै तदर्थिनो याः प्रवृत्तयस्ताः सर्वाः पुरुषकारपूर्विका द्रष्टव्याः । उभयत्रापि पुरुषकारस्य व्याप्रियमाणत्वात् । पुरुषकारश्चोपायं विना नार्थं साधयतीत्युपायः प्रत्ययः । कारणमर्थसिद्धेरित्यर्थः । यथैव हि पुरुषकारोऽर्थसिद्धौ कालमपेक्षते तथा शक्तिदेशसाधनान्युपायमपेक्षन्ते । तेषु सर्वेष्वसत्सु कालस्याकिंचित्करत्वात् । असति काले तेषामसामर्थ्यात् । तस्माच्छक्तिदेशकालसाधनानि परस्परापेक्षाणि कार्यस्य साधकानीति तान्येवोपायः । तत्र शक्त्यादिषु पुरुषकारादर्थसिद्धिः । अनन्तगुणेषु त्ववश्यमेव कदाचित्स्याद्यादृच्छिकी कस्यचिदर्थसिद्धिः । सापि यादृच्छिकमेवोपायमाश्रित्य ।

---

१. 'इत्यर्थे लोकप्रसिद्धिमाह' पा०. २. 'पुनरेनम्' पा०. ३. 'अहंप्रकृतोऽपि' पा०. ४. 'अप्यत्रैव' पा०. ५. 'नार्थसिद्धिम्' पा०. ६. 'सोऽर्थसिद्धेः' पा०. ७. 'साधनान्यप्युपायम्' पा०. ८. 'तेषु सत्सु' पा०. ९. 'कार्यसाधकानि' पा०.

यदाह—

**अवश्यंभाविनोऽप्यर्थस्योपायपूर्वकत्वादेवं । न निष्कर्मणो भद्रमस्तीति वात्स्यायनः ॥**

अवश्यमिति । यतश्चैवं तस्मान्निष्कर्मण उपायानुष्ठानरहितस्य । भद्रं कल्याणम् । पूर्वजन्मकृतं कर्म निष्फलं प्रसज्येतेति चेत्, न। परस्परापेक्षमुभयं फलतीति द्रष्टव्यम्। यथोक्तम्—'दैवं मानुषं हि कर्म लोकं पालयति' । एतेन दैवमात्रवादोऽपि प्रत्युक्तः ।

कामविप्रतिपत्तिमाह—

**न कामांश्चरेत् । धर्मार्थयोः प्रधानयोरेवमन्येषां च सतां प्रत्यनीकत्वात् । अनर्थजनसंसर्गमसद्व्यवसायमशौचमनायतिं चैते पुरुषस्य जनयन्ति ॥**

न कामानिति । प्रधानयोरिति । ताभ्यां कामोत्पत्तेः । प्रत्यनीकत्वादिति । कामासक्ततया धर्मस्यानाचरणात्, तद्विलोमाचरणाच्च । अर्थस्यानर्जनात् । मद्यभाटीपारितोषिकासद्व्ययाद्विरोधवर्ती कामः । सतामिति । ज्ञानवृद्धास्तपोवृद्धाः सन्तः कामासक्तं त्यजन्ति । तेषां च प्रत्यनीकवर्तिनोऽनर्थजना नटनर्तकगायनादयः । तैः संपर्कं जनयन्ति । असद्व्यवसायमशोभनव्यवसायं निशीथाभिसरणप्राकारलङ्घनादिकम् । अशौचं यथोक्तशौचाकरणात् । अनायतिमप्रभावं कामगर्दभ इति ।

**तथा प्रमादं लाघवमप्रत्ययमग्राह्यतां च ।**

तथा प्रमादं शरीरोपघातं परदारादिगमनादौ । लाघवं तारल्यं सहसा प्रवर्तनात् । अप्रत्ययमविश्वासमसत्संगमात् । अग्राह्यतां हेयतामपूज्यवृत्तित्वात् ।

---

१. 'एव' इति पुस्तकान्तरे नास्ति. २. 'भद्रमिति' पा०. ३. 'धर्मार्थयोरेव प्रधानयोरन्येषाम्' पा०. ४. 'प्रत्यनीकवर्तित्वात्' पा०. ५. 'चैव पुरुषस्यैते' पा०. ६. 'आभ्याम्' पा०. ७. 'प्रत्यनीकवर्तित्वादिति' पा०. ८. 'मद्यमांस–' पा०. ९. 'दान–' पा०.

**[1]बहवश्च कामवशगाः सगणा एव विनष्टाः श्रूयन्ते ॥**

बहवोऽनेके कामायत्ता विनष्टा इति संबन्धः । सगणाः । न केवलं सेवितारः, तत्परिवारा अपीत्यर्थः ।

तथा च दृढीकरणार्थमाख्यानकम्—

**यथा दाण्डक्यो नाम भोजः कामाद्ब्राह्मणकन्याम[2]भिमन्यमानः सबन्धुराष्ट्रो विननाश ॥**

दाण्डक्य इति संज्ञा । भोज इति भोजवंशजः । [3]अभिमन्यमानोऽभिगच्छन् । स हि मृगयां गतो भार्गवकन्यामाश्रमपदे दृष्ट्वा जातरागो रथमारोप्य जहार । ततो भार्गवः समित्कुशानादायागत्य तामपश्यन्नभिध्याय च यथावृत्तं राजानमभिशशाप । ततोऽसौ सबन्धुराष्ट्रः पांसुवर्षेणावष्टब्धो ननाश । तत्स्थानमद्यापि दण्डकारण्यमिति गीयते ।

**देवराजश्चाहल्यामतिवलश्च[4] कीचको द्रौपदीं रावणश्च[5] सीताम[6]परे चान्ये च बहवो दृश्यन्ते कामवशगा विनष्टा इत्यर्थचिन्तकाः ॥**

देवराज इन्द्रोऽहल्यामभिमन्यमान इत्येव । स हि गौतमाश्रमे तद्भार्यामहल्यां चकमे । ततः समित्कुशानादायागते गौतमे तद्भार्याहल्या शक्रं गर्भस्थमकरोत् । तदैवोपनिमन्त्रणेन गौतमः सभार्य एवाश्रमान्तरं गतः । [7]ततस्तेन योगचक्षुषा समुपलब्धेन्द्रागमनेनासौ समुपनायितमासनत्रयं दृष्ट्वा चासौ किमेतद्भार्याद्वि[8]तीयस्य ममेति जाताशङ्को ध्यानेन यथावृत्तमवलोक्य रोषात्सहस्रभगो भवेति शशाप । ततोऽसौ देवराजोऽपि कामाद्विनाशप्रख्यां तादृशीमवस्थामाससाद । यस्याद्यापि [9]कलङ्कोऽहल्यायै जार इति नास्त्येति । अतिवलो नागसहस्रवलत्वात् । सोऽपि कामाद्द्रौपदीमभिलपन्भीमसेनेन हत इति प्रतीतमेतत् । विनश्यन्तो दृश्यन्त इत्यत्र प्रत्यक्षं प्रमाणम् । किं तत्र पूर्ववृत्तोदाहरणेनेति मन्यन्ते ।

---

१. 'बहवः कामवशगाः सगणा एवाभिनष्टाः' पा०. २. 'कन्यकाम्' पा०. ३. 'अभिगम्यमानः' पा०. ४. 'च' इति पुस्तकान्तरे नास्ति. ५. 'च' इति पुस्तकान्तरे नास्ति. ६. 'एते' पा०. ७. 'ततोऽनेन' पा०. ८. 'द्वितीयस्येति' पा०. ९. 'कलङ्कमाहुरहल्यायै जार इति नाम'; 'कलङ्कमहल्यायै जार इति' पा०.

अत्र संप्रतिपत्तिमाह—

**शरीरस्थितिहेतुत्वादाहारसधर्माणो हि कामाः। फलभूताश्च धर्मार्थयोः॥**

आहारसधर्माण इत्याहारतुल्याः। यथाहारोऽजीर्णादिदोषं जनयन्नपि प्रतिदिने शरीरस्थितये सेव्यते तथा कामोऽपि। अन्यथा रागोद्रेकादुन्मादादिदोषेण न शरीरस्थितिरिति। फलभूताश्च धर्मार्थयोरिति। सुखार्थं धर्मार्थयोः सेवा। तदसेवायां तौ वन्ध्यभूतौ केवलमायासफलौ स्याताम्। तथा चोक्तम्—'धर्ममूलः स्मृतः स्वर्गस्तत्रापि परमाः स्त्रियः। गृहस्थधर्मो दुर्वारो नराणां धर्मयत्नजः॥ हिताश्चापत्यसंतानैः स्त्रियस्त्विह परत्र च। परं संप्रत्ययो भोगप्रकर्षार्थाय वै स्त्रियः॥'

यद्येवं तर्हि दोषप्रसङ्ग इत्यत आह—

**बोद्धव्यं तु दोषेष्विव। नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते। नहि मृगाः सन्तीति यवा नोप्यन्त इति वात्स्यायनः॥**

बोद्धव्यमिति। अजीर्णादिदोषेष्विव बोद्धव्यम्। प्रतिविधानमिति शेषः। इदमाह—यत्र कचन दोषप्राप्तिरवश्यं सेव्यश्च कामस्तं दोषप्रतिविधानेन सेवेतेति। अयं च न्यायो लोकेष्वप्यस्तीति दर्शयति—नहीत्यादिना। तथा चोक्तम्—'तृणानामिव हि व्यर्थं नृणां जन्म सुखद्विषाम्। दोषास्तु परिहर्तव्या इत्याचार्यैः स्थिरीकृतम्॥'

अनुष्ठानलक्षणायाः प्रतिपत्तेः फलमाह—

**भवन्ति चात्र श्लोकाः—**

**एवमर्थं च कामं च धर्मं चोपाचरन्नरः।**
**इहामुत्र च निःशल्यमत्यन्तं सुखमश्नुते॥**

एवमिति। यथोक्तेन न्यायेन प्रतिष्ठापिताचरणमर्थं प्रागाचरणतः। ततोऽधिगतार्थः कामं धर्मं च। इहामुत्र चेति। इहलोके परलोके च निः-

१. 'तत्र' पा०. २. 'शरीरस्य स्थितये' पा०. ३. 'भोगः' पा०. ४. 'तर्हि' इति पुस्तकान्तरे नास्ति. ५. 'शेषास्तु' पा०. ६. 'भवन्ति चात्र श्लोकाः' इति पुस्तकान्तरे नास्ति.

शल्यं सुखमश्नुत इति । अनुतापाभावात्समग्रो मे पुरुषार्थ इति मनः प्रीतिमवाप्नोतीत्यर्थः । त्रिवर्गं ह्यसेवमानस्य तावदिहलोके नैहिकं सुखमवाप्तमिति विप्रतीसारम्, दुरन्तकामानुबन्धनान्नापि परलोके, न मया मूढेन प्राकृतमवदातं कर्मेति धर्मानुषक्तत्वात् । नास्तिकनिरीहकसुखद्विषस्त्वेकाङ्गविकलत्वात्सशल्यमवाप्नुवन्तीति मन्यते ।

'परस्परस्यानुपघातकमन्योन्यानुबद्धम्' इत्युक्तम्, तस्यैव संग्रहः श्लोकद्वयेन—

किं स्यात्परत्रेत्याशङ्का कार्ये यस्मिन्न जायते ।
न चार्थघ्नं सुखं चेति शिष्टास्तत्र व्यवस्थिताः ॥
त्रिवर्गसाधकं यत्स्याद्द्वयोरेकस्य वा पुनः ।
कार्यं तदपि कुर्वीत न त्वेकार्थं द्विबाधकम् ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे
त्रिवर्गप्रतिपत्तिर्द्वितीयोऽध्यायः ।

किं स्यादिति । उपघातः पूर्वेणोत्तरस्य, उत्तरेण वा पूर्वस्य । तत्र यस्मिन्कार्ये[3]ऽर्थोऽपि साधयिष्यते यस्तत्र किं स्यात् । अपायोऽनपायो वेत्याशङ्का नास्ति । धर्माबाधनात् । यच्च सुखं नार्थं हन्ति तस्मिन्नर्थे सुखे च शिष्टास्त्रिवर्गविदः स्थिताः । अनुष्ठातुम् । पूर्वबाधके तु न स्थिताः । यस्तु दानेन धर्मोऽर्थं बाधते ब्रह्मचर्येण च विद्याग्रहणमर्थः कामं तस्मिन्नुत्तरबाधके स्थिता इत्यर्थोक्तम् । 'अपि नाम त्रिवर्गेऽस्मिन्सेवेतोत्तरबाधकम् । पूर्वस्य तु प्रधानत्वान्न सेव्यः पूर्वबाधकः ॥' इति । त्रिवर्गसाधकमिति । धर्मादीनां यदन्यतमं कार्यमनुष्ठेयमात्मन इतरयोस्तु साधकं तत्कुर्वीत । अयमुत्तमः पक्षो द्व्यनुबन्धेऽन्तर्भूतः । द्वयोर्वैकस्येति । त्रयाणां यद्द्वयोरात्मन इतरस्य च साधकं तदपि कुर्वीतेति । अयं मध्यमः पक्ष एकानुबन्धेऽन्तर्भूतः । एतदुभयमपि प्रागुदाहृतम् । यदेकस्यात्मन एव साधकं तदपि कुर्वीतेति । अयं जघन्यो निरनुबन्धेऽन्तर्भूतः । तद्यथा—प-

१. 'प्रतीतिम्' पा०. २. 'त्रयाणा साधकम्' पा०. ३. 'कार्येऽर्थः' पा०. ४. 'अनुष्ठीयमानेन' पा०. ५. 'तथा' पा०.

ज्ञानां महायज्ञानां प्रवर्तनं धर्मो निरनुबन्धः । मृन्याद्यर्जनमर्थो निरनुबन्धः । परिचारिकायामभिप्रेतायां कामो निरनुबन्धः । अस्मिन्पक्षे परस्परस्यानुपघातकं प्रदर्शयन्नाह—न त्वेकार्थं द्विबाधकमिति । एक आत्मैवार्थः प्रयोजनं यस्य तदेकार्थं द्वयोर्बाधकं न कुर्यात् । अतिदानेन धर्मोऽर्थं बाधते कामं च बाधते । तपसा चात्यन्तसेवितेन कामं बाधित्वा शरीरक्षयादर्थमुपहन्ति । तथार्थस्तादात्मिक उपादीयमानः पुरुषवज्र इव धर्मकामौ बाधते । कामस्तूत्तमवर्णासु दाण्डक्यस्येवान्यत्र वात्यासेवित उभयं बाधते । यदेकस्य साधकमन्यस्य बाधकं तत्पूर्वोत्तरबाधापेक्षया कुर्यात् । तच्च यथोक्तं प्रागिति ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरह-
कातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां
साधारणे प्रथमेऽधिकरणे त्रिवर्गप्रतिपत्तिर्द्वितीयोऽध्यायः ।

---

तृतीयोऽध्यायः ।

एवं प्रतिपन्नत्रिवर्गस्य सिद्धौ प्रथम उपायो यद्विद्याग्रहणम् । अगृहीतविद्यस्यानन्तरव्यापारासंभवात् । इति विद्यासमुद्देश उच्यते । समुद्देशश्च संक्षेपाभिधानम् । निर्देशश्च शास्त्रान्तरादुपदेशाच्चापेक्षणीयः ।

यथा च तासां ग्रहणं तथा दर्शयन्नाह—

**धर्मार्थाङ्गविद्याकालाननुपरोधयन्कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत ॥**

धर्मेत्यादि । तत्र धर्मविद्या श्रुतिः स्मृतिश्च । अर्थविद्या वार्ताशास्त्रम् । तयोरङ्गविद्या दण्डनीतिः । योगक्षेमसाधनात् । आन्वीक्षकी तु तत्त्वनिश्चयहेतुत्वात् । तासां प्रधानानां यथास्वमध्ययनकालाननुपरोधयन्नहापयन्, अन्तरान्तरा कामसूत्रमिदमेव तदङ्गविद्याश्च गीतादिका अधीयीत पाठश्रवणाभ्याम् ।

**प्राग्यौवनात्स्त्री । प्रत्ता च पत्युरभिप्रायात् । योषितां शास्त्रग्रहणस्याभावादनर्थकमिह शास्त्रे स्त्रीशासनमित्याचार्याः ॥**

---

१. 'अपरस्य' पा०. २. 'न वा' पा०. ३. 'व्यापारान्तरासंभवात्' पा०. ४. 'च' इति पुस्तकान्तरे नास्ति. ५. 'तु' इति पुस्तकान्तरे नास्ति. ६. 'अनुभयान्' पा०.

प्रागिति । प्राग्यौवनात्स्त्री कामसूत्रं तदङ्गविद्याश्चाधीयीत पितुर्गृह
। तरुण्याः परिणीतत्वादस्वतन्त्रायाः कुतोऽध्ययनम् । 'युवतिः' इति
न्तरम् । तत्र स्त्रीपर्यायो द्रष्टव्यः । प्रत्ता चेति । प्रकर्षेण दत्ता ।
ायामेव 'अच उपसर्गात्तः' इति तत्त्वम् । ऊढेत्यर्थः । त्रिविधं दानम्,
सा वाचा कर्मणा चेति । पत्युरभिप्रायादिति । यदा पत्यानुज्ञाता त-
ीयीत । अन्यथा स्वैरिणीत्याशङ्कनीया स्यात् । शास्त्रग्रहणस्याभावा-
ते । तासां शास्त्रानधिकारात्, शास्त्रं ग्रहीतुमसमर्थत्वाच्च । इहेति ।
मशास्त्रे स्त्रियमुद्दिश्य शासनम्, इदं कार्यमिदं नेत्येवंरूपम्, उपदेष्टुमन-
इत्याचार्या मन्यन्ते ।

प्रयोगग्रहणं त्वासाम् । प्रयोगस्य च शास्त्रपूर्वकत्वादिति वा-
यनः ॥

प्रयोगग्रहणमिति । प्रयुज्यत इति प्रयोगोऽर्थस्तद्ग्रहणं तासाम् ।
ङ्गेभ्यो मा भूच्छास्त्रग्रहणम् । स च योषिदुपयोगीति शास्त्रेणावेदितः
मन्यैरुपदिश्यते तस्मान्नानर्थकं स्त्रीशासनम् ।

तन्न[1] केवलमिहैव । सर्वत्र[2] हि लोके कतिचिदेव शास्त्रज्ञाः । स-
नविषयश्च प्रयोगः ॥

तन्न केवलमिहैवेति । तत्प्रयोगग्रहणं न केवलमिहैवास्मिन्नेव काम-
े । सर्वत्र हीति । हिशब्दो हेतौ । सर्वेषु व्याकरणज्योतिःशास्त्रा-
दृश्यते, तदेव दर्शयति—लोक इत्यादिना । कतिचिदेव शास्त्रज्ञा ये
हणसमर्थाः । तेभ्यः समर्थैरसमर्थैश्च प्रयोगो गृह्यत इति सर्वजनवि-
। प्रयोगग्रहणं च शास्त्रग्रहणात्प्रधानम् । गृहीतस्यापि शास्त्रस्य प्र-
ज्ञानफलत्वात् ।

प्रयोगस्य च दूरस्थमपि शास्त्रमेव हेतुः ॥

प्रयोगस्य चेति । गृहीतशास्त्रस्य दूरस्थमपीति शास्त्रज्ञजना[3]धार-
। विप्रकृष्टमपि शास्त्रं पारम्पर्येण हेतुः । एकः शास्त्रज्ञः प्रयोगं
ति, ततोऽन्यः, ततोऽन्य इति ।

---

१. 'तत्' इति पुस्तकान्तरे नास्ति. २. 'सर्वत्रैव' पा०. ३. 'जनसाध्यत्वात्' पा०.

अत्र[1] दृष्टान्तमाह—

**अस्ति व्याकरणमित्यवैयाकरणा अपि याज्ञिका ऊहं[2] क्रतुषु प्रयुञ्जते ॥**

अस्तीति। शब्देनाचोदितार्थस्य युक्त्या विमृश्य च[3] स्थापनमूहः। स च प्रातिपदिकलिङ्गवचनान्तरोपादानेन व्याकरणे उक्तः। तद्व्याकरणमस्ति। यतोऽयमूहः पारम्पर्याशयात्, इत्यवैयाकरणा अपि याज्ञिकास्तं क्रतुषु प्रयुञ्जते। तद्यथा—'आग्नेयमष्टाकपालं पुरोडाशं निर्वपेत्' इति प्रकृतिप्रयोगः। 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इति विकृतिप्रयोगः। अत्र सूर्यमुद्दिश्योहः। निर्वपेदिति लिङ्गात्। सौर्यं चरुं निर्वपेदाग्नेयवदिति।

**अस्ति ज्यौतिषमिति पुण्याहेषु कर्म कुर्वते ॥**

पुण्याहेष्विति। अस्ति ज्यौतिषमित्यज्यौतिषिका अपि कुतश्चिदुपलभ्य शस्तदिनेषु कर्म कुर्वते। तत्र शास्त्रमेव हेतुः।

**तथाश्वारोहा गजारोहाश्चाश्वान्गजांश्चानधिगतशास्त्रा[4] अपि विनयन्ते ॥**

तथेति। अनधिगतशास्त्रा इति। हस्त्यश्ववैद्यकं हस्तिशिक्षेत्यनधीत्याम्नायात्[5], पोषणदम्यादिकं कर्म कुर्वत इत्येव। तत्रापि शास्त्रमेव हेतुः।

न शास्त्रं एवायं न्यायो यद्दूरस्थमपि हेतुः। किं तु लोकेऽपीत्याह—

**तथास्ति राजेति दूरस्था अपि जनपदा न[6] मर्यादामतिवर्तन्ते तद्वदेतत् ॥**

अस्ति राजेति। दूरस्था अदृष्टराजत्वात्। अस्ति व्यवस्थापकः, यत इयं व्यवस्थेति तद्भयान्न मर्यादामतिक्रामन्ति। तद्वदेतदिति दार्ष्टान्तिके योजनीयम्।

---

१. 'तत्र' पा०. २. 'ऊहान्क्रतुषु साधुशब्दान्' पा०. ३. 'च' इति पुस्तकान्तरे नास्ति. ४. 'हस्त्यारोहाश्वाश्वान्गजांश्चानधीत्यापि शास्त्रम्' पा०. ५. 'हस्तिशास्त्रमनधीत्य' पा०. ६. 'मर्यादां नास्ति-' पा०.

अथवास्त्येव शास्त्रग्रहणं कासांचिदित्याह—

**सन्त्यपि खलु शास्त्रप्रहतबुद्धयो गणिका राजपुत्र्यो महामात्रदुहितरश्च ॥**

सन्त्यपीति । शास्त्रेण प्रहता खिन्ना बुद्धिर्यासामिति । महामात्रेति । महती मात्रा येषामिति सामन्ता महासामन्ता वा । हस्तिशिक्षायां वा तल्लक्षणमनुसर्तव्यम् ।

**तस्माद्वैश्वासिकाज्जनाद्रहसि[1] प्रयोगाञ्छास्त्रमेकदेशं वा स्त्री गृह्णीयात् ॥**

तस्मादिति । यस्मात्प्रयोगग्रहणं शास्त्रग्रहणं चोभयं तस्मात् । वैश्वासिकाद्विश्वासार्हात् । लज्जानिवृत्त्यर्थम् । प्रयोगान्, या शास्त्रग्रहणासमर्था दुर्मेधा । शास्त्रम्, तद्ग्रहणसमर्था मेधाविनी । शास्त्रैकदेशं वा संप्रयोगाङ्गं या मध्यमेधाविनी सा गृह्णीयात् ।

**अभ्यासप्रयोज्यांश्च[3] चातुःषष्टिकान्योगान्[4]कन्या रहस्येकाकिन्यभ्यसेत् ॥**

अभ्यासेति । चातुःषष्टिकांश्चतुःषष्टिभवान् । कन्येति । तदानीमभ्यस्तं यौवने प्रयुज्यते । रहसीति लज्जानिवृत्त्यर्थम् । एकाकिन्याचार्यनिरपेक्षा ॥

कः पुनर्वैश्वासिक इत्याह—

**आचार्यास्तु कन्यानां प्रवृत्तपुरुषसंप्रयोगा[5] सहसंप्रवृद्धा[6] धात्रेयिका । तथाभूता वा निरत्ययसंभाषणा सखी । सवयाश्च[7] मातृष्वसा । विस्रब्धा तत्स्थानीया वृद्धदासी । पूर्वसंसृष्टा वा[8] भिक्षुकी । स्वसा च विश्वासप्रयोगात्[9] ॥**

---

१. 'रहसि' इति पुस्तकान्तरे नास्ति. २. 'प्रयोगात्' पा०. ३. 'च' इति पुस्तकान्तरे नास्ति. ४. 'प्रयोगान्' पा०. ५. 'संयोगा' पा०. ६. 'सहसंवृद्धा' पा०. ७. 'समानवया मातृष्वसा' पा०. ८. 'वा' इति पुस्तकान्तरे नास्ति. ९. 'विश्वासयोगात्' पा०.

आचार्यास्त्विति। तुशब्दो विशेषणार्थः। पुरुषाणां स्वातन्त्र्यात्सुलभा उपदेष्टारः। तत्र प्रवृत्तपुरुषसंप्रयोगा। पुरा चानुभूतरसत्वादभिज्ञा। धात्रेयिका धात्र्या अपत्यम्। सा हि सहसंप्रवृद्धत्वाद्विश्वास्या। इत्येक आचार्यः। तथाभूता चेति। प्रवृत्तपुरुषसंप्रयोगा सखी वा। निरत्ययेति। निर्दोषसंभाषणत्वाद्विश्वास्या। इति द्वितीया। सवयाश्चेति तुल्यवयाः प्रीतिविश्वासयोरास्पदम्। चशब्दात्तथाभूतेति वर्तते। मातृष्वसा मातुर्भगिनी। इति तृतीया। विस्रब्धेति। विश्वस्ता। तत्स्थानीया मातृष्वसृतुल्या मातृभगिनीत्वेन गृहीता वृद्धदासी विदितबहुवृत्तान्ता। इति चतुर्थी। पूर्वसंसृष्टा पूर्वं यया सह प्रीतिरुत्पन्ना सा विश्वास्या भिक्षुकी भिक्षणशीला या काचित्सा देशहिण्डनकुशला। इति पञ्चमी। स्वसा च ज्येष्ठा भगिनी। विश्वासप्रयोगादिति। यदा तत्समक्षं विश्वासात्पुरुषान्तरेण संप्रयुक्ता स्यात्। अन्यथा स्वसा स्वसारमपि नेर्ष्यया शिक्षयति। इति षष्ठी। इत्युक्तम्। ग्रहणं कामसूत्रं तदङ्गविद्याः। तासामङ्गविद्यानामयमुद्देशः। शास्त्रान्तरे चतुःषष्टिर्मूलकला उक्ताः। तत्र कर्माश्रया चतुर्विंशतिः। तद्यथा—गीतम्, नृत्यम्, वाद्यम्, लिपिज्ञानम्, वचनं चोदारम्, चित्रविधिः, पुस्तकर्म, पत्रच्छेद्यम्, माल्यविधिः, आस्वाद्यविधानम्, रत्नपरीक्षा, सीव्यम्, रङ्गपरिज्ञानम्, उपकरणक्रिया, भानविधिः, आजीवज्ञानम्, तिर्यग्योनिचिकित्सितम्, मायाकृतं पाषण्डसमयज्ञानम्, क्रीडाकौशलम्, लोकज्ञानम्, वैचक्षण्यम्, संवाहनम्, शरीरसंस्कारः, विशेषकौशलं चेति। द्यूताश्रया विंशतिः। तत्र निर्जीवाः पञ्चदश। तद्यथा—आयुःप्राप्तिः, अक्षविधानम्, रूपसंख्या, क्रियामार्गणम्, बीजग्रहणम्, नयज्ञानम्, करणादानम्, चित्राचित्रविधिः, गूढराशिः, तुल्याभिहारः, क्षिप्रग्रहणम्, अनुप्राप्तिलेखास्मृतिः, अग्निक्रमः, छलव्यामोहनम्, ग्रहदानं चेति। सजीवाः

१. 'इत्येकसबन्ध आचार्यः' पा०. २. 'भगिनीति गृहीता' पा०. ३. 'च-हुवृत्ता' पा०. ४. 'चोदारचित्रविधिः' पा०. ५. 'आश्रव्यविधानम्' पा०. ६. 'स्ने-हपरीक्षा' पा०. ७. 'यानविधि' पा० ८. 'वैवक्षसंवाटनम्' पा०.

पञ्च—उपस्थानविधिः, युद्धम्, रुतम्, गतम्, नृत्तं चेति । शयनोपचारिकाः षोडश । तद्यथा—पुरुषस्य भावग्रहणम्, स्वरागप्रकाशनम्, प्रत्यङ्गदानम्, नखदन्तयोर्विचारौ, नीवीस्रंसनम्, गुह्यस्य संस्पर्शनानुलोम्यम्, परमार्थकौशलम्, हर्षणम्, समानार्थताकृतार्थता, अनुप्रोत्साहनम्, मृदुक्रोधप्रवर्तनम्, सम्यक्क्रोधनिवर्तनम्, क्रुद्धप्रसादनम्, सुप्तपरित्यागः, चरमस्वापविधिः गुह्यगूहनमिति । चतस्र उत्तरकलः । तद्यथा—साश्रुपातं रमणाय शापनम्, स्वशपथक्रिया, प्रस्थितानुगमनम्, पुनः पुनर्निरीक्षणं च । इति चतुःषष्टिर्मूलकलाः । आस्वेवान्तरनिविष्टानामन्तरकलानामष्टादशाधिकानि पञ्चशतान्युक्तानि । तत्र कर्मद्यूताश्रयाः प्रायश आबालं गच्छन्ति । ता एवान्यथा विभज्य चतुःषष्टिरप्रोक्ता । यास्तु शयनोपचारिका उत्तरकलाश्च ताः प्रायशस्तन्त्रस्याङ्गतां[3] प्रतिपद्यन्ते । इति पाञ्चालिक्यामेव चतुःषष्ट्यामन्तरकला वेदितव्याः । ताश्च यथाप्रस्तावं वक्ष्यन्ते ।

तत्राप्यौपयिकीं[4] चतुःषष्टिमाह—

गीतम्[5], वाद्यम्[6], नृत्यम्[7], आलेख्यम्, विशेषकच्छेद्यम्, तण्डुलकुसुमबलिविकाराः[8], पुष्पास्तरणम्[9], दशनवसनाङ्गरागः[10], मणिभूमिकाकर्म, शयनरचनम्, उदकवाद्यम्, उदकाघातः[11], चित्राश्च[12] योगाः, माल्यग्रथनविकल्पाः, शेखरकापीडयोजनम्[13], नेपथ्यप्रयोगाः[14], कर्णपत्रभङ्गाः, गन्धयुक्तिः, भूषणयोजनम्,

१. 'प्रदर्शनम्'; 'प्रमर्दनम्' पा०. २. 'सुप्तापरित्यागः'; 'शय्यापरित्यागः' पा०. ३. 'तत्तस्य' पा०. ४. 'औपकीम्' पा०. ५. 'तद्यथा–गीतम्' पा०. ६. पुस्तकान्तरे 'वाद्यम्' इत्यस्य स्थाने 'नाट्यम्' इत्यस्ति. ७. भास्करनृसिंहशास्त्रिप्रणीतायां वृत्तौ मूलपुस्तकान्तरे च 'नृत्यम्' इत्यस्मादग्रे 'नाट्यम्' इत्यधिकमस्ति. ८. वृत्तिकारस्तु 'बालिविकाराः' इति पठति. व्याख्याति च—'तण्डुलाश्च कुसुमानि च, तैर्बालिविकाराः कर्णभूषाविशेषरचनाः' इति. ९. 'पुष्पास्तरकः' पा०. १०. 'रागाः' पा०. ११. 'उदकघातः' पा०. १२. 'चित्रा योगाः' पा०. १३. 'शेखरापीडयोजना'; 'शेखरापीडयोजनम्' पा०. १४. 'संप्रयोगाः'; 'योगाः' पा०.

ऐन्द्रजालाः[1], कौचुमाराश्च योगाः[2], हस्तलाघवम्, विचित्रशाकयूपभक्ष्यविकारक्रिया[3], पानकरसरागासवयोजनम्[4], सूचीवानकर्माणि[5], सूत्रक्रीडा, वीणाडमरुकवाद्यानि[6], प्रहेलिका, प्रतिमाला, दुर्वाचकयोगाः[7], पुस्तकवाचनम्, नाटकाख्यायिकादर्शनम्, काव्यसमस्यापूरणम्, पट्टिकावेत्रवानविकल्पाः[8], तक्षकर्माणि[9], तक्षणम्, वास्तुविद्या, रूप्यरत्नपरीक्षा[10], धातुवादः, मणिरागाकरज्ञानम्[11], वृक्षायुर्वेदयोगाः, मेषकुक्कुटलावकयुद्धविधिः, शुकसारिकाप्रलापनम्, उत्सादने संवाहने केशमर्दने च कौशलम्[12], अक्षरमुष्टिकाकथनम्, म्लेच्छितविकल्पाः[13], देशभाषाविज्ञानम्[14], पुष्पशकटिका, निमित्तज्ञानम्[15], यन्त्रमातृका, धारणमातृका, संपाठ्यम्[16], मानसी[17], काव्यक्रिया, अभिधानकोषः[18], छन्दोज्ञानम्[19], क्रियाकल्पः[20], छलितकयोगाः, वस्त्रगोपनानि, द्यूतविशेषाः[21], आकर्षक्रीडा, बालक्रीडनकानि[22], वैनयिकीनां[23]

---

१. 'ऐन्द्रजालिकम्'; 'इन्द्रजालम्'; 'ऐन्द्रजाल.' पा०. २. 'कुचुमाराश्च योगाः'; 'कौचुमारयोगाः' पा०. ३. 'चित्रशाकपूपभक्ष्यविकारक्रियाः' पा०. ४. 'पानकरसासवरागयोजनानि' पा०. ५. 'सूचीवाप–'; 'सूचीवाण–'; 'सूचीसंधान–' पा०. पुस्तकान्तरे च 'सूचीवानकर्मसूत्रक्रीडा' इत्येक पदम ६. 'वीणाडमरुकवाद्यानि' इति पुस्तकान्तरे नास्ति. ७. 'दुर्वम्नयोगा' पा०. ८ 'पठिकावेत्रवाणविकल्पाः' पा०. ९. 'तर्कुकर्माणि' पा०. १०. 'सुवर्णरूप्य–' पा०. ११. वृत्तिकारस्तु 'मणिरागज्ञानम्' इति, 'आकरज्ञानम्' इति च पृथक्कृत्वा द्वय पठति. अन्येष्वपि केषुचित्पुस्तकेषु कलाद्वयमेव दृश्यते. १२. मूलपुस्तकान्तरे 'उत्सादनम्' इति, 'केशमार्जनकौशलम्' इति च पृथक्कलाद्वय पठ्यते. वृत्तिकारस्तु—'उत्सादने केशमर्दने च कौशलम्' इति पठति. १३. 'म्लेच्छितक–' पा०. १४. 'देशभाषाज्ञानम्' पा०. १५. वृत्तिकारस्तु 'निमित्तज्ञानम्' इति 'द्यूतविशेषाः' इत्यस्मादनन्तरं पठति. १६. 'संवाच्यम्' पा०. १७. 'मानसी चिन्ता' पा०. पुस्तकान्तरे 'मानसी काव्यक्रिया' इति समुदित पठ्यते. १८. मूलपुस्तकेषु वृत्तौ च 'अभिधानकोषच्छन्दोज्ञानम्' इति समुदित पठ्यते. भाति चोचितमेवमेव. १९. 'छन्दोविज्ञानम्' पा०. २०. 'क्रियाविकल्पा.' पा०. २१. 'द्यूतविशेषः' पा०. २२. 'बालकक्रीडितकानि' पा०. २३. 'वैनायिकीना विद्यानां ज्ञानम्'. 'वजयिकीना विद्यानां ज्ञानम्'; 'वैतालिकीना विद्याना ज्ञानम्' पा०. पुस्तकान्तरे 'वैतालिकीनाम्' इत्यस्य स्थाने 'वैयासिकीनाम्' इति पाठोऽस्ति.

**वैजयिकीनां व्यायामिकीनां च विद्यानां ज्ञानम्, इति चतुः-षष्टिरङ्गविद्याः कामसूत्रस्यावयविन्यः ॥**

गीतमित्यादि। गीतवाद्यनृत्यालेख्यानि चत्वारि प्रायः स्वशास्त्रविहित-प्रपञ्चानि। तथापि संक्षेपतः कथ्यन्ते—'स्वरगं पदगं चैव तथा लयगमेव च। चेतोवैधानगं चैव गेयं ज्ञेयं चतुर्विधम् ॥ घनं च विततं वाद्यं ततं सुषिरमेव च। कांस्यपुष्करतन्त्रीभिर्वेणुना च यथाक्रमम् ॥ करणान्यङ्गहाराश्च विभावो भाव एव च। अनुभावो रसाश्चेति संक्षेपान्नृत्यसंग्रहः ॥' तद्विविधम्, नाट्यमनाट्यं चेति। तथोक्तम्—'स्वर्गे वा मर्त्यलोके वा पाताले वा निवासिनाम्। कृतानुकरणं नाट्यमनाट्यं नर्तकाश्रितम् ॥' इति। तन्त्रान्तरे तु नृत्यभेदज्ञापनार्थमेव पृथङ्नाट्यकलोक्तेति विज्ञेयम् ॥ आलेख्यमिति। 'रूपभेदाः प्रमाणानि भावलावण्ययोजनम्। सादृश्यं वर्णिका भङ्ग इति चित्रं षडङ्गकम् ॥' इति। एतानि परानुरागजननान्यात्मविनोदार्थानि च ॥ विशेषकच्छेद्यमिति। विशेषकस्तिलको यो ललाटे दीयते, तस्य भूर्जादिपत्रमयस्यानेकप्रकारं छेदनमेव च्छेद्यम्। पत्रच्छेद्यमिति वक्तव्यम्। वक्ष्यति च—'पत्रच्छेद्यानि नानाभिप्रायाकृतीनि प्रेषयेत्' इति। सत्यम्। विशेषकग्रहणमादरार्थम्। विलासिनीनामतिप्रियत्वात् ॥ तण्डुलकुसुमवलिविकारा इति। अखण्डतण्डुलैर्नानावर्णैः सरस्वतीभवने कामदेवभवने वा मणिकुट्टिमेषु भक्तिविकाराः। तथा कुसुमैर्नानावर्णैर्ग्रथितैः शिवलिङ्गादिपूजार्थं भक्तिविकाराः। अत्र ग्रथनं माल्यग्रथन एवान्तर्भूतम्। भक्तिविशेषेणावस्थापनं कलान्तरम् ॥ पुष्पास्तरणमिति। यन्नानावर्णैः पुष्पैः सूचीवानादिबद्धैरभ्यस्यते तदेव। वासगृहोपस्थानमण्डपादिषु यस्य पुष्पशयनमित्यपरा संज्ञा ॥ दशनवसनाङ्गराग इति। रागशब्दः प्रत्येकं योज्यते। तत्राङ्गरागोऽङ्गमार्ष्टिः कुङ्कुमादिना। रञ्जनविधिरिति वक्तव्ये दशनादिग्रहणमादरार्थम्। विलासिनीनां दश-

---

१. 'इति कामसूत्राङ्गविद्या.' इत्येव पाठो वृत्तौ बहुषु मूलपुस्तकेषु च दृश्यते. २. 'चेतोविधानगं चैव गेयं ब्रूयुः' पा०. ३. 'न नाट्यं नर्तकाश्रयम्' पा०. ४. 'विनोदात्मकानि च' पा०. ५. 'सूचीवाणादि–' पा०.

नादिसंस्कारस्यात्यन्ताभीष्टत्वात्। इति ॥ मणिभूमिकाकर्मेति । मणिभूमिका कृतकुट्टिमा भूमिः । ग्रीष्मे शयनापानकार्थं तस्यां मरकतादिभेदेन करणम् ॥ शयनरचनमिति । शयनीयस्य कालापेक्षया रक्तविरक्तमध्यस्थाभिप्रायादाहारपरिणतिवशाच्च रचनम् ॥ उदकवाद्यमिति । उदके मुरजादिवद्वाद्यम् ॥ उदकाघात इति । हस्तयन्त्रमुक्तैरुदकैस्ताडनम् । तदुभयं जलक्रीडाङ्गम् ॥ चित्राश्च योग इति । नानाप्रकारदौर्भाग्यैकेन्द्रियपलितीकरणादयः । ईर्ष्यया परातिसंधानार्थाः । तानौपनिषदिके वक्ष्यति । एते च कौचुमारयोगेषु नान्तर्भवन्तीति पृथगुक्ताः । कुचुमारेण तेषामनुक्तत्वात्॥ माल्यग्रथनविकल्पा इति । माल्यानां मुण्डमालादीना देवतापूजनार्थं नेपथ्यानां ग्रथनविकल्पाः ॥ शेखरकापीडयोजनमिति । ग्रथनविकल्प एवायम् । किं तु योजनं कलान्तरम् । तत्र शेखरकस्य शिखास्थानेऽवलम्बनन्यासेन परिधापनात् । आपीडस्य च मण्डलाकारेण ग्रथितस्य कौष्ठिका(?)योगेन परिधापनात् । नानावर्णैः पुष्पैर्विरचनं योजनम् । पुनर्विरचनवचनमादरार्थम् । तदुभयं नागरकस्य प्रधानं नेपथ्याङ्गम् ॥ नेपथ्यप्रयोगा इति । देशकालापेक्षया वस्त्रमाल्याभरणादिभिः शोभार्थं शरीरस्य मण्डनाकाराः ॥ कर्णपत्रभङ्गा इति । दन्तशङ्खादिभिः कर्णपत्रविशेषा नेपथ्यार्थाः ॥ गन्धयुक्तिरिति । स्वशास्त्रविहितप्रपञ्चा प्रतीतप्रयोजनैव ॥ भूषणयोजनमिति । अलंकारयोगः । स द्विविधः, संयोज्योऽसंयोज्यश्च । तत्र संयोज्यस्य कण्ठिकेन्द्रच्छन्दादेर्मणिमुक्ताप्रवालादिभिर्योजनम् । असंयोज्यस्य कटककुण्डलादेर्विरचनं योजनम् । तदुभयं नेपथ्याङ्गम् । न तु शरीरे भूषणयोजनम् । तस्य नेपथ्यप्रयोगा इत्यनेनैव सिद्धत्वात् ॥ ऐन्द्रजाला इति । ईन्द्रजालादिशास्त्रप्रभवा योगाः । सैन्यदेवालयादिदर्शनादहंभावविस्मापनार्थाः ॥ कौचुमारा इति । कुचुमारस्यैते सुभगंकरणादयः उपायान्तरासिद्धसाधनार्थाः ॥ हस्तलाघवमिति । सर्वकर्मसु लघुहस्तता ।

---

१. 'कारणम्' पा०.　२. 'परामिसंधानार्थाः' पा०.　३. 'काष्ठिकायोगेन' पा०.
४. 'शङ्खभङ्गादिभिः' पा०.　५. 'कुण्डलादिरचनम्' पा०.　६. 'ऐन्द्रजालादि-' पा०.
७. 'सैन्यवलयादि-' पा०.

कालातिपातनिरासार्थम् । द्रव्यहानिषु वा लाघवं क्रीडार्थे विस्मापनार्थे च ॥ विचित्रशाकयूषभक्ष्यविकारक्रिया, पानकरसरागासवयोजनमिति । चतुर्विध आहारः, भक्ष्यभोज्यलेह्यपेयमिति । तत्र भोज्यम्—भक्तव्यञ्जनयोर्व्यञ्जनराधनं प्रायशो न सुज्ञानमिति व्यञ्जनाग्र्यस्य शाकस्योपादानेन दर्शयति । तत्र शाकं दशविधम् । यथोक्तम्—'मूलपत्रकरीराग्रफलकाण्डप्ररूढकम् । त्वक्पुष्पं कण्टकं चेति शाकं दशविधं स्मृतम् ॥' पेयं द्विविधम्, अग्निनिष्पाद्यमितरच्च । तत्र पूर्वं यूषाख्यम् । तच्च द्विविधम्, मुद्गादिनिर्यूहकृतं क्वाथरसं च । भक्ष्यं खण्डखाद्यादि । एषां नानाप्रकाराणां क्रिया पाकविधानेन निष्पादनम् । [1]यदनग्निनिष्पादनं पेयं तद्द्विविधम्, संधानकृतमितरच्च । तत्राद्यं द्रावितमद्रावितं च । तत्र यद्गुडतिन्तिडिकादिजलेन [2]संयोज्य क्रियते तद्द्रावितं पानकाख्यम् । [3]यदद्रावकौषधेन तालमोचाफलानि संयोज्य नि[4]ष्पाद्यते तदद्रावितं रसाख्यम् । आसवग्रहणेन संधानमुपलक्षयति । तन्मृदुमध्यतीक्ष्णसंधानयोजनात्तथाविधमेव निष्पाद्यते । रागग्रहणं लेह्यं सूचयति । तस्य त्रैविध्यात् । [5]तथा चोक्तम्—'रागो रागविधानज्ञैर्लेह्यश्चूर्णो द्रवः स्मृतः । लवणाम्लकटुस्वाद ईषन्मधुरसंयुतः ॥' इति । एतच्चतुर्विधमास्वाद्यकलायाः प्रपञ्चितं शरीरस्थित्यर्थम् । योगविभागोऽग्निजानग्निजकर्मदर्शनार्थः । तत्र पाकेन [6]शाकादिक्रिया । विना पाकेन पानकादियोजनम् । [7]अन्यथा ह्यास्वाद्यविधिरित्युक्तं स्यात् । तस्मात्कर्मभेदादास्वाद्यविधानज्ञोऽपि द्विविधः । तद्वशादेकापि कला द्विधाकृत्योक्ता ॥ सूचीवानकर्माणीति । सूच्या यत्संधानकरणं तत्सूचीवानं त्रिविधम्—सीवनम्, [8]ऊतनम्, विरचनम् । तत्राद्यं कञ्चुकादीनाम् । द्वितीयं त्रुटितवस्त्राणाम् । तृतीयं कुथास्तरणादीनाम् । इयं प्रतीतार्थैव ॥ सूत्रक्रीडेति । नालिकासंचारनालादिसूत्राणामन्यथान्यथा दर्शनम् ।

---

१. 'यदग्नि–' पा०. २. 'प्रयोज्य' पा. ३. 'यद्द्रावकौषधेन' पा०. ४. 'क्रियते' पा०. ५. 'यथोक्तम्' पा०. ६. 'शाकादिक्रियां विना' पा०. ७. 'अन्यथास्वाद्य–' पा०. ८. 'भूनयनम्' पा०. ९. 'तालादि–' पा०.

छित्त्वा दग्ध्वा च पुनरच्छिन्नत्वादग्ध्वा दर्शनम् । तच्चाङ्गुलिन्यासात् । देवकुलादिदर्शनम् । इत्येवंप्रकारा क्रीडार्थैव ॥ वीणाडमरुकवाद्यानीति । वादित्रान्तर्गतत्वेऽपि तन्त्रीवाद्यं प्रधानम् । तत्रापि वीणावाद्यम् । डमरुकवाद्यमावश्यकार्थम् । बालोपक्रमहेतुत्वाद्दुर्विज्ञेयत्वाच्च । ततो ह्यक्षराणि स्पष्टान्युच्चार्यमाणानि श्रूयन्ते ॥ प्रहेलिकेति । लोकप्रतीता क्रीडार्था वादार्था च ॥ प्रतिमालेति । यस्या अन्त्याक्षरिकेति प्रतीतिः । सा क्रीडार्था वादार्था च । यथोक्तम्—'प्रतिश्लोकं क्रमाद्यत्र संधायाक्षरमन्तिमम् । पठेतां श्लोकमन्योन्यं प्रतिमालेति सोच्यते ॥' इति ॥ दुर्वाचकयोगा इति । शब्दतोऽर्थतश्च दुःखेनोच्यत इति दुर्वाचकम् । तस्य प्रयोगाः क्रीडार्था वादार्थाश्च । यथा काव्यादर्शे—'दंष्ट्राग्रद्ध्यर्या प्राग्यो द्राक्क्ष्मामम्ब्वन्तःस्थामुच्चिक्षेप । देवध्रुट्क्षिद्ध्यृत्विक्स्तुत्यो युष्मान्सोऽव्यात्सर्पाल्केतुः ॥' इति । अस्यार्थः—दंष्ट्राग्रस्य ऋद्ध्या प्राक्पूर्वं द्राक्शीघ्रं क्ष्मां पृथ्वीमम्ब्वन्तःस्थां पातालस्थामुच्चिक्षेपोत्क्षिप्तवान् । देवान्द्रुह्यन्तीति देवद्रुहोऽसुरास्तान्क्षिणोतीति देवध्रुट्क्षित् । हिशब्दः पादपूरणे । ऋत्विग्भिः स्तुत्यः । सर्पानत्तीति सर्पाद्गरुडः स केतुर्ध्वजो यस्येति ॥ पुस्तकवाचनमिति । भरतादिकाव्यानां पुस्तकस्थानां शृङ्गारादिरसापेक्षया गीततः स्वरेण वाचनम् । अनुरागजननार्थमात्मविनोदार्थं च ॥ नाटकाख्यायिकादर्शनमिति । काव्येषु गद्यपद्येषु नाटकस्य बहुप्रपञ्चत्वात्, आख्यायिकायाश्च प्रधानगद्यत्वाद्दर्शनं परिज्ञानमिति । आदरार्थं विशेषाभिधानम् । काव्यदर्शनमिति नोक्तम् । तत्र नाटके दश रूपकाणि । यथोक्तम्—'नाटकमङ्को वीथी प्रकरणमीहामृगो डिमो भाणः । व्यायोगसमवकारौ प्रहसनमिति नाटकविकल्पाः ॥' काव्यसमस्यापूरणमिति । समस्यते संक्षिप्यत इति समस्या । इंहासामान्यात् 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धिर्न भवति । यद्वा 'कृत्यल्युटो बहुलम्' इत्यन्यप्रकृतेरपि यत् । बहुलग्रहणात् । काव्यस्य

---

१. 'न्यासादेव कुलादि–' पा०. २. 'पुनर्विज्ञेयत्वात्' पा०. ३. 'यथा चोक्तम्' पा०. ४. 'पातालस्थाम्' इति पुस्तकान्तरे नास्ति. ५. 'इहासामान्यतरस्याम्' पा०. ६. 'यत्' इति पुस्तकान्तरे नास्ति.

श्लोकस्य समस्या पाद इत्यर्थः। तस्या पूरणं क्रीडार्थं वादार्थं च। तद्यथा काव्यादर्शे—'आश्वासं जनयति राजमुख्यमध्ये' इति। अयं वा(पा)द उद्योगपर्वणि विष्णुयाने त्रिभिः पादैः संग्रथितव्य इति समस्या दत्ता। तत्र त्रयः पादाः—'दौत्येन द्विरदपुरं गतस्य विष्णोर्बन्धार्थं प्रतिविहितस्य धार्तराष्ट्रैः। रूपाणि त्रिजगति भूतिमन्ति रोषादाश्वासञ्जनयतिराजमुख्यमध्ये ॥' इत्यादि। अत्र विष्णोर्बन्धार्थं दुर्योधनादिभिर्मन्त्रः कृतः। त्रिषु लोकेषु भूतिमन्ति रूपाणि [आशु] शीघ्रमासन्बभूवुः। जनस्य सभागतस्य, यतीनां रामकर्णादीनाम्, राजमुख्यानां बाह्लीकप्रभृतीनां च मध्य इति। एताः प्रहेलिकादयः षड् वचनकौशलान्तराः कला इह प्रायश उपयुज्यन्त इति संगृहीताः॥ पट्टिकावेत्रवानविकल्पा इति। पट्टिका छुरिका(?)। पट्टिकाया वानविकल्पाः खट्वाया आसनस्य च वेत्रैर्वानविकल्पाः प्रतीतार्थाः॥ तक्षकर्माणीति। कुन्दकर्माण्यपद्रव्यार्थानि॥ तक्षणमिति। वर्धकिकर्म। शयनासनाद्यर्थम्॥ वास्तुविद्येति। गृहकर्मोपयोगिनी॥ रूप्यरत्नपरीक्षेति। रूप्यमाहतद्रव्यं दीनारादि, रत्नं वज्रमणिमुक्तादि, तेषां गुणदोषमूल्यादिभिः परीक्षा व्यवहाराङ्गम्॥ धातुवाद इति। क्षेत्रवादः। स हि मृत्प्रस्तररत्नधातूनां पातनशोधनमेलनादिज्ञानहेतुरर्थार्थः॥ मणिरागाकरज्ञानमिति। स्फटिकमणीनां रञ्जनविज्ञानमर्थार्थं भूषणार्थं च। पद्मरागादिमणीनामुत्पत्तिस्थानज्ञानमर्थार्थम्॥ वृक्षायुर्वेदयोगा इति। रोपणपुष्टिचिकित्सावैचित्र्यकृतो गृहोद्यानार्थाः॥ मेषकुक्कुटलावकयुद्धविधिरिति। सजीवद्यूतविधानमेतत्। तत्रोपस्थानादिभिश्चतुरङ्गैर्युद्धविधानं क्रीडार्थं वादार्थं च॥ शुकसारिकाप्रलापनमिति। शुकसारिका हि मानुषभाषया प्रलापिताः सुभाषितं पठन्ति संदेशं च कथयन्ति॥ उत्सादने संवाहने केशमर्दने च कौशलमिति। मर्दनं द्विविधम्, पादाभ्यां हस्ताभ्यां च। तत्र पादाभ्यां यन्मर्दनं तदुत्सादनमुच्यते। हस्ताभ्यां

१. 'वाण—' पा०. २. 'छुरिका पट्टिका'; 'छुरिकायावानविकल्पाः' पा०. ३. 'विकल्पार्थाः प्रतीताः'; 'विकल्पा प्रतीतिः' पा०. ४. 'कुट्ट—' पा०. ५. 'रस—' पा०. ६. 'साधन—' पा०.

यच्छिरोभ्यङ्गकर्म तत्केशमर्दनम् । केशानां तत्र मृद्यमानत्वात्तैरेव तद्व्यपदेशः । शेषाङ्गेषु मर्दनं संवाहनम् । केशग्रहणमत्रादरार्थम् । तत्र कौशलं पराराधनार्थम् ॥ अक्षरमुष्टिकाकथनमिति । अक्षराणां मुष्टिरिव मुष्टिका गुप्तिरिति । सा साभासा निराभासा च । तत्र साभासा अक्षरमुद्रेत्युच्यते । तथा[१] कथनं गूढवस्तुमन्त्रणार्थं ग्रन्थसंक्षेपार्थं च । तस्या आचार्यरविगुप्तेन चन्द्रप्रभाविजयकाव्ये प्रकरणं पृथगुक्तम्[२] । यथोक्तम्—'गहनप्रसन्नसर्वां कतिपयसूत्रामिमामनन्तमुखीम् । अनधीत्याक्षरमुद्रां वादसमुद्रे परिप्लवते ॥' इति । तत्रेदमुदाहरणम्—'मेवृमिकर्सिकतुवृधमकुंमी मूघसत्रांमुग्रकनिधकआव्याः । फाचैवैज्येआश्राभाआकामापौमा चैव ॥' इति । अस्या आर्याया अयमर्थः—प्रथमपादेन मेषादयो राशय उक्ताः । द्वितीयेन राशीनां लग्नात्प्रभृति मूर्तिधनसहजबान्धवसुतशत्रुकलत्रनिधनधर्मकर्मायव्यया इति विशेषसंज्ञाः । इतरार्धेन फाल्गुनादयो मासा इति । निराभासा[भूत]मुद्रेत्युच्यते[३] ॥ तया कथनं गुह्यवस्तुमन्त्रणार्थम् । यथोक्तम्—'मुष्टिः किसलयं चैव च्छटा च त्रिपताकिका । पताकाङ्कुशमुद्राश्च मुद्रा वर्गेषु सप्तसु ॥ अङ्गुल्यश्चाक्षराण्येषां स्वराश्चाङ्गुलिपर्वसु । संयोगादक्षरं युक्तं भूतमुद्रा प्रकीर्तिता ॥' इति । एवमन्यापि काव्यसंज्ञाभूतमुद्रा द्रष्टव्या ॥ म्लेच्छितविकल्पा इति । यत्साधुशब्दोपनिबद्धमप्यक्षरविन्यासादस्पष्टार्थं तन्म्लेच्छितं गूढवस्तुमन्त्रार्थम् । तस्य विकल्पा बहवः पूर्वाचार्योक्ताः । तद्यथा—'कौटिलीयं यदि क्षान्तैः[४] स्वरयोर्ह्रस्वदीर्घयोः । बिन्दूष्मणोर्विपर्यासाद्दुर्बोधमिति संज्ञितम् ॥ अकौ खगौ घङौ चैव चटौ तपौ यशौ तथा । एते व्यस्ताः स्थिराः शेषा मूलदेवीयमुच्यते ॥ ग्रहनयनवसुसमेतं षडाननाख्यानि सागरा मुनयः । ज्वलनाङ्गं तुकशृङ्गं[५] दुर्लिखितं गूढलेख्यमिर्दम्[६] ॥' इति । एवं प्रकारा अन्येऽपि द्रष्टव्याः ॥ देशभाषाविज्ञानमिति । अप्रकाश्यवस्तुज्ञापनार्थं तद्देशीयैर्व्यवहारार्थं[७] च ॥ पुष्पशकटिकेति । पुष्पाणि

१. 'तथा' पा०. २. 'पृथक्कृतम्' पा०. ३ 'निराभासमुद्रेत्युच्यते' पा०. ४. 'कौटलीयादोदेक्षान्त-'; 'कौटिलीयेदादेक्षान्तेः'; 'कौटिलीयं दादिक्षान्त-' पा०. ५. 'छलनाङ्गं तुकशृङ्ग-' पा०. ६. 'मितम्' पा०. ७. 'विज्ञापनार्थम्'; 'विज्ञानार्थम्' पा०.

निमित्तीकृत्याहं प्रणीता(?) ॥ निमित्तज्ञानमिति । निमित्तं धर्मेक्ष्मावर्गे-ऽन्तर्गन्तं (?) शुभाशुभादेशपरिज्ञानफलम् । तत्र च प्रष्टुरभिज्ञानार्थम् । एवंरूपया स्त्रिया तव संप्रयोग इति कामोपहसितप्राया आदेशा इति । निमित्तज्ञानमिति सामान्येनोक्तम् ॥ यन्त्रमातृकेति । सजीवानां निर्जीवानां यन्त्राणां यानोदकसङ्ग्रामार्थं घटनाशास्त्रं विश्वकर्मप्रोक्तम् ॥ धारणमातृकेति । श्रुतस्य ग्रन्थस्य धारणार्थं शास्त्रम् । यथोक्तम्—'यस्तु कोषस्तथा द्रव्यं लक्षणं केतुरेव च । इत्येते धारणादेशाः पञ्चाङ्गरुचिरं वपुः ॥' इति ॥ संपाठ्यमिति । संभूय क्रीडार्थं वादार्थं च । तत्र पूर्वधारितमेको ग्रन्थं पठति, द्वितीयस्तमेवाश्रुतपूर्वं तेन सह तथैव पठति ॥ मानसीति । मनसि भवा चिन्ता । दृश्यादृश्यभेदेविषया द्विधा । तत्र कश्चिद्व्यञ्जनाक्षरैः पद्मोत्पलाद्याकृतिभिर्यथास्थितानुस्वारविसर्जनीययुतैः श्लोकमनुक्तार्थं लिखति । अन्यश्च मात्रासंधिसंयोगासंयोगच्छन्दोविन्यासादिभिरभ्यासादतीवाक्षरं (?) पठति । इति दृश्यविषया । यदा तु तथैव तानि यथाक्रममाख्यातानि श्रुत्वा पूर्ववदुन्नीय पठति, तदा दृश्यविषया न भवति । सा चाकाशमानसीत्युच्यते । तदुभयं क्रीडार्थं वादार्थं च ॥ काव्यक्रियेति । संस्कृतप्राकृतापभ्रंशकाव्यस्य करणं प्रतीतप्रयोजनम् ॥ अभिधानकोष इति । उत्पलमालादिः ॥ छन्दोज्ञानमिति । पिङ्गलादिप्रणीतस्य च्छन्दसो ज्ञानम् ॥ क्रियाकल्प इति । काव्यकरणविधिः । काव्यालंकार इत्यर्थः । त्रितयमपि काव्यक्रियाङ्गं परकाव्यावबोधार्थं च ॥ छलितकयोगा इति । परव्यामोहनार्थाः । यथोक्तम्—'यद्रूपमन्यरूपेण संप्रकाश्य हि वञ्चनम् । देवेतरप्रयोगाभ्यां ज्ञेयं तच्छलितं यथा ॥ दिव्यं शूर्पणखा रूपं व्यंचरद्वायुनन्दनः । छलितं चानभिश्रुत्य श्रुत्वा रामं च कीचकम् ॥'(?)

---

१. 'धर्मेक्ष्मासंकेतमार्गम्'; 'धर्मेक्ष्मावर्गेऽन्तर्गतम्'; 'धर्मेक्ष्माषकेऽन्तर्गम्' पा०. २. 'निर्जीवानाम्' इति पुस्तकान्तरे नास्ति. ३. 'या नोदना सङ्ग्रामार्थं घटना । शास्त्रं विश्वकर्मप्रोक्तम्' पा०. ४. 'मनःसंभवा' पा०. ५. 'भेदाद्द्विधा' पा०. ६. 'न्यासादतीवारक्षरम्'; 'न्यासाक्षतीव्राक्षरम्'; 'न्यासाक्षरतीव्राक्षरम्' पा०. ७. 'व्यतरद्वायुनन्दनम् । छलितवानभिसृत्य' पा०.

इति ॥ वस्त्रगोपनानीति। वस्त्रेणाप्रकाश्यदेशस्य संवरणं यथा तद्धूयमानमपि तस्मान्नापैति। त्रुटितस्यात्रुटितस्येव परिधानम्। महतो वस्त्रस्य संवरणादिनाल्पीकरणम्। इति गोपनानि ॥ द्यूतविशेषा इति। निर्जीवद्यूतविधानमेतत्। तत्र ये प्राप्त्यादिभिः पञ्चदशभिरङ्गैर्मुष्टिक्षुल्लकादयो द्यूतविशेषाः प्रतीतार्थाः ॥ आकर्षक्रीडेति। पाशकक्रीडा। द्यूतविशेषत्वेऽपि पुनर्वचनमत्रादरार्थम्। सशृङ्गारत्वाद्दुर्विज्ञेयत्वाद्वा। अक्षहृदयापरिज्ञाने हि नलयुधिष्ठिरयोरपि पराजयात् ॥ बालक्रीडनकानीति। गृह-[१]कन्दुकपुत्रिकादिभिर्यानि बालानां क्रीडनानि तानि बालोपक्रमार्थानि। एता एकषष्टिकला उक्ताः ॥ वैनयिकीनामिति। स्वपरविनयप्रयोजनाद्वैनयिक्य आचारशास्त्राणि। हस्त्यादिशिक्षा च। वैजयिकीनामिति। विजयप्रयोजना वैजयिक्यः। दैव्यो मानुष्यश्च। तत्र दैव्योऽपराजितादयः। मानुष्यो याः साङ्ग्रामिक्यः शस्त्रविद्याः। व्यायामिकीनामिति। व्यायामप्रयोजना व्यायामिक्यो मृगयाद्याः। एतास्तिस्र आत्मोत्कर्षरक्षणार्था[२] जीवार्थाः ॥ इति चतुःषष्टिरङ्गविद्या इति। कामसूत्रस्यावयविन्योऽवयवभूताः। तदभावे कामसूत्रस्याप्रवृत्तेः ॥

**पाञ्चालिकी च चतुःषष्टिरपरा। तस्याः प्रयोगानन्ववेत्य सांप्रयोगिके वक्ष्यामः। कामस्य तदात्मकत्वात् ॥[३]**

पाञ्चालिकी चेति। पाञ्चालप्रभवा तत्प्रोक्तत्वाद्वा। चतुःषष्टिरङ्गविद्याः। तद्भावेऽपि तस्याः प्रवृत्तेः। तस्या इति पाञ्चालिक्याः। अन्ववेत्य यथायथं विषयमनुसृत्य। सांप्रयोगिकेऽधिकरणे वक्ष्यामः। कामस्य तदात्मकत्वादिति। चतुःषष्टिस्वभावत्वात्। पूर्वस्यास्तु चतुःषष्टेस्तन्त्रान्तरे[४] दृष्टप्रयोगत्वात्, इह तदङ्गताप्रतिपत्त्यर्थमुद्देशमात्रमुक्तम्।

कलाग्रहणे फलमाह—

**आभिरभ्युच्छ्रिता[५] वेश्या शीलरूपगुणान्विता।**
**लभते गणिकाशब्दं स्थानं च जनसंसदि ॥**

१. 'गृहे' पा०. २. 'रक्षणा जीवार्थाः' पा०. ३. 'चतुःषष्टिस्तस्याः प्रयोगान्सांप्रयोगिके वक्ष्यामः। तदात्मकत्वात्संप्रयोगस्य' पा०. ४. 'सूत्रान्तरे' पा०. ५. 'अभ्युत्थिता' पा०.

पूजिता सा सदा राज्ञा गुणवद्भिश्च संस्तुता ।
प्रार्थनीयाभिगम्या च लक्ष्यभूता च जायते ॥
योगज्ञा राजपुत्री च महामात्रसुता तथा ।
सहस्रान्तःपुनरपि स्ववशे कुरुते पतिम् ॥
तथा पतिवियोगे च व्यसनं दारुणं गता ।
देशान्तरेऽपि विद्याभिः सा सुखेनैव जीवति ॥

आभिरिति । कलाभिरभ्युच्छ्रिता जातोत्कर्षा । वेश्येति प्रायशोग्रहणमस्या इति दर्शनार्थम् । शीलं सुस्वभावः । रूपं संस्थानं वर्णश्च । गुणा नायिकाया वैशिके वक्ष्यमाणाः । गणिकाशब्दमिति । वेश्या सामान्यशब्दवाच्यापि विशिष्टं गणिकाभिधानं लभते इत्यर्थः । एवंलक्षणत्वाद्गणिकायाः । स्थानं च जनसंसदीति । जनसभायामासनभूमिं लभते । न वेश्येत्यवगण्यते । राज्ञा पूजिता छत्रभृङ्गारादिदानेन । गुणवद्भिः संस्तुता असाधारणमस्याः कलाकौशलमिति प्रशंसिता । प्रार्थनीया कलोपदेशार्थिनामभिगमनार्हा । विदग्धानां रतार्थिनां लक्ष्यभूता निदर्शनभूता देवदत्तावत् । योगज्ञा गीतादिप्रयोगज्ञा । सहस्रान्तःपुरमिति प्रभूतदारोपलक्षणम् । स्ववशे आत्मनो वशे । तथा पतिवियोगे पत्यौ प्रोषिते, तथा व्यसनं दारुणं वैधव्यलक्षणं गता निर्वेदात्त्यक्तस्वदेशा अन्यस्मिन्नपि देशे सुखेनैव जीवति । विद्योपदेशदानात् ।

पुरुषमधिकृत्याह—

नरः कलासु कुशलो वाचालश्चाटुकारकः ।
असंस्तुतोऽपि नारीणां चित्तमाश्वेव विन्दति ॥
कलानां ग्रहणादेव सौभाग्यमुपजायते ।
देशकालौ त्वपेक्ष्यासां प्रयोगः संभवेन्न वा ॥

इति श्रीवात्स्यायनीये कामसूत्रे साधारणे प्रथमेऽधिकरणे
विद्यासमुद्देशस्तृतीयोऽध्यायः ।

---

१. 'नायिकायाम्'; 'नायिकायाः' पा०. २. 'छत्रागारादि'; 'क्षेत्रगारादि' पा०. ३. 'कलोपदेशिनाम्' पा०. ४. 'देवदत्तवत्'; 'देवतावत्' पा०. ५. 'अवेक्ष्य' पा०.

नर इति। वाचाल इति कलासंबन्धद्वारेणैव बहुभाषी, नान्यथा। मा भूदनागरकत्वप्रसङ्ग इति। चाटुकारकः प्रियस्य कर्ता। कलाग्रहणेन हि संस्कारवत्त्वात्। असंस्तुतोऽप्यपरिचितोऽपि चित्तं विन्दति गृह्णाति। आश्वेव न कालमपेक्षते। संप्रयोगात्स्त्रीपुंसयोः। ग्रहणादेवाभिजायते सौभाग्यम्। अर्थोऽनर्थप्रतीघातः, कामो यशश्चेत्यर्थोक्तम्। तत्रापि देशकालापेक्षा। अस्मिन्देशे नागरकाः कलाकुशलाः, घटानिबन्धनादि कामा वेति प्रयोगः। नागरकशून्यो वा देशः, गुणद्विषो वात्र प्रतिवसन्ति, व्यसनकालो वा नागरकाणामिति, न वा प्रयोगासंभवः, अन्यथा तत्परिज्ञानं दोषफलं स्यादिति।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरह-
कातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्याया
साधारणे प्रथमेऽधिकरणे विद्यासमुद्देशस्तृतीयोऽध्यायः।

---

चतुर्थोऽध्यायः।

शास्त्रकार एव प्रकरणसंबन्धमाह—

**गृहीतविद्यः प्रतिग्रहजयक्रयनिर्वेशाधिगतैरर्थैरन्वयागतैरुभयैर्वा गार्हस्थ्यमधिगम्य नागरकवृत्तं वर्तेत ॥**

गृहीतविद्य इति। तस्य नागरकवृत्तवर्तने योग्यत्वात्। गृहीतविद्यस्याप्यसतिपत्नीयोगे नागरकवृत्तस्यासंभवादाह—गार्हस्थ्यमिति। पत्नीसंयोगेऽपि यदि गार्हस्थ्यं गृहकर्म नागरकयोग्यं तन्नार्थे विनेत्याह—अर्थैरिति। तेऽपि न विनोपायैरित्याह—प्रतिग्रहेति। तत्र ब्राह्मणः प्रतिग्रहेण। तद्वृत्तित्वात्। क्षत्रियः शस्त्रजीवित्वाज्जयेन। वैश्यः क्रयेण वार्तोपलक्षणार्थेन। शूद्रः कारुकुशीलवादिः कृते कर्मणि यो निर्वेशो भृतिलेनार्जितैः। गृहस्थकर्म प्राप्येति न निष्किंचनस्यायं विधिः। अन्वयागतैरिति। पितृपितामहागतैः। अत्र पत्नीयोगादनन्तरमेव गार्हस्थ्याधिगमः।

---

१. 'सस्कारत्वात्' पा०. २. 'सयोगात्' पा०. ३. 'घण्टादिनिबन्धनादिको नो वेति' पा०. ४. 'अनुवर्तेत' पा०. ५. 'नठरतित्वात्' पा०. ६. 'कारुः' पा०.

उभयैवेति । प्रतिग्रहाद्यागतैरन्वयागतैश्च । सत्स्वप्यन्वयागतेष्वपूर्वार्जनं कार्यमिति दर्शयति । नागरको विदग्धजनः । एतद्वृत्त्य[1]पेक्षया वा भविष्यद्वृत्त्या नागरकस्तस्य वृत्तं वर्तेतेति[2] सामान्यवृत्तिर्नागरकविशिष्टा वृत्तिः कर्म वा भवति । चातुर्वर्ण्यगृहस्थमधिकृत्येदं शास्त्रम् । अस्य चेदं प्रकरणं शरीरम् । तदाश्रितस्य हि सर्वशास्त्रानुष्ठानात् ।

य[3]त्र तस्य वृत्तं तत्र स्थितिमाह—

**नगरे प[4]त्तने खर्वटे महति वा सज्जनाश्रये स्थानम् । या[5]त्रावशाद्वा ॥**

नगर इति । नगरमष्टशतग्रा[6]मीमध्ये तद्व्यवहारस्थानम् । पत्तनं यत्र राजधानी स्थिता । खर्वटं द्विशतग्रा[7]मीमध्ये । महति वेति । चतुःशतग्रा[8]मीमध्ये द्रोणमुखं नाम खर्वटान्महद्भवति । एषामन्यतमे[9]ऽवस्थानं यु[10]ज्यते । कुत इत्याह—सज्जनाश्रय इति प्रतिपदं योज्यम् । यात्रावशाद्वेति । यत्र वा स्वाद्यापनं शरीरस्थितिर्ग्रामे तत्रावस्थानम् । तन्निबन्धनत्वादितरवृत्तेः ।

तत्रापि गृहमन्तरेण न संभवतीत्याह—

**तत्र भवनमासन्नोदकं वृक्षवाटिकावद्विभक्तकर्मकक्षं द्विवासगृहं कारयेत् ॥**

तत्रेति । नगरादीनामन्यतमे भवनं गृहं कारयेदिति संवन्धः । आसन्नोदकं नदीवाप्यादिसमीपे जलमकदर्थितं क्रीडाङ्गं[11] च । वृक्षवाटिकावदिति यस्यां दिशि जलं तस्यां वृक्षवाटिकया गृहोद्यानेन युक्तम् । विभक्तकर्मकक्षमिति । कर्मार्थं कक्षाः प्रकोष्ठकानि विभक्ता यस्य । उच्चावचेन हि गृहकर्मणि क्रियमाणे गृ[12]हमरमणीयं स्यात् । द्विवासगृहमिति ।

---

१. 'अपेक्षाया' पा०. २. 'इति' इति पुस्तकान्तरे नास्ति. ३. 'यत्तस्य;' 'यत्नस्य' पा०. ४. 'पत्तने' इति पुस्तकान्तरे नास्ति. ५. 'यात्रायोगाद्वा' पा०. ६. 'ग्राममध्ये' पा०. ७. 'ग्राम–' पा०. ८. 'ग्राम–' पा०. ९. 'अन्यतमम्' पा०. १०. 'युज्यते' इति पुस्तकान्तरे नास्ति. ११. 'क्रीडार्थं च'; 'क्रीडा च' पा०. १२. 'गृहस्य साधनीयम्'; 'गृहमरणीयम्' पा०.

[1]शयनार्थेन च युक्तम् । एतावद्वृत्तोपयोगिगृहविधानम् । शेषं वास्तुविद्यायां द्रष्टव्यम् ।

तस्मिन्कारिते [2]आधेयानां न्यासमाह—

बाह्ये च वासगृहे [3]सुश्लक्ष्णमुभयोपधानं मध्ये विनतं शुक्लोत्तरच्छदं [4]शयनीयं स्यात् । [5]प्रतिशय्यिका च । तस्य शिरोभागे कूर्चस्थानम्, वेदिका [6]च । तत्र रात्रिशेषमनुलेपनं माल्यं सिक्थकरण्डकं सौगन्धिकपुटिका [7]मातुलुङ्गत्वचस्ताम्बूलानि च स्युः । भूमौ पतद्ग्रहः । नागदन्तावसक्ता वीणा । चित्रफलकम् । वर्तिकासमुद्गकः । [8]यःकश्चित्पुस्तकः । कुरण्टकमालाश्च । नातिदूरे भूमौ वृत्तास्तरणं [9]समस्तकम् । आकर्षफलकं द्यूतफलकं च । तस्य बहिः क्रीडाशकुनिपञ्जराणि । एकान्ते च [10]तक्षतक्षणस्थानमन्यासां च क्रीडानाम् । स्वास्तीर्णा प्रेङ्खादोला वृक्षवाटिकायां [11]सप्रच्छाया । स्थण्डिलपीठिका च सकुसुमेति भवनविन्यासः ॥

बाह्य इति । आभ्यन्तरं वासगृहमन्तर्दाराणां शयनार्थम् । बाह्ये च प्रकोष्ठे कृते रत्यर्थं शयनीयं स्यात् । [12]श्लक्ष्णं खट्वाश्रयप्रतिपादिकास्तरणतूलिकादिभिः सुरभितं [13]च । उभयोपधानं शिरश्चरणभागयोर्न्यस्तोपधानम् । मध्ये विनतमाक्रान्तम् । मृदुकमित्यर्थः । शुक्लोत्तरच्छदमिति । शुक्लस्य प्रच्छदपटस्य प्रत्यहं द्वित्रैर्वा दिवसैः प्रक्षालनीयत्वादित्यवश्यं तदुपरिदेयम् । प्रतिशय्यिका चेति । तस्य समीपे संप्रयोगार्थं तत्प्रतिच्छन्दिका किंचिन्न्यूनोत्सेधा यस्या[14]माशय्यर्का स्यात् । इत्येवं विधिः । अयमाचारवताम् । वेश्याकामिनस्तु शयनीयपदे उभयं निर्वर्तयन्ति । न तेषां प्रतिशय्यिका । तथा चोक्तम्—'संप्रयुज्येत यत्रस्थो नायकः प्रियया

---

१. 'शयनार्थे मञ्चयुक्तम्' पा०. २. 'आधेयादीनाम्' पा०. ३. 'सुसमम्' पा०. ४. 'बद्धवितानं शयनीयम्' पा०. ५. 'प्रतिशय्या' पा०. ६. 'च' इति पुस्तकान्तरे नास्ति. ७. 'मातुलिङ्गत्वचो मुखवासताम्बूलानि' पा०. ८. 'यत्किंचित्पुस्तकम्' इत्युचितः पाठः. ९. 'समसूरकम्' पा०. १०. 'तर्कुतक्षण-' पा०. ११. 'सप्रच्छाया' इति पुस्तकान्तरे नास्ति. १२. 'सुसमम्' पा०. १३. 'च' इति पुस्तकान्तरे नास्ति. १४. 'आरोप्यका' पा०.

सह । न तत्रोपहते विद्वाञ्शयीत शयने शुचिः ॥' इति । तस्येति शयनीयस्य पश्चात्पार्श्वभागानां निकृष्टत्वाच्छिरोभाग एव कूर्चासनस्य देवतानुसरणार्थस्य [1]स्थापनं स्यात् । यथोक्तम्—'शयनीयशिरोभागे न्यस्तकूर्चे शुचिः शुभे । कृतेष्टदेवतायोगो यायाच्छयनमात्मवान् ॥' वेदिका चेति । कुड्योपा[2]श्रया शयनीयतुल्योत्सेधा हस्तमात्रविस्तारा कृतकुट्टिमा चतुरिका स्यात् । तत्र वेदिकायां रात्रिशेषं रा[3]त्र्युपयुक्तशेषमनुलेपनं चन्दनादिकं प्रातरुपभोगार्थं स्यात् । माल्यं रात्रिशेषम् । सिक्थकरण्डकं सिक्थकसंपुटिका । सौगन्धिकं सुगन्धद्रव्यै[4]र्निर्वृतं स्वेदापनोदार्थम् । तस्य पुटिका तमालादिपत्रमयी । मातुलुङ्गत्वचो मुखवैरस्यापनोदार्थम्, दुष्टमारुतनिवारणार्थं च । यथोक्तम्—'सायं लीढ्वा कामी मध्वक्तं मातुलुङ्गदलकल्कम् । स्त्रीभुजपञ्जरसंस्थः खलेन [5]नैहि ह्रेप्यते मरुता ॥' इति । ताम्बूलानि च सज्जितानि रात्रिपरिभोगार्थं स्युः । भूमौ पतद्ग्रहः । न वेदिकायाम् । प्रक्रान्तत्वाद्व्यवच्छिद्यते । [6]यत्रस्थेन वा नायकेनोपयुक्तताम्बूलादि निष्ठीवितं पतद्गृह्णाति सा भूमिः । तत्र स्यात् । नान्यत्र । अभूमित्वात् । वीणा निचोलावगुण्ठिता वादनार्था । चित्रफलकमालेख्यार्थम् । वर्तिकासमुद्गकश्चित्रकर्मोपयोगी । यःकश्चिदिति सामान्यनिर्देशे[7]ऽपि यत्तदानीं काव्यं भावितं तस्य [8]पुस्तको वाचनार्थं स्यादित्यर्थादे[9]वावगम्यते । कुरण्टकमालाश्चेति । तासां शोभामात्रफलानां सुरतसंमर्देनाप्यम्लायमानत्वात् । त[10]द्धारणे च सौभाग्यश्रुतेर्विशेषाभिधानम् । एता वीणादयोऽनुपघातार्थं वासगृहभित्तिनिहितनागदन्तेष्वासज्य स्थापिता यथाप्रयोजनं [11]चोदातव्याः । अनुरूपस्थाननिवेशनमपि । वैदग्ध्यजननमिति ग[12]म्यते । नातिदूरे शयनीयस्य । भूमौ, न पर्यङ्के वेत्रासने वा । तत्रस्थस्याशोभित-

१. 'स्थानम्' पा०. २. 'उपाश्रिता' पा०. ३. 'रात्रावुपयुक्त-'पा०. ४. 'निवृत्तम्' पा०. ५. 'नप्यहिह्रेयते' पा०. ६. 'यत्र स्थो वा' पा०. ७. 'निर्देशः' पा०. ८. 'पुस्तकम्' इत्युचितम्. ९. 'एव' इति पुस्तकान्तरे नास्ति. १०. 'तद्धारेण' पा०. ११. 'च दातव्याः' पा०. १२. 'मन्यते' पा०.

त्वात्। वृत्तास्तरणं लोके प्रतीतम्। समस्तकमुपरिन्यस्तमल्लकमासनार्थं स्यात्। कूर्चेषु तावत्कालिकमासनम्। आकर्षफलकं द्यूतफलकं च क्रीडार्थं भूमौ कुड्याश्रितं स्यात्। काले च प्रसारयेत्। तस्येति वासगृहस्य। नातिदूरे बहिस्तत्सविधागारके क्रीडार्थं यानि शकुनानि तत्पूर्णानि पञ्जराणि नागदन्तावसक्तानि स्युः। नाभ्यन्तरे। पुरीषोत्सर्गादिदोषात्। एकान्त इति। एकदेशे। यत्रासमये न पश्यति। तत्र तक्षकर्मणस्तक्षणस्य च स्थानम्। अन्यासां च क्रीडार्थं लज्जाहेतूनामेकान्ते स्थानम्। स्वास्तीर्णेति। आतपपरिहारार्थमुपरि घनशाखाप्रतानत्वात्सुसंछन्ना। प्रेङ्खादोला प्रेरणया या दोल्यते। सुखावहा क्रीडार्थं स्यात्। न गृहाभ्यन्तरे। चक्रदोला तु चक्रपरिभ्रमणेन। सा प्रेङ्खेति निगद्यते। समच्छायेति। उपरिपुष्पलतावच्छिन्नत्वात्प्रकृष्टच्छायोपेता। स्थण्डिलमयी पीठिका चेति। कृतकुट्टिमा वेदिका। सकुसुमेति। लतानिपतत्कुसुमावकीर्णा स्यात्। वृक्षवाटिकायामित्येव। लतामण्डपिकेत्यर्थः। तत्रापानकादिभिरवस्थानात्। भवनविन्यास उत्थापनावस्थापनाभ्याम्।

तत्रस्थस्य वृत्तं द्विविधम्—नित्यं नैमित्तिकं च। तत्र पूर्वमधिकृत्याह—

**स प्रातरुत्थाय कृतनियतकृत्यः, गृहीतदन्तधावनः, मात्रयानुलेपनं धूपं स्रजमिति च गृहीत्वा, दत्त्वा सिक्थकमलक्तकं च, दृष्ट्वादर्शे मुखम्, गृहीतमुखवासताम्बूलः, कार्याण्यनुतिष्ठेत्॥**

स इति। नायकः शयनात्प्रातरुत्थायाभ्युदितत्त्वपरिहारार्थं कृतनियतकृत्यः कृतमूत्रपुरीषोत्सर्गः। गृहीतदन्तधावनो जग्धदन्तकाष्ठः। अत्रान्तरे यथास्वं संध्यावन्दनादेर्धर्मस्यानुष्ठानमर्थप्राप्तम्। मात्रयेति। प्रभूतानुलेपनादिग्रहणार्दनागरकः स्यात्। कार्यानुष्ठाने प्रस्तुतत्वात्। धूपमगुर्वा-

१. 'कुड्योपाश्रितम्' पा० २. 'यानि शकुनिपञ्जराणि' पा०. ३. 'पुरीषादोषोत्सर्गात्' पा०. ४. 'एकोद्देशे यत्रासमयी' पा०. ५. 'दोल्यते' इति पुस्तकान्तरे नास्ति. ६. 'च' इति पुस्तकान्तरे नास्ति. ७. 'सिक्थकमलक्तकं च दत्त्वा' पा०. ८. 'नागरकम्' पा०.

दिना । स्रजं शेखरकमापीडं वा । अलक्तकं विशिष्टरागार्थम् । दत्त्वेत्यर्थो-दोष्ठयोः । ईषदार्द्रयालक्तकपिण्ड्या घृष्टौष्ठं[1] ताम्बूलमुपयुज्य[2] सिक्थकगुटिकया[3] ताडयेदित्यर्थक्रमः । आदर्शे मुखमवलोक्य, मङ्गलार्थं प्रसाधनगुण-दोषज्ञानार्थं च । गृहीतमुखवासताम्बूल इति । गन्धयुक्तिविहितां मुखवा-सगुटिकां कपोले निधाय पुनरुपयोगार्थं च ताम्बूलं हस्तवर्तिकायां गृही-त्वेत्यर्थः । कार्याणि त्रिवर्गसाधनान्यनुतिष्ठेत् ।

अनुष्ठितेषु तेषु शरीरसंस्कारार्थमाह—

**नित्यं स्नानम् । द्वितीयकमुत्सादनम्[4] । तृतीयकः फेनकः । चतुर्थकमायुष्यम् । पञ्चमकं दशमकं[5] वा प्रत्यायुष्यमित्यहीनम् । सातत्याच्च संवृतकक्षास्वेदापनोदः । पूर्वाह्णापराह्णयोर्भोजनम्[6] । सायं चारायणस्य । भोजनानन्तरं[7] शुकसारिकाप्रलापनव्यापाराः । लावकुक्कुटमेषयुद्धानि । तास्ताश्च कलाक्रीडाः । पीठमर्दविटविदूषकायत्ता व्यापाराः[8] । दिवाशय्या च । गृहीतप्रसाधनस्यापराह्णे गोष्ठीविहाराः । प्रदोषे च संगीतकानि । तदन्ते च प्रसाधिते वासगृहे संचारितसुरभिधूपे ससहायस्य शय्यायामभिसारिकाणां प्रतीक्षणम्, दूतीनां प्रेषणम्, स्वयं वा गमनम् । आगतानां च मनोहरैरालापैरुपचारैश्च ससहायस्योपक्रमाः[9] । वर्षप्रमृष्टनेपथ्यानां दुर्दिनाभिसारिकाणां स्वयमेव पुनर्मण्डनम्, मित्रजनेन वा परिचरणमित्याहोरात्रिकम् ॥**

नित्यमिति । प्रत्यहं स्नानम् । ओजस्करत्वात्पवित्रत्वाच्च । द्वितीयकमिति । यस्मिन्दिने कृतमुत्सादनं तदनन्तरं दिनं प्रथमम्, तस्माद्द्वितीयेऽह्नि शरीरदार्ढ्यार्थं स्यात् । एकान्तरितमित्यर्थः । तृतीयक इति । तृतीयेऽह्नि जङ्घयोः फेनको देयः स्यात् । द्विदिनान्तरित इत्यर्थः । अन्यथा ऊर्ध्वं जङ्घे कर्कशे

१. 'ओष्ठम्' इति पुस्तकान्तरे नास्ति. २. 'उपभुज्य' पा०. ३. 'गुलिकया' पा०. ४. 'द्वितीयम्' पा०. ५. 'पञ्चक दशकम्' पा०. ६. 'पूर्वाह्णापराह्णभोजनम्' पा०. ७. 'भोजनान्ते' पा०. ८. 'विदूषकेषु चायत्ताः' पा०. ९. 'उपक्रमः' पा०.

स्याताम् । चतुर्थकमिति । त्रिः पक्षस्य च[1] श्मश्रुनखरूपाणि वर्धयेदित्ययमागमः । अत्र केषांचिन्नागरकाणामुपायभेदात्कालभेदः । तत्रायुष्यं श्मश्रुकर्म क्षुरेण[2] तच्चतुर्थेऽह्नि स्यात् । दिनत्रयान्तरितमित्यर्थः । कर्तर्या तु वैपनमेव स्यात् । प्रत्यायुष्यमिति । यद्वृक्षे क्षुरेण कर्म तत्पञ्चमेऽहनि[3] । यत्तु लोम्नामुत्पाटनेन तद्दशमे स्यादित्याह—दशमकं वेति । तत्र लोम्ना चिरेणोद्गमनात् । तथा चोक्तम्—'आयुष्यं तच्चतुर्थेऽह्नि स्याद्यत्तु क्षुरकर्मणा । प्रत्यायुष्यं[4] यदुद्धाराल्लोम्नां तद्दशमेऽहनि ॥' इति । एवमर्थं च सामान्येन त्रिः पक्षस्यालंकारकर्मेति नोक्तम् । अहीनमिति । स्नानादिपञ्चकमविकलं स्यादित्यर्थः । सातत्यादिति । सर्वदा कक्षा विवर्त्य स्नातव्यम् । यदा[5] तत्किंचित्कुर्यात्स्यात्तदा संश्लेषान्नियतमस्याः स्वेदः । तं संततं कर्पटेनापनुदेत् । अन्यथा वैगन्ध्यमवैदग्ध्यं च जनयेत् । पूर्वाह्णापराह्णयोरिति । दिनं रात्रिमष्टधा विभज्य पूर्वाह्णे त्रिभिर्भागैः कार्याण्यनुतिष्ठेत् । चतुर्थे स्नानादिकं कृत्वा भुञ्जीत । अपराह्णे च पश्चिमे भागे बलाधानार्थं पुनर्भुञ्जीतेत्याचार्याणां मतमनुक्तमपि ज्ञेयम् । मतान्तरोपन्यासात् । सायमिति । पूर्वाह्णे प्रदोषे च चारायणस्य मतम् । न तथापराह्णे द्वितीयभोजनं बलमाधत्ते यथा रात्रिरिति[6] (रात्राविति) । तथा चोक्तम्—'अजीर्णं भोजनं यच्च यच्च जीर्णे न भुज्यते । रात्रौ न भुज्यते यच्च तेन जीर्यन्ति मानवाः ॥' भोजनानन्तरमिति । पूर्वाह्णे भोजनानन्तरं शुकसारिकाप्रलापनादयो[8] दिवाशयनान्ता व्यापाराः स्युः । तेषामयमेव कालः । तास्ताश्चेति या याः प्रहेलिकाप्रतिमालादिभिः क्रीडा उक्ता[7] । पीठमर्दादीन्वक्ष्यति । तेष्वायत्ता व्यापाराः संधिविग्रहादयः । दिवाशय्येति । दिवाशयनमधर्मोऽपि ग्रीष्म एव क्षयकाले शरीरपुष्ट्यर्थमनुज्ञातम् । शरीरस्य धर्मधारणत्वात् । गृहीतप्रसाधनस्येति । प्रस्तुतव्यापारमुपसंहृत्य गृही-

---

१. 'च' इति पुस्तकान्तरे नास्ति. २. 'यत्क्षुरेण'; 'च क्षुरेण' पा०. ३. 'पञ्चमम्' पा०. ४. 'प्रत्यायुष्य तच्चतुर्थेऽह्नि स्याद्यत्तु क्षुरकर्मेति चोक्तम्' पा०. ५. 'दर्शे दिवस' पा०. ६. 'यदेतत्' पा०. ७ सर्वेषु पुस्तकेष्वेवमेव पाठ. ८. 'प्रलापनादिदा-नत.' पा०.

तवैहारिकवेषस्यापराह्णेऽहश्चतुर्थभागे गोष्ठीविहारा गोष्ठयां क्रीडा इति। एतद्दैवसिकं वृत्तम् । रात्रिमवमाह—प्रदोषे चेति । प्रतिष्ठितायां संध्यायां रजनीमुखे संगीतकानि नृत्यगीतवादित्रकाणि प्रकाराणि स्युः । तदन्ते च संगीतकान्ते । प्रसाधिते संमार्जनपुष्पोपकारशयनरचनादिभिः । वासगृहे बाह्ये । संचारितो विस्तारितः सुरभिधूपो यत्रेति । वासगृहं व्याप्य बहिरुपक्रान्त इत्यर्थः । ससहायस्येति । सहायान्वक्ष्यति । तेषामप्यत्र व्यापारात् । शय्यायामिति । शय्यासमीपे स्थितस्य । गौरवानुरागख्यापनार्थं न तावदप्यासीत शय्याम् । स्वयं वा गमनं कदाचित्स्यादिति। आभिमुख्येन कान्तं सरन्तीत्यभिसारिकाः । तासां कृतसंकेतानां प्रतीक्षणम् । दूतीनां संप्रेषणम् । संकेतितकालातिक्रमे तत्संप्रेषणेऽपि मानादनागमे स्वयं वा गमनं गौरवानुरागख्यापनार्थम् । मनोहरैरिति । स्वागतम्, इदमासनमास्यताम्, साधु कृतं दयिते यदागतासि, त्वत्प्रतिबद्धजीवित एवास्मि, तत्किमिति कालोऽतिक्रामितः, इत्यादिभिरालापैः । उपक्रमाः प्रत्युद्गमादयः । ससहायस्येति । सहाया अपि तद्वचनमनुकुर्वन्तः स्वव्यापारेणोपक्रमेरन् । प्रमृष्टं विलुप्तम् । दुर्दिनाभिसारिका दुर्दिनकालेऽभिसरन्ति याः । स्वयमेव नान्येन । लक्ष्यभूतानां गौरवानुरागख्यापनार्थम् । पुनर्मण्डनं वर्षेणोत्पादितवैकृतत्वात् । आसन्नोपभोगकालत्वाच्च । मित्रजनेनात्मनि विशेषेण पुनर्मण्डनम् । नव्यवृत्तीनां परिचरणं चेति संवाहनवीजनादिकं सर्वासामेव परिचारकैः कारयितव्यम् । एतद्बाह्यस्त्रीषु । नान्तर्दारेषु । आहोरात्रिकमहोरात्रभवम् । सांप्रयोगिकं च रात्रिभवं सांप्रयोगिके वक्ष्यति ।

नैमित्तकमाह—

**घटानिबन्धनम्, गोष्ठीसमवायः, समापानकम्, उद्यानगमनम्, समस्याः क्रीडाश्चे प्रवर्तयेत् । पक्षस्य मासस्य वा प्रज्ञाते-**

१. 'पुष्पप्रकर—' पा०. २. 'शय्यायां वा गमनम्' पा०. ३. 'अतिक्रमितः' पा०. ४ 'च' इति पुस्तकान्तरे नास्ति. ५. 'प्रतीते' पा०.

ऽहनि सरस्वत्या भवने नियुक्तानां नित्यं समाजः । कुशीलवाश्चा-गन्तवः प्रेक्षणकमेषां दद्युः । द्वितीयेऽहनि तेभ्यः पूजा नियतं लभेरन् । ततो यथाश्रद्धमेषां दर्शनमुत्सर्गो वा । व्यसनोत्सवेषु चैषां परस्परस्यैककार्यता । आगन्तूनां च कृतसमवायानां पूजनमभ्युपपत्तिश्च । इति गणधर्मः । एतेन तं तं देवताविशेषमुद्दिश्य संभावितस्थितयो घटा व्याख्याताः ॥

घटानिबन्धनमिति । देवानामुद्दिश्य यात्रा घटा । नागरकाणां तत्र संहत्यमानत्वात् । तस्या निबन्धनं गणधर्मेण व्यवस्थापनम् । गोष्ठीसमवायो गोष्ठ्यां नागरकाणां काव्यकलाविषयं समवायनं संप्रधारणं प्रवर्धयेत् । यदपराह्णे गोष्ठीविहार इति नित्यकर्मोक्तं तस्य क्रीडामात्रफलत्वादिदं विशिष्यते । समापानकमिति । संभूय समन्तात्पानमापानकमित्यर्थः । यत्रायिकया सहैकस्य मात्रया पानं तत्सरकाख्यं नित्यमेव स्यात् । उद्यानगमनमिति । बहिः स्वकारितेऽन्यकारिते वोद्याने गमनं च विहार इत्यर्थः । गृहवाटिकागमनं तु नित्यमेव स्यात् । समस्याः क्रीडाश्चेति । समस्यन्ते समग्रीभवन्ति नागरका यासु ता समस्याः । अधिकरणे यप्रत्ययः । पूर्ववत्संभूय क्रीडा इत्यर्थः । ता द्विविधाः—माहिमान्यो देश्याश्च । एतत्पञ्चविधं कर्म नायकः प्रवर्तयेत् । तत्र घटानिबन्धनमाह—पक्षस्य मासस्य वातिक्रान्तस्यावसानिकेऽहनि । प्रज्ञात इति । यद्दिनं यस्या देवताया लोकप्रसिद्धं तत्प्रज्ञातम् । यथा गणपतेश्चतुर्थी, सरस्वत्याः पञ्चमी, शिवस्याष्टमीत्यादि । तत्र देवतायाः संनिधानात् । सरस्वती च नागरकाणां विद्याकलास्वपि देवता । तस्या आयतने पञ्च-

१. 'नित्यसमाज.' पा०. २. 'आगन्तवस्तेषां प्रेक्षणकमेकम्' पा०. ३. 'तेभ्यः' इति पुस्तकान्तरे नास्ति. ४ 'तेषाम्' पा०. 'चैषाम्' इति पुस्तकान्तरे नास्ति. ५ 'च' इति पुस्तकान्तरे नास्ति. ६. 'धर्माः' पा०. ७ 'सभापणस्थितयो विविधा घटाः' पा०. ८. 'तच्छल्लकाख्यम्'; 'तच्छरकाख्यम्'; 'तच्छल्वकाख्यम्' पा०. ९ 'ता हिमान्या द्वैष्याश्च' पा०. १०. 'दिवसे' पा०.

म्याम् । नियुक्तानामिति । नायकेन पूजाचारिकत्वे प्रतिपक्षं प्रतिमासं च ये वियुक्ता नागरकनटादयो नर्तितुं तेषां समाजः सव्यापारानुष्ठानेन मेलनम् । यस्मिन्प्रवृत्ते नागरकाः समाजिकीभवन्ति । नित्यमिति तत्र तत्राहनि । अन्वेष्वह स्तु धूपविलेपनघटा तस्या निबन्धनमाह—कुशीलवाश्चेति । आगन्तवोऽन्यस्मादागता नटनर्तकाः प्रेक्षणकमेषां प्रज्ञातेऽहन्यन्यत्र वाहनि दद्युर्दर्शयेयुः । नियुक्तास्तु भृतिप्रतिबद्धाः यात्राकुशीलवत्वात्प्रज्ञात एव दर्शयन्ति । इदमुक्तं भवति—पूजाचारिकैः पात्रापात्रमनपेक्ष्यैवं प्रेक्षणमवश्यं ते दर्शयितव्या इति । द्वितीय इति । प्रथमेऽहनि प्रेक्षणकव्यग्रत्वात् । तृतीयादिष्वपि क्लिष्टदानं स्यात् । तेभ्य इति नियुक्तेभ्यः पूजाचारिकेभ्यः । पूजा प्रेक्षणकफलम् । नियतमिति । एतावत्प्रेक्षणकमूल्यमागन्तूनामिति पूर्वकल्पितं प्राप्नुयुः । अनियतान्प्रेक्षणकान्रागाद्वस्त्रादिदानलक्षणं प्रथमे वाह्नि रङ्गमध्ये नागरकेभ्यो लभेरन् । तत उत्तरकालम् । यथाश्रद्धमिति पुनर्द्रष्टुं यदि श्रद्धास्ति पुनरागन्तूनां नृत्यतां दर्शनम् । नो चेदुत्सर्गः प्रियालापैः संप्रेषणम् । यदा पुनःपुनर्दर्शनकौतुकं तदा दर्शनविशेषमाह—व्यसनोत्सवेषु चैषामिति । आगन्तूनां कस्यचिद्व्याधौ शोके वा व्यसने तथा विवाहादावुत्सवे व्यग्रस्य तत्कर्म तन्नियुक्तेन कुशीलवेन प्रेक्षणकाविघातार्थं संवाह्यम् । नियुक्तानां वा कस्यचिद्व्यसनोत्सवे तदागन्तुनेति परस्परैककार्यता स्यात् । कृतसमवायानामिति । ये नागरकपदेऽभिषिक्ता घटां द्रष्टुमन्यस्मादागतास्तेषां पूजाचारिकैर्माल्यानुलेपनादिभिः पूजनम् । पारिषदनागरकैश्च यथापरिचयं मौङ्गलिकम् । अभ्युपपत्तिश्चेति व्यसने साहाय्यं तत्प्रतीकारेण । गणधर्म इति । तत्रत्यानामागन्तूनां कुशीलवनागरकाणां यथास्वपरधर्म उक्तः । एतेनेति सरस्वतीघटादिनिबन्धनेन तं तमिति यो यः सांनिध्याल्लोके दृष्टातिशयः । संभावितस्थितय इति देशकालापेक्षया कृतव्यवस्थाः ।

---

१. 'पूजोपचारकत्वे' पा०. २. 'मिलनम्'; 'मीलनम्' पा०. ३. 'यात्रायाम्' पा०. ४. 'च' पा०. ५. 'क्लिष्ट—' पा०. ६. 'पूजोपचारिकैः' पा०. ७. 'पौङ्गलिकम्'; 'यौगलिकम्' पा०.

गोष्ठीसमवायमाह—

**वेश्याभवने सभायामन्यतमस्योद्वसिते वा समानविद्याबुद्धिशीलवित्तवयसां सह वेश्याभिरनुरूपैरालापैरासनबन्धो गोष्ठी । तत्र चैषां काव्यसमस्या कलासमस्या वा । तस्यामुज्ज्वला लोककान्ताः पूज्याः । प्रीतिसमानाश्चाहारिताः ॥**

वेश्याभवन इति । सभायां मण्डपे । अन्यतमस्य वा नागरकस्योद्वसिते गृहे । एषु नागरकाणामविरुद्धं मेलनं समानविद्यादीनाम्, सुखानिशयानामसमानविद्यादीनाम् । बुद्धिः प्रज्ञा, अभिप्रायो वा । सह वेश्याभिरिति स्त्रीप्रतिबद्धकलाप्रतिपत्त्यर्थमासां गोष्ठ्यामन्तर्भावः । अनुरूपैः परस्परस्तुत्यनुरागपरिहासानुविद्धैः । आसनबन्धो यथायथमासनेऽवस्थानम् । पक्षस्य मासस्य वा तद्योग्यतया प्रज्ञातेऽहनि स्यात् । तत्रैषां समवायमाह—काव्यसमस्या कलासमस्या चेति । संभूयदर्शनं निरूपणं तत्समस्या चर्चेत्यर्थः । पूर्ववद्भावे प्रत्ययः । 'अस गतिदीप्त्यादानेषु' इति गत्यर्थस्य ज्ञानार्थत्वात् । भारतादिकाव्यस्य नृत्यादिकलाया वा चर्चा स्यात् । यत्तु काव्यसमस्यापूरणमित्युक्तं तस्य भिन्नार्थत्वात्कलासमस्या चेत्यत्रान्तर्भावः । तस्यामिति गोष्ठ्याम् । चर्चावसाने प्रीतिनिबन्धनार्थं वस्त्रादिदानेन परस्परस्य कलापूजाः स्युः । उज्ज्वला अग्राम्या । लोककान्ता लोकमनोहराः । प्रीतिसमानाः प्रीत्यनुरूपाः । आहारिताः परिचारिकैरानायिताः ।

समापानकमाह—

**परस्परभवनेषु चापानकानि ॥**

परस्परभवनेषु चेति । एकस्यैकदा भवनेऽन्यदान्यस्य वा । पक्षस्य मासस्य वा तद्योग्यतया प्रज्ञातेऽहनि । आपानकानि पानगोष्ठ्यः स्युः ।

आपानकेषु विधिमाह—

**तत्र मधुमैरेयसुरासवान्विविधलवणफलहरितशाकतिक्तकटुका-**

---

१. 'च' पा०. २. 'गृहेषु' पा०. ३. 'कलायाम्' पा०. ४. 'तत्रैतापानकेषु' पा०. ५. 'तत्र' इति पुस्तकान्तरे नास्ति.

**ल्लोपदंशान्वेश्याः पाययेयुरनुपिबेयुश्च । एतेनोद्यानगमनं व्याख्यातम् ॥**

[1]तत्रेति । मधु माध्वीकम् । मैरेयासवौ मद्यविशेषौ । तथा चोक्तम्—'मेषशृङ्गीत्वक्क्वाथाभियुतो गुडप्रतीवापः पिप्पलीमरिचसंभारस्त्रिफलायुक्तो [2]मैद्यो मैरेयः । कपित्थपत्रफाणितप्रस्थो मधुनश्चासवयोग ।' इति । सुरा वल्कलतण्डुलाभ्यां निष्पन्नो गुडस्तत्र निक्षिप्यते । मद्यमिति वक्तव्ये विशेषोपादानं त्रैविध्यख्यापनार्थम् । तथा चोक्तम्—'गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा ।' अत्र सुराशब्दः सामान्यवाची द्रष्टव्यः । एवं च विविधपानादापानकं भवति । विविधानि लवणतिक्तरसभूयिष्ठानि हरितकटुकानि च शिग्रुपर्णादीन्यवदंशो येषामिति तान्वेश्याः पाययेयुः, अभ्यर्थनापुरःसरमनुपिबेयुश्च । आदौ पिबद्भिर्गौरवानुरागौ न प्रकाशितौ स्याताम् । अत्र सह पृथग्वेति देशप्रवृत्तिरपेक्षणीया । एतेनेति । आपानकविधिना । उद्यानगतैरप्ययमेवापानकविधिः कार्य इत्यर्थः ।

तत्रोद्यानगमने विशेषमाह—

**पूर्वाह्ण एव [3]स्वलंकृतास्तुरगाधिरूढा वेश्याभिः सह [4]परिचारकानुगता गच्छेयुः । दैवसिकीं च यात्रां तत्रानुभूय [5]कुक्कुटयुद्धद्यूतैः प्रेक्षाभिरनुकूलैश्च चेष्टितैः कालं गमयित्वा [6]अपराह्णे [7]गृहीततदुद्यानोपभोगचिह्नास्तथैव प्रत्याव्रजेयुः । एतेन रचितोद्ग्राहोदकानां ग्रीष्मे जलक्रीडागमनं [8]व्याख्यातम् ॥**

तदा हि गतानां दैवसिकी यात्रा संपद्यते । स्वलंकृता गृहीतवैहारिकवेषाः । तुरगाधिरूढाः । तुरगाणां ललितयानत्वात् । वेश्याभिः सहेति । ता अपि पश्चादग्रतो वा तुरगमारोहयितव्याः । परिचारका यथास्वं

---

१. 'तत्रेति' इति पुस्तकान्तरे नास्ति. २. 'वा' पा०. मद्यमित्यपेक्षितम्. द्वित्रिपुस्तकेषु 'मद्यो' इत्येवास्ति ३. 'स्वलंकृताङ्गा.' पा०. ४. 'परिचारकैरनुगताः' पा०. ५. 'कुक्कुटलावकमेषयुद्धद्यूतैः' पा०. ६. 'अपराह्णे' इति पुस्तकान्तरे नास्ति. ७. 'गृहीतोद्यानोप–' पा०. ८. 'आख्यातम्' पा०.

कर्मभिः परिचरन्ति ये । तैरनुगताः। पक्षस्य मासस्य वा [१]गमनयोग्यतया प्रज्ञातेऽहनि गच्छेयुः। दैवसिकीं यात्रा प्रत्यहं क्रियमाणां शरीरस्थितिम्। तत्रैवोद्यानेऽनुभूय कुक्कुटयुद्धद्यूतैः सजीवनिर्जीवैर्नटादिप्रेक्षाभिरनुकूलैश्च चेष्टितैर्यथास्वं वेश्याप्रतिबद्धैः कालं गमयित्वा अपराह्णे प्रशान्तवेलायां [२]तथैवेति स्वलंकृतास्तुरगाधिरूढाः सह वेश्याभिः परिचारकानुगता इति। विशेषोऽत्र गृहीततदुद्यानोपभोगचिह्ना इति। तदुद्यानमुपभुक्तमिति यानि सूचयन्ति कुसुमस्तवककिसलयादीनि तानि गृहीतानि शिरःकर्णकण्ठेषु कृतानि [यैः]। प्रत्याव्रजेयुः प्रतीपमागच्छेयुः। एतेनेति उद्यानगमनविधिना। [३]तत्रापि गमनं दैवसिकयात्रानुभवनमागमनं च तुल्यम्। किंतु गृहीततदुद्यानोपभोगचिह्ना इति तेन तत्रैव प्रायशोऽन्तर्भूतमिति नैमित्तिकवर्गे पृथङ्नोक्तम्। योऽत्र विशेषस्तमाह—रचितोद्ग्राहोदकानामिति। उद्ग्राहमविद्यमानकुम्भीराद्युदकं यस्य तोयस्थानस्य तदुद्ग्राहोदकं वापीदीर्घिकादि। रचितमिति स्वार्थिकरायन्ताद्धेतुमण्ण्यन्तात्क्तप्रत्यये रूपम्। 'रच प्रतियत्ने' इत्यदन्तत्वान्न वृद्धिः। तीर्थविन्यासादिभिः कारितरचनमुद्ग्राहोदकं यैर्नागरकैरिति। ग्रीष्म इति। अन्यदा तु पुनः पुनर्निमज्जनोन्मज्जनोदकवाद्यविघातादिप्रकारायाः क्रीडाया असंभवात्।

[४]समस्याः क्रीडा आह—

[५]यक्षरात्रिः। कौमुदी[६]जागरः। सुवसन्तकः॥

यक्षरात्रिरिति। सुखरात्रिः। यक्षाणां तत्र संनिधानात्। तत्र प्रायशो लोकस्य द्यूतक्रीडा। कौमुदीजागर इति। आश्वयुज्यां हि पौर्णमास्यां कौमुद्या ज्योत्स्नायाः प्रकर्षेण प्रवृत्तेः। [७]तत्र दोलाद्यूतप्रायाः क्रीडाः। सुवसन्तक इति। सुवसन्तो मदनोत्सवः। तत्र नृत्यगीतवाद्यप्रायाः क्रीडाः। एता माहिमान्यः क्रीडाः।

---

१. 'तद्योग्यतया' पा०. २. 'तथैव' पा०. ३. 'तत्रापि गमन दैवसिक—' इति पुस्तकान्तरे नास्ति. ४. 'समस्ताः क्रीडाः' पा०. ५. 'पक्षरात्रि' पा०. ६ 'प्रचारः' पा०. ७. 'शुभदोला'; 'न वा दोला' पा०.

कारग्रहणेन स्फुटरसं स्यात् । तच्चित्तानुविधानादिति । इति चुम्बनविकल्पा नवमं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां सांप्रयोगिके द्वितीयेऽधिकरणे चुम्बनविकल्पास्तृतीयोऽध्यायः ।

चतुर्थोऽध्यायः ।

एवं चुम्बनेनोपक्रम्य ततोऽधिकेन नखच्छेद्येनोपक्रमयितुं नखरदनजातय उच्यन्ते । नखविलेखनप्रकारा इत्यर्थः ।

तदेव स्वरूपेण दर्शयन्नाह—

**रागवृद्धौ संघर्षात्मकं नखविलेखनम् ॥**

संघर्षात्मकमिति प्रदेशस्य नखैर्यत्समन्ततो घर्षणमवयवपृथक्करणं तन्नखविलेखनम् । तत्स्वभावत्वात् । तच्च रागवृद्धौ सत्याम् । यत्तु नखाग्रेण तुदनं तद्रागमान्द्ये सति । तत्र च्छेद्यस्याभावात् । नखविलेखनस्यैव प्रकाराः कथ्यन्ते ।

तस्य क्व प्रयोगः कदा चेत्याह—

**तस्य प्रथमसमागमे प्रवासप्रत्यागमने प्रवासगमने क्रुद्धप्रसन्नायां मत्तायां च प्रयोगः । न नित्यमचण्डवेगयोः ॥**

तस्येति नखविलेखनस्य । अचण्डवेगयोरिति मन्दमध्यवेगयोः । न नित्यप्रयोगः । कदा तर्हीत्याह—प्रथमसमागमे तथा प्रवासप्रत्यागमने तयोरुत्कण्ठितयोः प्रवृद्धरागत्वात् । प्रवासगमने स्मरणार्थम् । क्रुद्धप्रसन्नायामिति नायकेन प्रसादिता सती हर्षाद्विवृद्धरागा भवति । मत्तायां च मद्यमदेन रागस्योच्छ्रितत्वात् । एवं क्रुद्धप्रसन्ने मत्ते च नायके द्रष्टव्यम् । चण्डवेगयोस्तदा च प्रयोगो नित्यमर्थोक्तम् ।

**तथा दशनच्छेद्यस्य सात्म्यवशाद्वा ॥**

तथा दशनच्छेद्यस्य प्रयोग इत्येव । तस्यैतावता तुल्यत्वादित्यतिदेशः । तेन स्वरूपमपि योज्यम् । रागविवृद्धौ संघर्षात्मकं दशनच्छेद्यम् ।

१. 'तत्स्वभावाच्च रागवृद्धौ'. २. 'इत्येवम्'.

रागमान्द्ये तु दशनग्रहणमिति । सात्म्यवशाद्वा तयोः प्रयोगो यदि तदा अचण्डवेगौ प्रकृतिसात्म्यान्न सहेतां तदा नैवेत्यर्थः ।

**तदाच्छुरितकमर्धचन्द्रो मण्डलं रेखा व्याघ्रनखं मयूरपदकं शशप्लुतकमुत्पलपत्रकमिति रूपतोऽष्टविकल्पम् ॥**

तदिति नखविलेखनम् । रूपत इति संस्थानतः । द्विविधं हि तत्[1]—रूपवदरूपवच्च । तत्र यत्कस्यचिदनुकारि तद्रूपवद्[2]ष्टप्रकारकमाच्छुरितकादि । तस्य लक्षणं वक्ष्यति । यदननुकारि तदरूपवन्त्रिविधम् । मृदुमध्यातिमात्रयोगात् ।

**कक्षौ स्तनौ गलः पृष्ठं जघनमूरू च स्थानानि ॥**

स्थानानि कक्षास्तनगलपृष्ठजघनोरुष्वेतेष्वेव[3] षट्सु नखक्षतैः स्त्रीपुंसयोरत्यर्थनिर्वृतेः । इत्याचार्याणां मतम् । उत्तरपक्षदर्शनात् । तत्र गल इति सामीप्यात्तत्पार्श्वम् । जघनशब्दः समुदायेन कटिभागे तदेकदेशे च पुरोभागे वर्तते । तदिह समुदायवृत्ति । तेन नितम्बलेखनमपि सिद्धम् । तथा चोक्तम्—'ग्रीवापार्श्वोरुकक्षेषु कटिपृष्ठस्तनेषु च । संप्रयोगे प्रयुञ्जीत नखच्छेद्यानि योषिताम् ॥' इति ।

**प्रवृत्तरतिचक्राणां न स्थानमस्थानं वा विद्यत इति सुवर्णनाभः ॥**

प्रवृत्तरतिचक्राणामिति प्रवृत्तरागोत्पीडानाम् । नास्थानमिति अङ्गप्रत्यङ्गं वा सिद्धं सर्वमेव नखक्षतस्य स्थानम् । यद्येवं तथापि शास्त्रकारो रूपवतां नियतस्थानं वक्ष्यति । तत्र हि परभागं लभन्ते इति ।

छेद्यस्य नखाधीनत्वात्तेषामाश्रयतः कल्पनातो गुणतः प्रमाणतश्च विधिमाह—

**तत्र सव्यहस्तानि[4] प्रत्यग्रशिखराणि द्वित्रिशिखराणि चण्डवेगयोर्नखानि स्युः ॥**

तत्रेति नखकर्मणि । सव्यहस्तानीति आश्रयभावेन वामो हस्तो येषामिति । दक्षिणस्य प्रायशोऽत्यन्तव्यापारादेषां भङ्गोऽपि स्यात् । प्रत्यग्र-

---

१. 'तत्' इति पुस्तकान्तरे नास्ति. २. 'तद्रूपम्'. ३. 'जघनोरुक्षुतेष्वेव'. ४. 'सव्यहस्ते'.

शिखराणीत्यभिनवघटिताग्राणि । द्विशिखरकाणि त्रिशिखरकाणि वा क्रकचमुखवत्कल्पितानि । तत्त्रिशिखरकाणि अनतिविस्तीर्णस्थलत्वाद्द्रुतं भिद्यन्ते । तद्विपर्ययाणि मध्यमन्दवेगयोरित्यर्थोक्तम् । तत्रेषत्प्रमृष्टाग्राणि शूकाकृतीनि मध्यवेगयोः । प्रमृष्टाग्राण्यर्धचन्द्राकृतीनि मन्दवेगयोः । इति तिस्रो नखकल्पनाः ।

**अनुगतराजि सममुज्ज्वलममलिनमविपाटितं विवर्धिष्णु मृदु स्निग्धदर्शनमिति नखगुणाः ॥**

अनुगतराजीत्यनुगता विवर्णा मध्ये लेखा यस्य । सममनिम्नोन्नतपृष्ठम् । उज्ज्वलमागन्तुकमलाभावादमलिनम् । नीतितः (?) अविपाटितमविस्फुटितम् । विवर्धिष्णु वर्धनशीलम् । मृदु, न काष्ठप्रख्यम् । स्निग्धदर्शनमिति दृश्यत इति दर्शनं रूपम् । 'कृत्यल्युटो बहुलम्' इति ल्युट् । तदरूक्षमस्येति ।

**दीर्घाणि हस्तशोभीन्यालोके च योषितां चित्तग्राहीणि गौडानां नखानि स्युः ॥**

प्रमाणतस्त्रिधा तत्र दीर्घाणि हस्तशोभीनि हस्तं शोभयितुं शीलं येषाम् । नखच्छेद्यं कर्तुमक्षमत्वात् । आलोके दर्शने । चित्तग्राहीणि योषिद्भिर्दृश्यमाणानि तासां चित्तं हरन्तीति गुणद्वययुतानि । स्पर्शकरत्वात्प्रायशो गौडानाम् ।

**ह्रस्वानि कर्मसहिष्णूनि विकल्पयोजनासु च स्वेच्छापातीनि दाक्षिणात्यानाम् ॥**

ह्रस्वानि कर्मसहिष्णूनि लेखनादि कर्म सहन्ते । दीर्घाणि तु भज्यन्ते । विकल्पयोजनासु अर्धचन्द्रादयो ये विकल्पास्तत्संपादनासु स्वेच्छावपातीनि प्रयोक्तुरिच्छया स्थाने योऽवपातः स विद्यते येषाम् । न तु दीर्घाणाम् । इति गुणद्वयम् । तानि खररागत्वाद्दाक्षिणात्यानाम् ।

---

१. 'तत्क्त्रिमशिखरकाणि'. २. 'स्थूलत्वाद्द्रुतम्'. ३. 'राजयो लेखाः'. ४. 'द्विगुणद्वय–'. ५. 'विकल्पयोजनानि'.

**मध्यमान्युभयभाञ्जि महाराष्ट्रकाणामिति ॥**

मध्यमानि न दीर्घाणि नातिह्रस्वानि । उभयभाञ्जि दीर्घह्रस्वगुणभाञ्जि । तानि वैचक्षण्यात्प्रायशो महाराष्ट्रकाणाम् ।

आच्छुरितकादेर्लक्षणं परभागार्थं च प्रयोगस्थानमाह—

**तैः सुनियमितैर्हनुदेशे स्तनयोरधरे वा लघुकरणमनुद्गतलेखं स्पर्शमात्रजननाद्रोमाञ्चकरमन्ते संनिपातवर्धमानशब्दमाच्छुरितकम् ॥**

तैरिति मध्यमैर्नखैः पञ्चभिरपि । सुनियमितैरिति सुसंश्लिष्टैः । मध्यमावस्थापेक्षया इदं वचनम् । प्रागसंश्लिष्टान्येव स्थाने निवेश्यन्ते ततश्च शनैराकृष्यमाणानि सुसंयमितानि भवन्ति । न प्रागेव सुसंयमितानि । लोके तथा प्रयोगदर्शनात् । लघुकरणमिति लघ्वी क्रिया यस्मिन्निति । यथा क्षतं न भवति । यदाह—अनुद्गतलेखमिति । किमर्थं तर्हीत्याह—स्पर्शमात्रजननाद्रोमाञ्चकरमन्त इति । स्पर्शनक्रियाया नखघातादिभिरङ्गुष्ठनखेन प्रतिनखस्फालनाद्वर्धमानचटचटाशब्दं यदेवंविधं कर्म तदाच्छुरितकम् । नखैराच्छुरणात् । एवं च नखच्छेद्याभावे तत्र हनुदेशेऽधरे च सर्वासामेव नायिकानामाच्छुरितकमेव नान्यन्नखकर्मेति दर्शनार्थमुभयोर्ग्रहणम् । स्तनयोराधिक्येन प्रयोक्तव्यमिति ख्यापनार्थं वचनम् । तत्रापि स्पर्शकरत्वात् ।

अन्येषु तु स्थानेष्ववस्थापेक्षया प्रयोगमाह—

**प्रयोज्यायां च तस्याङ्गसंवाहने शिरसः कण्डूयने पिटकभेदने व्याकुलीकरणे भीषणेन प्रयोगः ॥**

प्रयोज्यायां च कन्यायां तस्य प्रयोग इति विस्रम्भणार्थं नान्यस्येतरस्य कर्मणः । संवाहने यत्र यत्र स्थाने मर्दनं तत्र तत्र । शिरःकण्डूयने शिरस्येव । पिटकभेदने स्वल्पपिटकानां शरीरस्थानां भेदने । तद्वश एव (?) व्याकुलीकरणे किंचित्कर्तुमप्रयच्छन्त्यां भीषणेन भयं दर्शयितु-

---

१. 'वैलक्षण्यात्'. २. 'प्रयोगे च'. ३. 'प्रयोगादर्शनात्. ४. 'क्रियया नखपातादिभिः'. ५. 'नखच्छेद्याभावात्'. ६. 'भीषणे च'.

मित्यर्थः । एते संवाहनादिष्वावस्थिकाः सर्वास्वेव नायिकासु । अस्याव-स्थिककार्यवशान्नायिकापि प्रयोक्त्री ।

**ग्रीवायां स्तनपृष्ठे च वक्रो नखपदनिवेशोऽर्धचन्द्रकः ॥**

ग्रीवायामिति ग्रीवापार्श्वे बहिर्मुखाः स्तनपृष्ठे चोर्ध्वमुखाः । अर्ध-चन्द्रवद्वक्रोऽर्धचन्द्रः । सूच्यग्रेण कनिष्ठामुखेन निष्पाद्यो मध्यमामुखे-नार्धचन्द्रेण ।

**तावेव द्वौ परस्पराभिमुखौ मण्डलम् ॥**

तावेव द्वाविति अर्धचन्द्रौ क्रोडभावेन परस्पराभिमुखौ मण्डलम् । तदाकारत्वात् ।

**नाभिमूलककुन्दरवङ्क्षणेषु तस्य प्रयोगः ॥**

नाभिमूले रशनानायकवदेव स्थितम् । ककुन्दरयोर्नितम्बस्योपरिकूप-कयोरन्तर्निहितप्रतिकूपकं मनोहारि । वङ्क्षणयोरूरुसंध्योः कर्णिकालंकार-वज्जघनस्य ।

**सर्वस्थानेषु नातिदीर्घा लेखा ॥**

सर्वस्थानेति । लेखायाः स्थानविशेषाभावान्न स्थानविशेषाः । तेन ग्री-वात्रिकपृष्ठपार्श्वोरुमूलबाहुषु नातिदीर्घस्थानविशेषाद्व्यङ्गुला त्र्यङ्गुला वा प्रत्यग्रशिखरनिष्पाद्या ।

**सैव वक्रा व्याघ्रनखकमास्तनमुखम् ॥**

सैवेति । लेखा स्तनमुखादुत्थाप्याग्रतो वक्रीकृता व्याघ्रनखखण्डव-त्स्तनकण्ठमलंकरोति ।

**पञ्चभिरभिमुखैर्लेखा चूचुकाभिमुखी मयूरपदकम् ॥**

पञ्चभिरपि नखैः सूच्यग्रशिखरकैश्चूचुकाभिमुखा इति स्तनमुखस्याध-स्तादङ्गुष्ठकनखं विन्यस्योपरि च संश्लिष्टाङ्गुलिनखानि चूचुकस्याभिमुख-माकर्षयेत् । मयूरपदकं तदाकारत्वात् ।

---

१. 'आवश्यकाः'. २. 'अस्यावस्थितक–'. ३. 'निष्पीड्यः'. ४. 'अभिमुखम्'. ५. 'पार्श्वयोरूरुमूल–'. ६. 'शिखरकेण'.

**तत्संप्रयोगश्लाघायाः स्तनचूचुके संनिकृष्टानि पञ्चनखपदानि शशप्लुतकम् ॥**

तदिति मयूरपदकम् । संप्रयोगश्लाघाया इति नायकसंप्रयोगश्लाघा यस्यास्तस्या विधेयम् । सर्वा एव हि स्त्रियः स्तनमुखं सर्वेनखविलुप्तं बहु मन्यन्ते । यथोक्तम्—'स ते मनसि तन्वङ्गि सखि प्रागिव वर्तते । स्तनवक्रं विशालाक्षि यत्ते शिखिपदाङ्कितम् ॥' इति । स्तनचूचुक इति सामीप्ये सप्तमी । संनिकृष्टानीति नखाग्रपञ्चकमेकीकृत्यावष्टभ्य निदध्यात्तः पञ्च पदानि संनिकृष्टानि शशप्लुतकम् । तदाकारत्वात् ।

**स्तनपृष्ठे मेखलापथे चोत्पलपत्राकृतीत्युत्पलपत्रकम् ॥**

उत्पलपत्राकृतीत्युत्पलपत्रसंस्थानम् । तदेकमेव स्तनपृष्ठे मेखलापथे चेति । यथा मेखला निबध्यते । तत्र पथग्रहणान्नैकम् । अपि तु तिर्यगुत्पलपत्रमालामिव शोभार्थं निर्दध्यात् । नाभिमूलस्तनमण्डलेऽस्या नायकरतलवदाभाति ।

**ऊर्वोः स्तनपृष्ठे च प्रवासं गच्छतः स्मारणीयकं संहताश्चतस्रस्तिस्रो वा लेखाः । इति नखकर्माणि ॥**

स्मारणीयकमिति प्रोषितं स्मारयति यन्नखच्छेद्यं लेखाख्यम् । 'कृत्यल्युटो बहुलम्' इति कर्तर्यनीयर् । ततः संज्ञायां कन् । ततः प्रयोज्याया ऊर्वोः प्रवासं गच्छतः प्रच्छन्नस्य नायकस्य प्रयोक्तुः, स्तनपृष्ठे सार्वलौकिकस्य । संहता इति निरन्तरा मेखलार्थम् । मा भूच्चिरविप्रयोग इति चतस्रो दीर्घप्रवासे तिस्रो ह्रस्वप्रवासे संख्याङ्कवल्लेखाः । एषामर्धचन्द्रादीनां देशकालकार्यवशान्नायिकापि प्रयोक्त्री । नखकर्माणीत्येतानि नखच्छेद्यानि रूपवन्तीत्यर्थः । अरूपिणां त्वनिबद्धरूपत्वात्तत्स्थानानियमः । सर्वत्रैवोक्तस्थाने प्रयोगः ।

अन्येषामतिदेशमाह—

**आकृतिविकारयुक्तानि चान्यान्यपि कुर्वीत ॥**

---

१. 'श्लाघनाय चूचुके'. ५. 'श्ला न येति'. ३. 'पथिग्रहणात्'. ४. 'दद्यात्'. ५. 'निरन्तरमेखलार्थम्'. ६. 'स्थाननियमः'

आकृतिविकारयुक्तानीति संस्थानविशेषयुक्तानि । अन्यान्यपि पक्षिकुसुमकलशपत्रवल्ल्यादीनि नखकर्माणि प्रयोक्तव्यानि । अनेन विकल्पस्याधिक्यं दर्शयति ।

विकल्पानामनन्तत्वादानन्त्याच्च कौशलविधेरभ्यासस्य च सर्वगामित्वाद्रागात्मकत्वाच्छेद्यस्य प्रकारान्कोऽभिसमीक्षितुमर्हतीत्याचार्याः ॥

आचार्याणां मतं विकल्पानामिति । अष्टविकल्पमेवास्तु नान्यानि । तेषां छेद्यप्रकाराणां निरूप्यमाणानामानन्त्यात् । अतस्तान्कोऽभिसमीक्षितुमर्हतीति संबन्धः । तदभिसमीक्षिणा कौशलमप्यपेक्षणीयम् । तस्य च प्रतिविकल्पं भिन्नत्वादानन्त्यमित्याह—आनन्त्याच्चेति । कौशलविधिः कौशलकरणम् । स च नाभ्यासं विनेत्ययमपरस्तृतीयोऽपेक्षणीयः । सोऽप्येकत्र कृतोऽन्यत्र न कौशलं निष्पादयतीति सर्वगामिना भवितव्यमित्याह—अभ्यासस्य च सर्वगामित्वादिति । तदियं महती परम्परेति कः प्रकारानभिसमीक्षते । किं च रागात्मकत्वाच्छेद्यस्येति रागजन्यत्वात्तदात्मकं नखच्छेद्यम् । रागविवृद्धौ हि नखविलेखनम् । तच्च तदानीं रागान्धत्वादरूपवदेव प्रयुङ्क्ते । कोऽत्र च्छेद्यवस्तुनि प्रकारं प्रयोक्तुमर्हति तदानीमष्टविकल्पमपि न वक्तव्यम् ।

भवति हि रागेऽपि चित्रापेक्षा । वैचित्र्याच्च परस्परं रागो जनयितव्यः । वैचक्षण्ययुक्ताश्च गणिकास्तत्कामिनश्च परस्परं प्रार्थनीया भवन्ति । धनुर्वेदादिष्वपि हि शस्त्रकर्मशास्त्रेषु वैचित्र्यमेवापेक्ष्यते किं पुनरिहेति वात्स्यायनः ॥

भवति हि रागेऽपीति । हिशब्दोऽवधारणे । रागकालेऽपि केषांचित्तस्यप्यानन्त्ये वैचित्र्यापेक्षा भवत्येव । अपिशब्दादरागकालेऽपि । यदाह—वैचित्र्याच्चेति । आहार्यरागे कृत्रिमरागे च रते परस्परस्य राग उत्पद्यमानः सन्विना (?) वैचित्र्यमिति तज्जननार्थं च वैचित्र्यापेक्षा । के पुनस्ते

१. 'संस्कार–'. २. 'पत्रवल्यादीनि'. ३. 'विकाराणामानन्त्यादनन्तत्वाच्च'. ४. 'कौशलविधेः'. ५. 'कर्मशास्त्रेषु'. ६. 'च' इति पुस्तकान्तरे नास्ति. ७. 'वैचित्र्यापेक्षया'.

रागे सत्यरागे च वैचित्र्यमपेक्षन्त इत्याह—वैचक्षण्ययुक्ताश्चेति । तज्ज्ञतया युक्ता देवदत्तासदृश्यो गणिकास्तत्कामिनश्च मूलदेवसदृशाः । ते च विशिष्टरतार्थिनः परस्परस्य प्रार्थनीयास्तज्ज्ञा भवन्ति । मा भूदन्यत्र स्खलरतमिति । ततश्च तेषां वैचित्र्यमेव रागं जनयति । धनुर्वेदादिष्वपीति शास्त्रान्तरेणास्य साधर्म्यं दर्शयति । आदिशब्दात्कुन्तखड्गादिशास्त्रपरिग्रहः । शस्त्रकर्मशास्त्रेष्विति ज्ञानविद्या कर्मविद्या चेति द्विविधा विद्या । धनुर्वेदे हि परशराणामागच्छतां शरैश्छेदनमेकसंधानेनानेकशरमोक्षणमित्यादिकं कर्मवैचित्र्यम् । किं पुनरिह कामसूत्रे यत्र वैचित्र्यमेव मुख्यमभिप्रेतम् । अन्यथा नागरकानागरकयोः को भेदः ।

सर्वत्र च वैचक्षण्ययुक्तेषु वैचित्र्यप्रतिषेधमाह—

**न तु परपरिगृहीतास्वेवं कुर्यात् । प्रच्छन्नेषु प्रदेशेषु तासामनुस्मरणार्थं रागवर्धनाच्च विशेषान्दर्शयेत् ॥**

न त्विति । परपरिगृहीतासु वैचक्षण्ययुक्तास्वपि । एवमिति वैचित्र्यं युक्तम् । तासां प्रच्छन्ननायकोपभोग्यत्वात् । प्रच्छन्नेष्विति ऊरुजघनवङ्क्षणादिषु । अनुस्मरणार्थमिति ये नखच्छेद्यविशेषास्तान्दृष्ट्वा स्मरन्ति । नित्यसमागमस्य दुर्लभत्वात् । रागवर्धनाच्चेति । प्रमोदमात्रस्वरूपत्वाद्विसृष्टिलक्षणां प्रीतिं महती जनयन्ति ।

स्मरणमधिकृत्यान्वयव्यतिरेकाभ्यां प्रशंसामाह—

**नखक्षतानि पश्यन्त्या गूढस्थानेषु योषितः ।**
**चिरोत्सृष्टाप्यभिनवा प्रीतिर्भवति पेशला ॥**

नखक्षतानीति । गूढस्थानादिषु । अभिनवा प्रथमसमागम इव प्रीतिः स्नेहः । पेशला अकृत्रिमा ।

**चिरोत्सृष्टेषु रागेषु प्रीतिर्गच्छेत्पराभवम् ।**
**रागायतनसंस्मारि यदि न स्यान्नखक्षतम् ॥**

चिरोत्सृष्टेष्वनुभूय चिरपरित्यक्तेषु । पराभवं विनाशम । रागायत-

---

१. 'परिग्रहशास्त्राणि । कर्म–'. २. 'रागवर्धनार्थं च', 'रागवर्धनाश्च'. ३. 'दिशोषास्तानि'; 'विशेषात्तानि'. ४. 'रागवर्धनं त्विति'.

नसंसारीति रूपं यौवनं गुणाश्चेति रागायतनम् । तत्स्मारयितुं शीलं यस्येति । नखक्षतदर्शनात्तद्रूपादिषु स्मरणम् । ततः प्रीतिवासनात्प्रबोधः ।

सामान्येन प्रशंसामाह—

पश्यतो युवतिं दूरान्नखोच्छिष्टपयोधराम् ।
बहुमानः परस्यापि रागयोगश्च जायते ॥

दूरादिति तत्प्रकारमनुपलभ्यापि । उच्छिष्टं परिभुक्तम् । बहुमानोऽतिगौरवम् । परस्यापि येनापि न संगता । रागयोग इति रागेण युज्यत इत्यर्थः ।

पुरुषश्च प्रदेशेषु नखचिह्नैर्विचिह्नितः ।
चित्तं स्थिरमपि प्रायश्चलयत्येव योषितः ॥

पुरुषश्चेति यथा पुरुषस्य तथा योषितोऽपि पुरुषं दृष्ट्वा रागः । प्रदेशेषु सदृशेषु । विचिह्नितो विलिखितः । तपश्चरणादिभिर्नियतमपि प्रायश्चलयतीति प्रकृतेरित्यर्थः ।

नान्यत्पटुतरं किंचिदस्ति रागविवर्धनम् ।
नखदन्तसमुत्थानां कर्मणां गतयो यथा ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे

चतुर्थोऽध्यायः ।

आदितो नवमः ।

नान्यदिति रागयोगेभ्यः । पटुतरं रागवृद्धौ योग्यतरम् । दन्तग्रहणं तुल्यफलत्वदर्शनार्थं प्रासङ्गिकम् । कर्मणां गतय इति छेद्यानां प्रवृत्तयो यथा देहान्तरस्थिता न तथा लोकेऽन्यदस्ति संप्रयोगेऽपि रागवर्धनम् । पूर्वपूर्वमिति वक्ष्यति । इति नखरदनजातयो दशमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां सांप्रयोगिके द्वितीयेऽधिकरणे नखरदनजातयश्चतुर्थोऽध्यायः ।

---

१. 'विचित्रितः'. २. 'नातः परतरम्'.

पञ्चमोऽध्यायः ।

एवं नखच्छेद्यानुपक्रम्य तदधिकेन दशनच्छेद्येनोपक्रमितुं दशनच्छेद्यविधयस्तथालिङ्गनादयो देशप्रवृत्तिमननुरूप्य प्रयुज्यमाणा न रागहेतव इति देशेषु भवा देश्या उपचारा इति प्रकरणद्वयमत्राध्याये ।

तत्र च्छेद्यस्य स्वरूपविषयकालानां पूर्वत्रानिर्दिष्टत्वात्स्थानानीत्याह—

**उत्तरौष्ठमन्तर्मुखं नयनमिति मुक्त्वा चुम्बनवद्दशनरदनस्थानानि॥**

उत्तरौष्ठमिति चुम्बनस्यैव न । तत्राप्युत्तरौष्ठं छिद्यमानमसुखावहम् । अन्तर्मुखं जिह्वां शेषमपि । दशनगोचरत्वात् । नयनयोश्छेद्यासंभवात्पर्यन्तपीडाकरत्वाद्वैरूप्यकरणाच्च मुक्त्वा शेषा ललाटाधरोष्ठगलकपोलवक्षःस्तनाः, तथा लाटानामूरुसंधिबाहुमूलनाभिमूलानि सन्ति तानि स्थानानि न तु सर्वजनप्रयोज्यानीति । एतत्सर्वं योज्यम् । चुम्बनेन सहैकविषयत्वात् । दशनरदनस्थानानि दन्तविलेखनस्थानानि । उत्तरोत्तरवैचित्र्यदर्शनार्थं चुम्बनविकल्पानन्तरमिदं नोक्तम् ।

गुणानाह—

**समाः स्निग्धच्छाया रागग्राहिणो युक्तप्रमाणा निश्छिद्रास्तीक्ष्णाग्रा इति दशनगुणाः ॥**

समा अकरालास्तुल्यच्छेद्यं निष्पादयन्तीति । स्निग्धच्छाया अपरुषाः । रागग्राहिणस्ताम्बूलभक्षणादौ न पुष्पदन्ताः । इति गुणद्वयं शोभार्थम् । युक्तप्रमाणा न श्लक्ष्णा न पृथवः । निश्छिद्रा घनाः । तीक्ष्णाग्राः । इति गुणत्रयं छेद्यार्थं शोभार्थं च ।

**कुण्ठा राज्युद्गताः परुषाः विषमाः श्लक्ष्णाः पृथवो विरला इति च दोषाः ॥**

राज्युद्गता इति मध्ये स्फुटिता लेखा उद्गता येषामित्याहिताग्न्यादिषु द्रष्टव्यम् । गुणविपर्यये दोषाः सिद्धा अपि प्रधानदोषख्यापनार्थं पुनरुक्तम् । तेन रागाग्राहित्वं न दोषः । शुद्धा एव दशनाः प्रायशो वर्ण्यन्ते । अ-

१. 'दशनच्छेद्यस्थानानि'. २. 'नयनस्य'. ३. 'युक्तप्रमाणाञ्श्लक्ष्णान्पृथवत्त्वेऽनच्छिद्रा घनाः'. ४. 'गुणद्वयम्'. ५. 'प्रमाणदोष'.

त्रापि राज्युद्गतपरुषविषमाणामाननकान्तिपरिपन्थित्वम्[1] । कुण्ठादीनां तु शेषाणां कार्यकरणेऽसामर्थ्यं दोषश्च[2] ।

**गूढकमुच्छूनकं[3] विन्दुर्विन्दुमाला प्रवालमणिर्मणिमाला खण्डाभ्रकं वराहचर्वितकमिति दशनच्छेदनविकल्पाः ॥**

छेदनविकल्पा इति संक्षेपत उक्ताः ।

तेषां लक्षणं प्रयोगस्थानं चाह—

**नातिलोहितेन रागमात्रेण विभावनीयं गूढकम् ॥**

रागमात्रेणेति । राग एव रागमात्रम् । क्षताभावात् । अतिलोहितेनेति तस्याधिक्यमाह । तेन विभावनीयं विज्ञेयम् । एवं च गूढमिव गूढकम्[4] । अस्फुटितत्वात् । तदेकेनैव राजदन्ताग्रेणावष्टभ्य निष्पाद्यम् ।

**तदेव पीडनादुच्छूनकम् ॥**

तदोच्यते गूढकं यदापीड्य निष्पाद्यते । तदा जातश्वयथुत्वादुच्छूनकम् ।

**तदुभयं विन्दुरधरमध्य इति ॥**

तदुभयं गूढकमुच्छूनकं च । विन्दुरिति । अयमिति शब्दश्चार्थे । विन्दुश्च वक्ष्यमाणलक्षणः । त्रितयमधरमध्ये । तेषां स्वल्पाभोगत्वात् ।

उच्छूनकस्य वैशेषिकं स्थानमाह—

**उच्छूनकं प्रवालमणिश्च कपोले ॥**

उच्छूनकं प्रवालमणिश्च वक्ष्यमाणलक्षणः । कपोले तस्य शक्यक्रियत्वात् ।

कस्मिन्कपोल इत्याह—

**कर्णपूरचुम्बनं नखदशनच्छेद्यमिति[5] सव्यकपोलमण्डनानि ॥**

सव्यकपोलमण्डनानीति यथा कर्णपूरश्चारुत्वाद्वामे कर्णे विन्यस्तो वामकपोलस्य मण्डनं तथा । यथोक्तम्—'दन्तच्छेद्यं चुम्बनं सताम्बूलं रागमण्डनम्' ।

---

१. 'कान्तिकरत्वापरिपन्थित्वम्'. २. 'सामर्थ्यं दोपाच्च'. ३. 'मूढकम्'. ४. 'मूढमिव मूढकम्'. ५. 'दशच्छेद्यम्'; 'दशनच्छेद्यम्'.

**दन्तौष्ठसंयोगाभ्यासनिष्पादनात्प्रवालमणिसिद्धिः ॥**

दन्तौष्ठसंयोगाभ्यासनिष्पादनेति । उत्तरदन्ताधरोष्ठाभ्यां वा स्थानस्य संयोगाय गृहीत्वा पीडनं तस्याभ्यासः पुनः पुनः करणं स एव निष्पादनं यस्याः सिद्धेः । निष्पाद्यतेऽनेनेति कृत्वा । तथा हि तदभ्यासात्प्रवालमणिरिव लोहितः क्षतविवर्जितो दन्तौष्ठपदविन्यासो निष्पाद्यते ।

**सर्वस्येयं मणिमालायाश्च ॥**

मणिमालायाश्च दन्तौष्ठसंयोगाभ्यासनिष्पादनात्सिद्धिरित्येव । अत्राप्ययमेव प्रकारः । किं त्वेकं निष्पाद्यं तदनन्तरमपरं यावन्माला भूतेति ।

**अल्पदेशायाश्च त्वचो दशनद्वयसंदंशजा बिन्दुसिद्धिः ॥**

अल्पदेशाया इति स्थानापेक्षया । तत्र गले मुद्गमात्राया अधरे तिलमात्रायास्त्वचः । दशनद्वयसंदंशजेति । उत्तरेणाधरेण च दशनाग्रेण त्वचमाकृष्य संदंशः खण्डनं तस्माज्जायत इत्यर्थः । बिन्दुसिद्धिरिति । बिन्दुरिव बिन्दुः । स्वल्पदेशखण्डनात् । सिद्धिरित्युत्तरैश्चतुर्भिर्दशनैरल्पदेशायास्त्वचो युगपत्संदंशजेत्यर्थः ।

**सर्वैर्बिन्दुमालायाश्च ॥**

बिन्दुमाला तदाकारत्वात् ।

**तस्मान्मालाद्वयमपि गलकक्षवङ्क्षणप्रदेशेषु ॥**

तस्मान्मालाद्वयमपीति मणिमाला बिन्दुमाला च । गलकक्षवङ्क्षणप्रदेशेषु । श्लथत्वक्त्वादेषाम् ।

**ललाटे चोर्वोर्बिन्दुमाला ॥**

ललाटे चोर्वोरिति । तत्राप्यूर्वोस्तिलपङ्क्तिरिव स्थिता स्यान्न तिर्यक्परिमण्डलमिवेति । सृक्कभागयोर्विच्छेदेऽपि परिमण्डलमिव लक्ष्यते ।

**मण्डलमिव विषमकूटकयुक्तं खण्डाभ्रकं स्तनपृष्ठ एव ॥**

विषमकूटकयुक्तमिति । विषमैः पृथुमध्यसूक्ष्मैर्दशनपदैः समन्ततो युक्तं

---

१. 'निष्पादनेन'. २. उत्तरोष्ठदन्तौष्ठाभ्या स्थानस्य संयोगो यद्गृह्यं चोपपीडनम्' ३. 'तदा'. ४. 'अपरमपर वा'. ५. 'स्वल्प–'. ६. 'तन्माला–'. ७. 'सृग्भागयोः'.

खण्डाभ्रकम् । तत्सादृश्यात् । स्तनपृष्ठे सौकर्याच्छोभितत्वाच्च । पुरुषस्य वक्षसीत्यर्थादवगन्तव्यम् । तच्च कण्ठोपग्रहेण निष्पाद्यम् ।

**संहताः प्रदीर्घा बह्व्यो दशनपदराजयस्ताम्रान्तराला वराहचर्वितकम् । स्तनपृष्ठ एव ॥**

संहता इति । स्तनपृष्ठस्यैकतो भागात्स्वल्पदेशां त्वचं दशनसंदंशेन चर्वयेत्, यावदपरं भागम् । इत्यनेन क्रमेणोपर्युपरिचर्वणान्निरन्तराः प्रदीर्घा बह्व्यश्चतस्रः षड्वा दशनपदपङ्क्तयो निष्पाद्याः । तासां चान्तरालानि संमूर्छितरक्तत्वात्ताम्राणि भवन्ति । अतो वराहस्येव चर्वणाद्वराहचर्वितकम् । स्तनपृष्ठ एव बहुलमांसत्वात् ।

**तदुभयमपि च चण्डवेगयोः । इति दशनच्छेद्यानि ॥**

तदुभयमपि खण्डाभ्रकं वराहचर्वितकं च छेद्यं चण्डवेगयोः । तत्सात्म्यात् । एषां नायिकापि प्रयोक्त्री द्रष्टव्या । उभयोरपि शास्त्राधिकारात् । देशकालकार्यवशात्किंचिदेव कस्यचिदसाधारणम् । एतावन्ति दशनच्छेद्यानि सांप्रयोगिकान्युक्तानि । प्रयोज्याशरीरे प्रयोज्यमानत्वात् । अभियोगे त्वसंभवात् ।

आकारप्रदर्शनार्थं सांक्रान्तिकमाभियोगिकमाह—

**विशेषके कर्णपूरे पुष्पापीडे ताम्बूलपलाशे तमालपत्रे चेति प्रयोज्यागामिषु नखदशनच्छेद्यादीन्याभियोगिकानि ॥**

विशेषक इति भूर्जपत्रादिकल्पिते तिलके । कर्णपूरे नीलोत्पलादौ । पुष्पापीड इत्युपलक्षणम् । शेखरे संसज्जितताम्बूलीपत्रे । तमालपत्रे सुरभिण्यनङ्गलेखीकृते । एषां छेद्यविषयत्वात् । इतिशब्दः प्रकारे । प्रयोज्यागामिष्विति गमिष्यन्तीति गामिनः । 'भविष्यति गम्यादयः' इति निपातनात् । प्रयोज्यागामिनो विशेषकादयः । 'गामि गम्यादीनाम्' इति समासः । तेषु हि च्छेद्यानि संक्रान्तकान्याभियोगिकानि भवन्ति । नखद-

---

१. 'दशनपदपङ्क्तिसंदशेन;' 'दशनदेशसंदंशेन'. २. 'दशनपदान्याभियोगिकानि'. ३. 'पुष्पापीडयोरुपरि'.

शनच्छेद्यादीनीति । नखच्छेद्यमाभियोगिकं प्राङ् नोक्तम् । इहैकविषयत्वादेकीकृत्योक्तम् । दशनच्छेद्यविषय एकादशं प्रकरणम् ।

देशप्रवृत्तयो देश्या उपचारास्तानाह—

**देशसात्म्याच्च योषित उपचरेत् ॥**

देशसात्म्यादिति ल्यब्लोपे पञ्चमी । सात्म्यं द्विविधम्—देशतः, प्रकृतितश्च । तत्र चुम्बनादीनां येन यस्मिन्देशे सात्म्यमवस्थितं तदपेक्ष्यते । न तत्र योषित उपचरेत् । स्वयं तच्छीलवद्भवेत् । उपलक्षणमेतत् । पुरुषानपि योषित् ।

तत्र मध्यदेशस्य प्रधानत्वात्तत्सात्म्यमाह—

**मध्यदेश्या आर्यप्रायाः शुच्युपचाराश्चुम्बननखदन्तपदद्वेषिण्यः ॥**

मध्यदेश्या इति । 'हिमवद्विन्ध्ययोर्मध्यं यत्प्राग्विनशनादपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥' इति भृगुः । 'गङ्गायमुनयोरित्येके' इति वसिष्ठः । अयमेव शास्त्रकर्तुः प्राधान्येनाभिप्रेतः । तत्रभवा मध्यदेश्याः । शुच्युपचाराः सुरते शुचिसमुदाचाराः । आर्यप्रायत्वात् । चुम्बनादित्रयं द्वेष्टुं शीलमासाम् । आलिङ्गनमिच्छन्ति ।

**वाह्लीकदेश्या आवन्तिकाश्च ॥**

बाह्लीकदेश्या उत्तरापथिकाः । आवन्तिका उज्जयिनीदेशभवाः । ता एवापरमालव्यः । चुम्बनादिद्वेषिण्यः ।

पूर्वाभ्यो विशेषमाह—

**चित्ररतेषु त्वासामभिनिवेशः ॥**

चित्ररतेष्विति । चित्ररतानि वक्ष्यन्ते । तेष्वभिनिवेशोऽतिप्रीतिकरत्वात् ।

**परिष्वङ्गचुम्बननखदन्तचूषणप्रधानाः क्षतवर्जिताः प्रहणनसाध्या मालव्य आभीर्यश्च ॥**

मालव्य इति पूर्वमालवभवाः । परिष्वङ्गचुम्बनानि प्राधान्येनेच्छन्ति । क्षतविवर्जिताः स्तोकदन्तनखदन्ताभ्यामिच्छन्ति (?) । प्रहणनसाध्याः

---

१. 'आलिङ्गनादिकम्'. २. 'रतेषु त्वासामभिनिवेशा.'.

ग्रहणनेन जातरतयः। आभीर्य इति । आभीरदेशः श्रीकण्ठकुरुक्षेत्रादिभूमिः। तत्र भवाः।

**सिन्धुषष्ठानां च नदीनामन्तरालीया औपरिष्टकसात्म्याः ॥**

सिन्धुषष्ठानां चेति। सिन्धुनदः षष्ठो यासां नदीनाम् । तद्यथा— विपाट् शतद्रुरिरावती चन्द्रभागा वितस्ता चेति पञ्चनद्यः। तासामन्तरालेषु भवाः। औपरिष्टकसात्म्या इति । सत्यपि परिष्वङ्गचुम्बनादौ मुखे जघनकर्मिणः। खरवेगाः प्रीयन्त इत्यर्थः।

**चण्डवेगा मन्दसीत्कृता आपरान्तिका लाट्यश्च ॥**

आपरान्तिका इति। पश्चिमसमुद्रसमीपेऽपरान्तदेशः । तत्र भवाः। अत्रत्यैः किलार्जुनसकाशाद्विष्णोरन्तःपुरमाच्छिन्नमिति । लाट्यश्चेति। अपरमालवात्पश्चिमेन लाटविषयः । तत्रभवाश्चण्डवेगाः। मन्दसीत्कृता इति सीत्कृतानि मन्दं च प्रहारं सहन्त इत्यर्थः। तदुद्भवत्वात्सीत्कृतस्य।

**दृढप्रहणनयोगिन्यः खरवेगा एव, अपद्रव्यप्रधानाः स्त्रीराज्ये कोशलायां च ॥**

स्त्रीराज्य इति । वज्रवन्तदेशात्पश्चिमेन स्त्रीराज्यं तत्र, कोशलायां च योषितः सत्यप्यालिङ्गनादौ दृढप्रहारैः प्रीयमाणाः संप्रयुज्यन्ते[1] । खरवेगा एवेत्यवधारणात्सर्वदैवेत्यर्थः । कण्डूतेराधिक्याद्रागः खर इत्युच्यते। तद्भावे तु चण्ड इति विशेषः । एवं च सति अपद्रव्यप्रधानाः। कण्डूतिप्रतीकारार्थं प्राधान्येन कृत्रिमसाधनमिच्छन्तीत्यर्थः।

**प्रकृत्या मृद्व्यो रतिप्रिया अशुचिरुचयो निराचाराश्चान्ध्र्यः ॥**

आन्ध्र्य इति। नर्मदाया दक्षिणेन देशो दक्षिणापथः । तत्र कर्णाटविषयात्पूर्वेणान्ध्रविषयः। तत्र भवाः । प्रकृत्या स्वभावेन मृद्व्यङ्ग्यो न प्रहणनादि सहन्ते । किं तु रतिप्रियाः । पुरुषोपसृप्तमिच्छन्तीत्यर्थः। अशुचिरुचयोऽविविक्तसमुदाचाराः। निराचाराश्च। भिन्नमर्यादा इत्यर्थः।

**सकलचतुःषष्टिप्रयोगरागिण्योऽश्लीलपरुषवाक्यप्रियाः शयने च सरभसोपक्रमा महाराष्ट्रिकाः ॥**

---

१. 'युज्यन्ते;' 'अनुरज्यन्ते'.

महाराष्ट्रिका इति । नर्मदाकर्णाटविषययोर्मध्ये महाराष्ट्रविषयः । तत्र भवाः । सकलायाश्चतुःषष्टेः पाञ्चालिक्या गीताद्यायाश्च प्रयोगेण रागस्तासां भवतीति तत्प्रयोगरागिण्यः । अश्लीलं ग्राम्यं परुषं च निष्ठुरं वाक्यं वदन्ति सहन्ते चेति तत्प्रियाः । शयने चेति संप्रयोगे । रभसोपक्रमा इति धृष्टत्वोद्भटत्वरभसेन पुरुषमभियुञ्जत इत्यर्थः ।

**तथाविधा एव रहसि प्रकाशन्ते नागरिकाः ॥**

नागरिका इति पाटलिपुत्रिकाः । तथाविधा एवेति तेनैव प्रकारेण सकलचतुःषष्टिप्रयोगतयाश्लीलपरुषवाक्यप्रियतया च रहसि विजने प्रकाशन्ते । सत्रपत्वात् । महाराष्ट्रिकास्तु प्रसह्य रहसि चेति विशेषः । शयने च रभसोपक्रमत्वं तुल्यम् ।

**मृद्यमानाश्चाभियोगान्मन्दं मन्दं प्रसिञ्चन्ते द्रविड्यः ॥**

द्रविड्य इति । कर्णाटविषयाद्दक्षिणेन द्रविडविषयः । तत्र भवाः । अभियोगादिति । यन्त्रयोगात्प्रागालिङ्गनाद्यभियोगात्प्रभृति पुरुषेण मृद्यमाना बहिरन्तश्च शिथिलीक्रियमाणावयवा मन्दं मन्दं प्रसिञ्चन्त इति स्तोकं स्तोकं मूर्छनासुखवर्जितं क्षरणं कार्यत इति । अमदत्वात् । ततोऽन्ते समाक्षिप्तवेगा विसृष्टिः । तेनैकस्मिन्नेव रते निवृत्तरागा भवन्तीति दर्शयति ।

**मध्यमवेगाः सर्वसहाः स्वाङ्गप्रच्छादिन्यः पराङ्गहासिन्यः कुत्सिताश्लीलपरुषपरिहारिण्यो वानवासिकाः ॥**

वानवासिका इति । कुङ्कणविषयात्पूर्वेण वनवासविषयः । तत्र भवाः । मध्यमवेगा भावतः कालतश्च समालिङ्गनादिकं सहन्ते । व्यक्तमात्मनः शरीरे दोषं प्रच्छादयन्ति । परस्योपहसन्ति । कुत्सितं रूपेण व्यवहारेण च । अश्लीलं ग्राम्यं परुषं परिहरन्ति । न तेन संप्रयुज्यन्ते ।

**मृदुभाषिण्योऽनुरागवत्यो मृद्व्यङ्ग्यश्च गौड्यः ॥**

गौड्य इति । गौडदेशोद्भवाः । प्रदर्शनं चैतत् । अन्यदपि लक्षयेत् ।

---

१. 'प्रसिञ्चन्ति'. २. 'गौड्य इति । गौडदेशोद्भवा.' इति पुस्तकान्तरे नास्ति.

**देशसात्म्यात्प्रकृतिसात्म्यं बलीय इति सुवर्णनाभः। न तत्र देश्या उपचाराः ॥**

प्रकृतिसात्म्यमिति। प्रकृतिः स्वभावः तत्सात्म्यमेव मन्यते। देशप्रकृतिसात्म्येनैवोपचाराः कर्तव्याः। उभयसंनिपाते विरोधे सति देशसात्म्यात्प्रकृतिसात्म्यं बलीय इति। अन्तरङ्गत्वात्। न तत्र देश्या उपचाराः सुवर्णनाभस्य। आचार्याणां तु प्रकृतिसात्म्यपरिहारेणैव देशसात्म्येनोपचरेदिति मतम्। शास्त्रकृतोऽपि सुवर्णनाभमतमेवाभिमतम्। अप्रतिषिद्धत्वात्।

**कालयोगाच्च देशाद्देशान्तरमुपचारवेषलीलाश्चानुगच्छन्ति। तच्च विद्यात् ॥**

कालयोगाच्चेति। कालान्तरेण देशात्[१]तथा तत्रत्यानुपचारान्वेषं नेपथ्यं लीलां चेष्टाविशेषमनुगच्छन्ति। तच्चेति देशान्तराद्यनुगमनं तत्त्वतो विद्यात्। अन्यथा उपचारादिदर्शनेन तद्देशजेयमित्युपचर्यमाणा वि[२]गुणा स्यात्। तस्मात्संचारिगुणत्यागेन स्थायिदेश[३]प्रचारैरेवावधार्य प्रकृतिसात्म्येनोपचरेत्।

**[४]उपगूहनादिषु च रागवर्धनं पूर्वं पूर्वं विचित्रमुत्तरमुत्तरं च ॥**

उपगूहनादिष्विति। आलिङ्गनचुम्बननखदशनच्छेद्यप्रहणनसीत्कृतेषु षट्सु बहिःकर्मसु पूर्वं पूर्वं रागवर्धनम्। तत्र सीत्कृताच्छ्रुतिरमणीयात्प्रहणनं स्पर्शकरं रागवर्धनम्। ततो दशनच्छेद्यमतिस्पर्शकरम्। ततोऽपि परिहारेण नखच्छेद्यम्। तस्मादपि चुम्बनं मृदुस्पर्शकरम्। ततोऽपि सर्वाङ्गिकमालिङ्गनमतिस्पर्शकारीति। विचित्रमुत्तरोत्तरमिति। तत्रोपगूहनात्स्थूलकर्मणश्चुम्बनं कुटिलकर्म विचित्रम्। ततो नखविलेखनम्। तस्मादपि दशनच्छेद्यमतिकुटिलम्। ततोऽपि प्रहणनम्। यतस्तद्धस्तलाघवान्मन्दकर्मपरिहारेण रागं दीपयति। ततोऽपि सीत्कृतम्। यदुपदेशेऽपि दुर्ग्रहमिति।

---

१. 'तया तया'. २. 'द्विगुण.', 'द्विगुणोक्तिगुणा'. ३. 'प्रभावैः'. ४. 'आलिङ्गनादिषु'.

एवं देशसात्म्यात्परस्परमुपचितौ छेद्यकलहोऽपि स्यात् । तत्र प्रीतिस्थिरीकरणार्थं चेष्टितमुच्यते । तद्द्विविधम्—रहसि प्रकाशे च सेवने । तत्र पूर्वमधिकृत्याह—

वार्यमाणश्च पुरुषो यत्कुर्यात्तदनु क्षतम् ।
अमृष्यमाणा द्विगुणं तदेव प्रतियोजयेत् ॥

वार्यमाण इति । आङ्गिकेन वाचिकेन वाभिनयेन निषेध्यमानः प्रकृतिसात्म्यात् । यदा त्वनिषेध्यमानस्तदा कृते प्रतिकृतं कुर्यात् इत्ययमेव पक्षः । न द्विगुणयोजनम् । कलहाभावात् । द्यूतकलहेऽपि द्यूतमधिकृत्योक्तम् । इह सात्म्यं विशेषः । अमृष्यमाणेत्यक्षममाणा द्विगुणं प्रयुक्तादधिकछेद्यं यत्तदेव । न विजातीयम् । प्रयोजयेत्प्रतीपं योजयेत् ।

कस्य किं द्विगुणमित्याह—

विन्दोः प्रतिक्रिया माला मालायाश्चाभ्रखण्डकम् ।
इति क्रोधादिवाविष्टा कलहान्प्रतियोजयेत् ॥

बिन्दोरिति । मालेति बिन्दुमाला । तस्या अप्यभ्रखण्डकं प्रतीकारः । इत्येवं द्विगुणं प्रतीकारं बुद्ध्वा योजयेत्कलहं प्रति । तथाभ्रखण्डस्य वराहचर्वितकम् । गूढस्योच्छूनकम् । तस्य प्रवालमणिः । तस्यापि मणिमाला । तस्यापि बिन्दुरिति । तत्र पूर्वाणि चत्वारि त्वचि स्थितानि । शेषाणि त्वचमतिक्रम्य । क्रोधादिवाविष्टेति । कृतककोपेन दर्शितावस्थान्तरा । कलहान्तरं कृतककलहदर्शनार्थम् ।

सकचग्रहमुन्नम्य मुखं तस्य ततः पिबेत् ।
निर्लीयेत दशेच्चैव तत्र तत्र मदेरिता ॥

मुखं पिबेदधरपानाख्येन चुम्बनेन । तत्र चायं विदग्धक्रमः । सकचग्रहमुन्नम्येति । पाणिनैकेन कचेषु द्वितीयेन चिबुके परिगृह्योत्तानीकृत्येत्यर्थः । निलीयेत दृढं संश्लिष्येत दशेच्च । तत्र तत्र च्छेद्यस्थाने । यत्र यत्र वा तेन दष्टा । मदेरिता पानमदप्रेरिता । तदेव सुचेष्टं सुखयति ।

---

१. 'च नखक्षतम्'. २. 'निषेध्यमाणः'. ३. 'गूढकस्य'. ४. 'निमीलयेत्'. ५. 'दृष्टा'.

विधानान्तरमाह—

उन्नम्य कण्ठे[१] कान्तस्य संश्रिता वक्षसः स्थलीम्[२]।
मणिमालां प्रयुञ्जीत यच्चान्यदपि[३] लक्षितम्॥

उन्नम्येति। संश्रिता वक्षसः स्थलीमेकेन वाहुपाशेनावेष्टय कचमुन्नम्य द्वितीयेन हस्तेन चिबुकं गृहीत्वा मणिमालां प्रयुञ्जीत। गले स्वस्थाने कण्ठिकामिवाह[४]। यच्चान्यदपि लक्षितं दशनच्छेद्यं मनोहारि। अत्रापि वैचित्र्यापेक्षेति सूचयति।

प्रकाशे चेष्टितमाह—

दिवापि जनसंवाधे नायकेन प्रदर्शितम्।
उद्दिश्य स्वकृतं चिह्नं हसेदन्यैरलक्षिता॥

दिवापीति रात्रौ नायिकया यत्कृतं चिह्नं तद्दिवापि नायकेन कथमस्मिञ्जनसमूहे प्रच्छाद्यमिति भावमाकारं ग्राहयेत्प्रदर्शयेत्। उद्दिश्य स्वयं कृतं चिह्नमिति दुष्टस्यायमेव निग्रहो युक्त इति भावं ग्राहयन्ती हसेत्। अन्यैरलक्षितेति। नायकेनाप्यलक्षितेति योज्यम्। अन्यथा द्वावप्यनागरकौ जनसंवाधे स्यातामिति।

सापि तत्कृतानि चिह्नानि प्रदर्शयेदित्याह—

विकूणयन्तीव मुखं कुत्सयन्तीव नायकम्।
स्वगात्रस्थानि चिह्नानि सासूयेव प्रदर्शयेत्॥

विकूणयन्तीव व्यर्थचुम्बनार्थं[५] संकोचयन्तीव। संकोचस्येष्टत्वात्। कुत्सयन्तीव भ्रूनयनविकारैश्चिह्नं विदग्धमिति। 'तर्जयन्तीव' इति पाठान्तरम्। फलमस्य प्राप्स्यसीति तर्जनम्। सासूयेवाक्षममाणेव।

परस्परानुकूल्येन तदेवं लज्जमानयोः।
संवत्सरशतेनापि प्रीतिर्न परिहीयते॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे दशनच्छेद्यविधयो देश्याश्चोपचाराः पञ्चमोऽध्यायः।
आदितो दशमः।

---

१. 'कण्ठम्'. २. 'स्थलम्'. ३. 'अतिलक्षितम्'. ४. 'कण्ठिकायाम्'. ५. 'व्यथाम्'.

तदिति तस्मात्। संवत्सरशतेन पुरुषायुःप्रमाणेनेत्यर्थः प्रीतिर्न परिहीयते स्थिरीभवतीत्यर्थः। भोजनमपि ह्येकरसमुपसेव्यमानं विरागं जनयति देश्या उपचारा द्वादशं प्रकरणम्।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां साम्प्रयोगिके द्वितीयेऽधिकरणे दशनच्छेद्यविधयो देश्या उपचाराश्च पञ्चमोऽध्यायः।

---

## षष्ठोऽध्यायः।

एवं देशप्रकृतिसात्म्यापेक्षया आलिङ्गनाद्युपचाराज्जातरागयोः संवेशनयोग्यत्वात्संवेशनप्रकाराः, तथा संवेशनविशेषत्वाच्चित्ररतानीति प्रकरणद्वयमत्राध्याये।

यदाह—

**रागकाले विशालयन्त्येव जघनं मृगी संविशेदुच्चरते॥**

रागकाल इति। रागकालो यत्र स्तब्धलिङ्गता। साधनसंबाधयोः संयोगार्थं संवेशनम्। तच्च तदानीमेव युज्यते। तेन प्रमाणतो रतमधिकृत्य संवेशनप्रकाराः। उपलक्षणं चैतत्। उच्चतररते चाश्वेन संप्रयोक्ष्यमाणेति [जघनं] विशालयन्तीव संविशेत्। अत्रातिदेशं वक्ष्यति।

**अवह्रासयन्तीव हस्तिनी नीचरते॥**

अवह्रासयन्तीवेति। ऊर्वोः संश्लेषणात्संकोचयन्तीव। यथा संवृतमुखं भवति। हस्तिनी नीचरते वृषेण संप्रयोक्ष्यमाणा संविशेदित्येव। तस्या बहलरन्ध्रत्वात्। शशेन नीचतररतेऽवह्रासयन्तीति। अत्राप्यतिदेशं वक्ष्यति।

**न्याय्यो यत्र योगस्तत्र समपृष्ठम्॥**

यत्र यस्मिन्रते न्यायादनपेतो योगः। स्वभावसिद्धत्वात्। समरत इत्यर्थः। तत्र समपृष्ठं संविशेदित्येव क्रियाविशेषणमेतत्। संकोचनप्रसारणाभावात्समं जघनपृष्ठं यस्यां क्रियायामिति।

**आभ्यां वडवा व्याख्याता॥**

---

१. 'प्रकारात्'. २. 'प्रयोगस्तत्र समपृष्ठकम्'.

साप्युच्चरतेनाश्वेन प्रयोक्ष्यमाणा विशालयन्तीव शशेनावह्रासयन्तीव। न्याय्यो यत्र वृषेण तत्र समपृष्ठं संविशेदिति। मृगीहस्तिनीभ्यां व्याख्याता। यथा चोक्तम्—'विवृतोरुकमुच्चैस्तु नीचैः स्यात्संवृतोरुकम्। यथा स्थितोरुकं चापि समपृष्ठं समे रते॥'

संवेशनस्य प्रतिग्रहफलत्वात्प्रतिग्रहमाह—

तत्र जघनेन[1] नायकं प्रतिगृह्णीयात्॥

तत्रेति। संकोचनप्रसारणभेदात्समपृष्ठाच्च त्रिविधे संवेशने जघनेन स्वेन प्रतिगृह्णीयात्। श्लथलिङ्गं प्रतीच्छेदित्यर्थः।

अपद्रव्याणि च सविशेषं नीचरते॥

अपद्रव्याणि चेति। वृषेण शशेन वा प्रयुज्यमानानि कृत्रिमसाधनानि वडवा हस्तिनी वा प्रतिगृह्णीयादित्येव। तत्रापि विशेषः—यदि समरतं साधनसदृशं कृत्रिमं तदा नावह्रासयन्ती विशालयन्तीव। ततोऽप्यधिकं चेद्विशालयन्तीव प्रतिगृह्णीयादित्यर्थः। नीचरत इति। उच्चरतेऽपद्रव्यप्रयोगासंभवात्।

यथा युक्त्या विवृतं संवृतं वा जघनं स्यात्तयथाक्रममाह—

उत्फुल्लकं विजृम्भितकमिन्द्राणिकं चेति त्रितयं मृग्याः प्रायेण॥

उत्फुल्लकमिति। समरते लौकिकी युक्तिरुक्ता न शास्त्रीया। लोके हि ग्राम्यनागरभेदादुत्तानायाः संवेशनद्वयं प्रतीतं पार्श्वे च संपुटकम्। तन्त्रितयमपि समपृष्ठं घटयतीति। यथा[2] चोक्तम्—ग्राम्यमासीनकान्तोरुविन्यस्तप्रमदोरुकम्। नागरं च नरोरुस्थं स्त्रीपादाम्भोरुहद्वयम्[3]॥' त्रितयमिति त्र्यवयवं संवेशनम्। प्रायेणेत्येकान्तेन।

शिरो विनिपात्योर्ध्वं जघनमुत्फुल्लकम्॥

शिर इति। जघनशिरोभागमधस्ताच्छय्यायां विनिपात्योत्तानमूर्ध्वं जघनं कुर्यादिति भेदमेवं रूपं पश्चाद्भागेनेत्यर्थः। यद्यपि तत्स्तृतो भवति तथाप्यतिविस्तारणार्थमुपर्युपरि स्थितहस्तपृष्ठे त्रिकभागं विनिवेशयेत्।

---

१. 'जघने'. २. 'यथोक्तम्'. ३. 'रुहोदरम्'.

पादपार्श्वं च स्फिजौ वाह्यतः । एवं जघनस्योर्ध्वं विवृतत्वादुत्फुल्लमिवोत्फुल्लकम् ।

**तत्रापसारं दद्यात् ॥**

तत्रेत्युत्फुल्लके । अपसारं दद्यादिति । नायकेन यन्त्रेण संयोज्यमाना कटिभागेनापसरेत् । नायको वा शनैः शनैः संयोज्यापसरेत् । यावत्साधं संवाधता न भवति । सहसोपसृप्ताया हि पीडा । नायकस्य च लिङ्गचर्मोद्वर्तनम् । यदवपाटिकेति वैद्यैरुच्यते ।

**अनीचे सक्थिनी तिर्यगवसज्य[1] प्रतीच्छेदिति विजृम्भितकम् ॥**

अनीचे इति । सक्थिनी ऊरू तिर्यगवसज्येति तिरश्चीने कृत्वा । तत्रापि शय्यायां पादयोरुत्तानविन्यासादपि तिरश्चीने भवतः । किं तु नीचैरित्याह—अनीचेति । प्रतीच्छेन्नायकः । जृम्भितमिव सममनुकार्यम् ।

**पार्श्वयोः सममूरू विन्यस्य पार्श्वयोर्जानुनी निदध्यादित्यभ्यासयोगादिन्द्राणी ॥**

विन्यस्य पार्श्वयोरिति । जङ्घासंश्लिष्टावूरू पार्श्वयोर्जानुनी निदध्यात् । कक्षावहिर्भागयोरित्यर्थः । एवं च वाहुमूलाभ्यामवष्टभ्य गृहीतत्वात्पूर्वस्माद्विवृततरं भवति । अभ्यासयोगादिति । सहसा निष्पादयितुमशक्यत्वादस्याः । इन्द्राणीति शचीप्रोक्तत्वादन्वर्थसंज्ञया व्यपदेशः । तत्राप्यपसारं दद्यादिति ।

**तयो[2]च्चतररतस्यापि परिग्रहः ॥**

तयेतीन्द्राण्या । उच्चतररतस्यापीति । न केवलमिन्द्राण्यामुं वृषं प्रतिगृह्णीयात्, अश्वमपि । तस्या धृतरागत्वाद्विवृतरागहेतुत्वात् । तत उच्चतररतेऽति विशालयन्तीवेति सिद्धं भवति । तदुत्फुल्लकविजृम्भितकाभ्यां तु वृषमेव वडवापि ताभ्यामेवाश्वमित्यर्थोक्तम् । पूर्वमतिदिष्टत्वात् ।

**संपुटेन प्र[3]तिग्रहो नीचरते ॥**

संपुटेनेति । हस्तिनी संपुटेन वक्ष्यमाणलक्षणेन वृषं प्रतिगृह्णीयादित्यर्थः ।

---

१. 'तिर्यगवष्टभ्य'. २. 'योग्यतया'; 'एतया'. ३. 'प्रतिगृह्णीयात्'.

**एतेन [1]नीचतररतेऽपि संपुटकं पीडितकं वेष्टितकं वाडवकमिति हस्तिन्याः ॥**

नीचतररतेऽपीति। शशमपि गृह्णीयादित्यर्थः। तस्य संवृतहेतुत्वाभावेन च प्रतिगृहीते पीडितकादि प्रयोक्तव्यम्। तेनाप्यपह्रासयन्तीवेति सिद्धम्। वडवापि संपुटकेन शशं प्रतिगृह्णीयादित्यर्थोक्तम्। पूर्वमतिदिष्टत्वात्।

[2]संपुटकयुक्तिमाह—

**[3]ऋजुप्रसारितावुभावप्युभयोश्चरणाविति संपुटः ॥**

ऋज्विति प्रगुणं प्रसारितौ यथा यन्त्रयोगः स्यात्। उभयोरिति स्त्रीपुंसयोः। संपुट इति। संपुट इवोभयोरेकत्र संश्लेषात्।

**[4]स द्विविधः—पार्श्वसंपुट उत्तानसंपुटश्च[5]। तथा कर्मयोगात्[6]। पार्श्वेण तु शयानो दक्षिणेन नारीमधिशयीतेति [7]सार्वत्रिकमेतत्[8] ॥**

तथा कर्मयोगादिति। तेन प्रकारेण रतानुष्ठानयोगादित्यर्थः। तत्र पार्श्वसंविष्टयोः पार्श्वसंपुटः। उत्तानसंपुटयोरुपर्युपरिसंविष्टस्यैकोऽपि विपर्ययेण [9]द्वितीय उत्तानसंपुटकोऽन्यतरेण व्यपदिश्यते। कथमत्र यन्त्रयोग इति नाशङ्कनीयम्। सुकरत्वात्। पार्श्वसंपुटके तु नायकस्य कटिरुपधानिकायां तिष्ठेत्, नायिकायाश्च शयनीये। अन्यथा शयनीयस्थयोर्द्वयोः कटिभागयोर्विश्लेषाद्यन्त्रं कदाचिद्विघटेत। कात्यायनस्तु संपुटकमन्यथा प्राह—'आकुञ्चितस्तना नार्यः (?) संक्रान्तनृकटिः पुनः। [10]भ्यंस्रस्थनरयोगात्तु संमुखः संपुटः स्मृतः ॥' अत्राह—संहतोरुत्वाज्जघनावह्रासो न संभवति। अतो न नीचरते हस्तिन्याः। समरते तु स्यात्। यथास्थितोरु[11]कृतयास्य लौकिकत्वात्। पार्श्वेण तु शयान इति निद्रां गन्तुम्। दक्षिणेन नारीमिति एनपायोगे द्वितीया। नार्या दक्षिणे भागे

---

१. 'नीचतररतस्यापि'. २. 'संकोचयुक्तिमाह'. ३. 'संपुटकमिति हस्तिन्या ऋजुप्रसारितौ'. ४. 'स च'. ५. 'चेति'. ६. 'योगाच्च'. ७. 'सार्वत्रिकसंपुटः'. ८. 'तद्'. ९. 'द्वितीय इवि द्वितीय'. १०. 'भ्रस्तस्थनर'. ११. 'कृतया लौकिकः स्यात्'.

आत्मनो वामेन पार्श्वेणासनपरिणता शयनीयमधिशयीतेत्यर्थः । सार्वत्रिकमिति । सर्वास्वेव मृग्यादिनायिकास्वयं निद्राकाले भवति । अविरोधात् । रतकाले तु तद्विपरीतो हस्तिन्याः । येन संकोचहेतुत्वात् । वामहस्तेन तत्र गुह्यस्पर्शनादौ शिष्टानुज्ञातत्वात् ।

संपुटकप्रयुक्तयन्त्रेणैव दृढमूरू पीडयेदिति पीडितकम् ॥

संपुटकप्रयुक्तयन्त्रेणेति । उत्तानसंपुटे पार्श्वसंपुटे वा । तत्प्रयुक्तयन्त्रं तदेव विश्लिष्येत । नायिकाया दृढस्वरूपत्वात् । पीडयेदिति पीडनात्संपुटकमेव पीडितमिति संवृताकारं भवतीति ।

ऊरू व्यत्यस्येदिति वेष्टितकम् ॥

संपुटकयन्त्रेणेत्यर्थः । य उत्तानसंपुटके वामदक्षिणतो वा यद्दक्षिणवाम इति तदेव परस्परोरुवेष्टनाज्जघनं पूर्वस्मात्संवृततरं भवति । तत्र भावेन सिद्धत्वात् ।

वडवेव निष्ठुरमवगृह्णीयादिति वाडवकमाभ्यासिकम् ॥

निष्ठुरं निश्चलम् । अवगृह्णीयात् संबाधौष्ठपुटेन साधनमित्यर्थः । वाडवकं वडवाया इव । एतेन नीचतररतस्यापि परिग्रहः । इदं कर्माभ्यासिकम् । सहसा प्रयोगे प्रयोक्तुमशक्यत्वात् ।

तदान्ध्रीषु प्रायेण । इति संवेशनप्रकारा बाभ्रवीयाः ॥

आन्ध्रीषु प्रायेण दृश्यते । तासां यत्नपरत्वात् । तस्याभ्यासोपायश्च संप्रदायनिरूप्यः । ततोऽभ्यासाच्चन्निरपेक्षग्रहणमिति । बाभ्रवीया बाभ्रव्येण प्रोक्ताः सैतैव संवेशनप्रकाराः ।

अनेन विकल्पवर्गस्य न्यूनतामाह—

सौवर्णनाभास्तु—उभावप्यूरू ऊर्ध्वाविति तद्भुग्नकम् ॥

सौवर्णनाभास्तु हस्तिन्या इति वर्तते । सुवर्णनाभेन प्रोक्ताः । अनेन द्वैविध्यमाह । उत्ताना नायिका द्वावप्यूरू संश्लिष्टावूर्ध्वावेवावस्थापयेत् ।

---

१. 'परिणताय'. २. 'शिष्टानुज्ञातः स्यात्'. ३. 'सपुटकयन्त्रेत्येव'. ४. 'अभावेन'. ५. 'सतैवे'. ६. 'सुवर्णनाभस्तु—आभुग्नकम्'; 'सौवर्णनाभा अप्यूरू—उद्भुग्नकम्'.

नायकोऽपि जानूत्तरेण द्वाभ्यामाश्लिष्योपसर्पेत् । तज्जृम्भकमिति । ऊर्वोरूर्ध्वमनिःसृतत्वात् ।

**चरणावूर्ध्वं नायकोऽस्या धारयेदिति जृम्भितकम् ॥**

चरणावूर्ध्वमिति । नायिकाजानुसंधी स्कन्धयोर्विन्यस्य चरणावूर्ध्वं नायकेन धारितौ भवतः । इति जृम्भितकम् ।

**तत्कुञ्चितावुत्पीडितकम् ॥**

तत्कुञ्चितौ धारयेदित्येव । नायकोरसि चरणौ निदध्यात् । नायकोऽपि बाहुपाशेन नायिकाया ग्रीवामावेष्टयोपसर्पेत् । एवं चरणावूर्ध्वं संकुचितौ नाधस्तादुरसा धारितौ स्याताम् । द्वयोश्चोरसि पीडनात्पीडितकम् ।

**तदेकस्मिन्प्रसारितेऽर्धपीडितकम् ॥**

तदिति पीडितकम् । एकस्मिंश्चरणे प्रसारिते व्यत्यासेनेति द्वितीयमप्यर्धपीडितकम् । अर्धपीडनात् ।

**नायकस्यांस एको द्वितीयकः प्रसारित इति पुनः पुनर्व्यत्यासेन वेणुदारितकम् ॥**

नायकस्यांसे स्कन्धे वामश्चरणः स्थितः । क्षणादनु तदधस्तात्प्रसारित इत्येकम् । पुनर्व्यत्यासेन दक्षिणस्कन्धे वामः प्रसारित इति द्वितीयम् । वेणुदारितकमिति वंशस्येव दारणं पाटनम् ।

**एकः शिरस उपरि गच्छेद्द्वितीयः प्रसारित इति शूलाचितकमाभ्यासिकम् ॥**

एक इति वामो दक्षिणो वा चरणः । शिरस इति नायिकायाः । द्वितीय इति दक्षिणो वामो वाधः । एवं द्विविधं शूलाचितकम् । शूल इवारोपणाच्छूलभिन्नवच्छरीरस्य लक्ष्यमाणत्वात् । आभ्यासिकम् । अन्यथा कथमुपरितनजङ्घाकाण्डः स्थगितकः स्यात् ।

**संकुचितौ स्ववस्तिदेशे निदध्यादिति कार्कटकम् ॥**

संकुचितौ नायिकाचरणौ जानुसंकोचात्स्ववस्तिदेशे स्वनाभिमूले निद-

---

१. 'ऊर्ध्वौ'. २. 'जृम्भकम्'. ३. 'तत्कुञ्चितमुत्पीडितकम्'. ४. 'विन्यासेन दक्षिणात्स्कन्धो वामः'. ५. 'शिरसि'. ६. 'द्वितीयकः'.

ध्यान्नायकः । कार्कटकमिति कर्कटस्येव कर्म । यदग्रचरणौ तथा तिष्ठतः ।

**ऊर्ध्वावूरू व्यत्यस्येदिति पीडितकम् ॥**

ऊर्ध्वावूरू व्यत्यस्येदिति उत्तानं वामं दक्षिणतो नयेत्, दक्षिणं वामतः । पीडितकं जघनपीडनात् ।

**जङ्घाव्यत्यासेन पद्मासनवत् ॥**

जङ्घाव्यत्यासेनेति । उत्ताना नायिका दक्षिणपादं वामे स्वोरुमूले निदध्यात् । वामं च दक्षिणे । पद्मासनमिति प्रतीतम् ।

**पृष्ठं परिष्वजमानायाः पराङ्मुखेण परावृत्तकमाभ्यासिकम् ॥**

पृष्ठमिति । यन्त्रमविश्लिष्य पूर्वकायेण परावृत्तस्य नायकस्य पृष्ठमेव गूहमानायाः परावृत्तकम् । पराङ्मुखेण नायकेन संप्रयोगात् । उपलक्षणं चैतत् । पृष्ठमुपगूहमानस्य पराङ्मुख्या परावृत्तकम् । आभ्यासिकम् । सहसा कर्तुमशक्यत्वात् । उभयकायं परिवृत्य संविष्टायाः पृष्ठमुपगूहमानस्य पराङ्मुख्या परावृत्तकमाभ्यासिकमर्थोक्तम् ।

एते संवेशनप्रकारा न चित्राः । लोके हि स्थले पृष्ठतः पार्श्वतो वा शयनं प्रतीतम् । ततोऽन्यच्चित्रम् । तदेतैरुपलक्षयेदिति दर्शयन्नाह—

**जले च संविष्टोपविष्टस्थितात्मकांश्चित्रान्योगानुपलक्षयेत् । तथा सुकरत्वादिति सुवर्णनाभः ॥**

जले चेति । चकारात्स्थले च । तत्राप्सु क्रीडायां कूले शिरो निधाय संविष्टयोः संवेशनात्मकोऽपि यः स्थलाभावाच्चित्रयोगस्तं संपुटेन चोपलक्षयेत् । उपविष्टस्य नायकस्योपवेशनात्मकस्तं सर्वैरेव प्रकारैः । ऊर्ध्वस्थितायाः स्थितात्मकः । स्थलशयनाभावात् । चित्रो योगस्तं शूलाचितके । तथा सुकरत्वादिति तैः प्रकारैः संयोगस्याप्सु सौकर्यात् ।

**वार्तं तु तत् । शिष्टैरपस्मृतत्वादिति वात्स्यायनः ॥**

वार्तं त्विति । तथा सुकरत्वादिति सत्यम् । वार्तं तु तत् । असारमित्यर्थः । शिष्टैरपस्मृतत्वादिति । स्मृतिकारैर्निषिद्धत्वादित्यर्थः । तथा च गौत-

---

१. 'स्थूल–'. २. 'अपस्मृतत्वाच्छिष्टै.'.

मीयं वचनम्—'अप्सु मिथुनसंयोगे नरकः' इति । प्रायश्चित्तविधाने भार्गववचनम्—'रेतः सिक्त्वा जले चैव कृच्छ्रं चान्द्रायणं चरेत्' इति । तस्मात्स्थलप्रयोज्यमेव चरेत् ॥ संवेशनप्रकारास्त्रयोदशं प्रकरणम् ॥

प्रकरणसंबन्धमाह—

**अथ चित्ररतानि ॥**

अथेति । संवेशनप्रस्तावे तद्विशेषत्वात्स्थलप्रयोज्यानीत्युच्यन्ते ।

तत्रोर्ध्वमधिकृत्याह—

**ऊर्ध्वस्थितयोर्यूनोः परस्परापाश्रययोः कुड्यस्तम्भोपाश्रितयोर्वा स्थितरतम् ॥**

परस्परापाश्रययोरित्याश्रयान्तराभावाद्बाहुपाशेनान्योन्योपलग्नयोः । कुड्यस्तम्भापाश्रितयोरिति नायिकायां कुड्ये स्तम्भे वापाश्रितायां द्वितीयोऽपि तदाश्रयादाश्रित इत्युक्तम् । स्थितरतं तयोरूर्ध्वस्थित्या करणत्रयमवोचन्त । यथोक्तम्—'उत्क्षिप्तप्रमदापादमेकेन नरपाणिना । प्रसारणविशेषेण व्यायतं संमुखं स्मृतम् ॥ नारीपादतलन्यासान्नरहस्ततले तु यत् । कुञ्चितप्रमदाजानुद्वयं द्वितलसंज्ञितम् ॥ नरकूर्परविन्यस्तस्त्रीनिकुञ्चितजानुकम् । जानुकूर्परमुद्दिष्टमिति शुद्धो विधिः स्मृतः ॥'

**कुड्यापाश्रितस्य कण्ठावसक्तबाहुपाशायास्तद्धस्तपञ्जरोपविष्टाया ऊरुपाशेन जघनमभिवेष्टयन्त्या कुड्ये चरणक्रमेण वलन्त्या अवलम्बितकं रतम् ॥**

कुड्यापाश्रितस्येत्युपलक्षणार्थत्वात्स्तम्भापाश्रितस्य वा नायकस्य कण्ठेऽवसक्तोवलग्नो बाहुपाशो यस्या इति विग्रहः । तद्धस्तपञ्जर इति नायकस्य हस्ताभ्यां वेणीबन्धेन घटितपञ्जरे समुपविष्टाया ऊरुपाशेन जघनं नायकस्य वेष्टयन्त्याः । चरणक्रमेण वलन्त्या इति कुड्ये स्तम्भे वा पुनः पुनश्चरणविक्षेपेण कटिं प्रेङ्खयन्त्याः । अवलम्बितकम् । नायककण्ठान्नायिकाया अवलम्बनात् । एतदुभयं वैहासिकत्वाच्चित्रम् ।

---

१. 'परस्परोपाश्रितयोः'; 'परस्परोपाश्रययो.'. २. 'आश्रययोर्वा'. ३. 'अवोचत'. ४. 'भुजपञ्जरो–'. ५. 'चरणपराक्रमेण'. ६. 'नायकं नायिकायाः'.

**भूमौ वा चतुष्पदवदास्थिताया वृषलीलयावस्कन्दनं धेनुकम् ॥**

चतुष्पदवदिति सामान्यनिर्देशो वक्ष्यमाणापेक्षः । तत्र धेनुकावच्चतुर्भिर्गात्रैरधोमुखमवस्थिताया वृषलीलयेति वृषचेष्टया नायकस्यावस्कन्दनं कटिभागेऽभिपतनम् । धेनुकमिति धेनुकाया इदम् । एतच्चामनुष्यधर्माचरणाच्चित्रम् ।

**तत्र पृष्ठमुरःकर्माणि लभते ॥**

तत्रेति धेनुके । पृष्ठमुरःकर्माणि लभत इति यानि नायिकोरसि प्रहणनच्छेद्योपगूहनादीनि तानि पृष्ठे प्रयुञ्जीतेत्यर्थः ।

**एतेनैव योगेन शौनमैणेयं छागलं गर्दभाक्रान्तं मार्जारलेलितकं व्याघ्रावस्कन्दनं गजोपमर्दितं वैराहघृष्टकं तुरगाधिरूढकमिति यत्र यत्र विशेषो योगोऽपूर्वस्तत्तदुपलक्षयेत् ॥**

एतेनेति धेनुकयोगेन शौनादिकमुपलक्षयेदित्यर्थः । श्वादीनां चतुष्पदत्वात्तद्वतमनेन व्याख्यातमित्यवगच्छेदित्यर्थः । विशेषप्रतिपत्तौ तु कारणमाह—यत्र यत्रेति । यस्मिन्यस्मिन्येन येन विशेषेण स्वरगतेन कायगतेन च योगोऽपूर्वो दृश्यते तत्तदुपलक्षयेत् । तत्र शुनीवदवस्थिता श्वलीलया नायकस्यावस्कन्दनम् । एवं छगलीवच्छगललीलया छागलम् । एणीवदेणलीलया ऐणेयम् । 'एण्या ढञ्' । व्यापारस्यापि विकारत्वात् । गर्दभीवद्गर्दभलीलया क्रमणं गर्दभाक्रान्तकम् । मार्जारीवन्मार्जारलीलया च ललितकं मार्जारललितकम् । व्याघ्रीवद्व्याघ्रलीलयावस्कन्दितं व्याघ्रावस्कन्दनम् । गजवद्गजलीलयोपमर्दनं गजोपमर्दितम् । तुरगवत्तुरगलीलयाधिरोहणं तुरगाधिरूढकम् । अत्र श्वादीनां स्वरकायगतं चेष्टितं प्रत्यक्षतोऽवगन्तव्यम् । अप्रत्यक्षीकृतस्य प्रयोक्तुमशक्यत्वात् ।

**मिश्रीकृतसद्भावाभ्यां द्वाभ्यां सह संघाटकं रतम् ॥**

मिश्रीकृतसद्भावाभ्यामिति । दंपत्योर्हि रतम् । द्वाभ्या तु परस्परोपजनितविश्वासाभ्यां नायिकाभ्यां सहैकनायकस्य रतं चित्रसंघाटकाख्यम् ।

---

१. 'अनेन'. २. 'ललितकम्'. ३. 'अवस्कन्दितम्'. ४. 'वराहघृष्टकं' इति मूलपुस्तकेषु लभ्यते. ५. 'योऽपूर्वः'. ६. 'तत्तदुपलक्षयेत्'. ७. 'तु सह द्वाभ्यां संघाटकम्'.

एकशयने स्त्रीयुग्मस्य युगपत्संप्रयुज्यमानत्वात् । यदैव हि पुरुषोपसृप्ते यदेकस्या रागापनयनं तदैवापरस्याश्चुम्बनादिना रागजननम् । ततोऽस्या रागापनयनं प्रशान्तरागायाश्च रागजननमिति ।

**वह्वीभिश्च सह गोयूथिकम् ॥**

वह्वीभिश्च मिश्रीकृतसद्भावाभिः सहैकस्य चित्ररतं गोयूथिकम् । वृषस्येव गोयूथे स्त्रीसमूहे वर्तनात् ।

**वारिक्रीडितकं छागलमैणेयमिति तत्कर्मानुकृतियोगात् ॥**

वारिक्रीडितकमिति । वार्यां गजस्येव करिणीभिः स्त्रीभिः सह रमणात् । तथा छगलवदेणवच्च स्त्रीभिः सह च्छागलमैणेयमिति । तत्कर्मानुकृतियोगादिति । वृषादीनां गवादिषु यत्स्वरगतं कायगतं च कर्म तदनुकृतियोगात्तथा व्यपदिश्यत इत्यर्थः । यथैकस्य द्वाभ्यां वह्वीभिश्च तथा द्वाभ्यां नायकाभ्यां वहुभिश्च एकस्या रतं संभवति । तत्र नायकसंघाटकेनैकस्या वक्ष्यमाणयोगेन काम्यमानत्वात्संघाटकं रतम् । द्वयोर्वा संविष्टयोः पुरुषायितेन काम्यमानत्वात् । यथोक्तम्—'ऊरूव्यत्याससंविष्टपरिवर्तितदेहयोः । वृषयोरुन्नतं चिह्नं हस्तिन्यां पुरुषायिते ॥' वहुभिश्च गोयूथिकम् । वृषगोयूथस्येवैकस्यां गवि नायकयूथस्य वर्तनात् । तथा वारिक्रीडितकमित्यादि तत्कर्मानुकृतियोगात्तदेव गोयूथिकादिवत् ।

देशप्रवृत्तिं दर्शयन्नाह—

**ग्रामनारीविषये स्त्रीराज्ये च वाह्लीके वहवो युवानोऽन्तःपुरसधर्माण एकैकस्याः परिग्रहभूताः । तेषामेकैकशो युगपच्च यथासात्म्यं यथायोगं च रञ्जयेयुः ॥**

ग्रामनारीविषय इति । स्त्रीराज्यसमीप एव परतो ग्रामनारीविषयः । युवानो व्यवायक्षमाः । अन्तःपुरसधर्माणो रक्षणयोगादस्वतन्त्राः । एकस्या योषितः परिग्रहं गताः । खरवेगत्वान्नैकेन तुष्टिरिति । ते तां कथं रञ्जयेयुरित्याह—एकैकशो युगपच्चेति । एकैकेन कर्मणा यौगपद्येन चे-

---

१. 'यदेव'. २. 'रागायतनम्'. ३. 'गोयूयकम्'. ४. 'एणेयकम्'. ५. 'ऊरुविन्यास-संविष्टः'. ६. 'उत्तान'. ७. 'वाह्लीके वहवो' इति पुस्तकान्तरे नास्ति. ८. 'एकशः'.

त्यर्थः । यथासात्म्यं यथायोगं चेति । येन यस्या उपचारेण सात्म्यं यत्र यस्य च युज्यते प्रयोगस्तेन तामनुरञ्जयेयुः । तस्यास्तृप्तिं जनयेयुरित्यर्थः ।

तदेवैकैकं कर्म यौगपद्यं च दर्शयन्नाह—

**एको धारयेदेनामन्यो निषेवेत । अन्यो जघनमुखमन्यो मध्यमन्य इति वारं वारेण व्यतिकरेण चानुतिष्ठेयुः ॥**

एको धारयेदिति यस्याङ्कमपाश्रित्य संविष्टा । मुखमन्यो निषेवेत चुम्बनदशननखक्षतैः । जघनमन्य उपसृप्तकैः । मध्यं मुखजघनयोश्चुम्बननखच्छेद्यग्रहणैरन्य इत्येकैकेन कर्मणा । युगपच्चेति । तत्रापि पुनर्विधानान्तरमाह—वारं वारेणानुतिष्ठेयुरिति । वारं नियोगं वारेण परिपाट्या । तत्र यो जघनं निषेवितवान् स निवृत्तरागत्वाद्वारेण वारमनुतिष्ठेत् । वारेण वारिको मुखवारं तद्वारिको मध्यवारं तद्वारिकश्च जघनवारमिति । व्यतिकरेण चेति द्वितीयकर्मसंयोजनेन च । तद्यथा—जघनसेवको जघनं मध्यं च निषेवेत । मध्यसेवको मध्यं मुखं च । तत्सेवकश्च मुखं मध्यं च । वारको धारयेन्मुखं च निषेवेतेति । अनेन विधिना तावदनुतिष्ठेयुर्यावत्सर्व एव जघनवारमनुप्राप्ताः ।

**एतया गोष्ठीपरिग्रहा वेश्या राजयोषापरिग्रहश्च व्याख्यातः ॥**[३]

एतयेति यथोक्तया स्त्रिया । अन्यत्रापि देशे संभवत्येतदतिदेशेन दर्शयति—गोष्ठीपरिग्रहा इति । विटैः संभूय परिगृह्यते या वेश्या । गोष्ठी येषां परिग्रह इति । योषिच्छन्दसमानार्थो योषाशब्दः । संहत्यान्तःपुरिकाभिर्योषिद्भिर्ये परिगृह्यन्ते परपुरुषाः । वक्ष्यति च—'संहत्या नव दशेत्येकैकं युवानं प्रच्छादयन्ति प्राच्यानाम्' इति । वेश्यां विटा युवानं च स्त्रियः पूर्ववदनुरञ्जयेयुरित्यर्थः । बह्वीभिश्च गोयूथिकमित्येतत्स्वदारेषु नायकव्यापारमधिकृत्योक्तम् ।

**अधोरतं पायावपि दाक्षिणात्यानाम् ।**[४] **इति चित्ररतानि ॥**

---

१. 'धारयेदेनामन्योऽन्यो निषेवेत । वदनमन्यो जघनमन्यो मध्यमन्य.'. २. 'चेष्टेरन्'. ३. 'परिग्रहाश्च व्याख्याताः'. ४. 'जायायामपि'.

अधोरतमिति । अपानस्य जघनाधः स्थितत्वात् । तच्च स्त्रीपुंसविपयभेदेन द्विविधम् । तदपि विमार्गमेहनाच्चित्रम् । औपरिष्टकं तु तृतीयाप्रकृतिविषयत्वान्न चित्रम् । स्त्रीपुंसयोश्च चित्रमेव । विमार्गमेहनात् । दाक्षिणात्यानामिति देशप्रवृत्तिं दर्शयति ।

पुरुषोपसृप्तकानि पुरुषायिते वक्ष्यामः ॥

पुरुषोपसृप्तानि तु संवेशनानन्तरत्वादवसरप्राप्तान्यपि पुरुषायिते वक्ष्यामः ।

तत्राप्युपयोगित्वाच्चित्रस्य वर्धनमाह—

भवतश्चात्र श्लोकौ—

पशूनां मृगजातीनां पतङ्गानां च विभ्रमैः ।
तैस्तैरुपायैश्चित्तज्ञो रतियोगान्विवर्धयेत् ॥

पशूनामिति । तत्राधोदशनाः पशवः । ऊर्ध्वाधोदशना मृगाः । पतङ्गाः पक्षिणः । तैस्तैरिति । ये ये प्रत्यक्षत उपलब्धाः । विभ्रमैरिति विचेष्टितैः स्वरकायगतैः । चित्तज्ञ इति । स्त्र्यभिप्रायं बुद्ध्वेत्यर्थः । रतियोगानिति रत्यर्थान्योगान् । विवर्धयेदपरानपरान्प्रयोजयेदित्यर्थः ।

तद्विवर्धने किं फलमित्याह—

तत्सात्म्याद्देशसात्म्याच्च तैस्तैर्भावैः प्रयोजितैः ।
स्त्रीणां स्नेहश्च रागश्च बहुमानश्च जायते ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे संवेशनप्रकाराश्चित्ररतानि च षष्ठोऽध्यायः ।

आदित एकादशः ।

तत्सात्म्यादिति । नायिकायाः प्रकृतिसात्म्यात् । देशसात्म्यं प्रागुक्तम् । तैस्तैरिति पश्वादिविभ्रमैः । भावैरिति भावहेतुत्वात्प्रयोजितैः । नायिकया प्रयोजिकया तदभिप्रायेण हि नायकेन प्रयुज्यमानत्वात् ।

---

१. 'जघनाधिष्ठितत्वात्'. २. 'वर्धमानमाह'. ३. 'चित्तज्ञ.'; 'चित्रज्ञः'.

भावैर्वा प्रयोजकैरिति योज्यम् । स्नेहः सक्तिः । रागस्तृप्तिः । बहुमानो गौरवमिति ॥ चित्ररतानि चतुर्दशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां सांप्रयोगिके द्वितीयेऽधिकरणे संवेशनप्रकाराश्चित्ररतानि च षष्ठोऽध्यायः ।

---

सप्तमोऽध्यायः ।

एवं संविष्टायां यन्त्रयोगे प्राधान्येन प्रहणनमिति प्रहणनप्रयोगात्प्रहणनोद्भवत्वाच्च सीत्कृतस्य तद्युक्ता एव सीत्कृतक्रमा इति प्रकरणद्वयमत्राध्याये । यथा प्रहणनस्य प्रयोग इति सूचनार्थं क्रमग्रहणम् ।

प्रहणनं द्वेषजननं कथं सुरतोपयोगीत्याह—

**कलहरूपं सुरतमाचक्षते । विवादात्मकत्वाद्वामशीलत्वाच्च कामस्य ॥**

कलहरूपमिति । कलहसदृशमित्यर्थः । कथमित्याह—विवादात्मकत्वादिति । स्त्रीपुंसयोः स्वार्थसिद्धये परस्पराभिभवेन संप्रयुज्यमानत्वाद्विवादात्मकम् । वामशीलत्वाच्चेति । प्रतिकूलस्वभावत्वात्कामस्य । यत्सुकुमारक्रमलब्धजन्मनोऽपि मनोभवस्य सुरते निर्दयोपक्रमेणातिवाह्यमानत्वात् । तथा चोक्तम् [किरातार्जुनीये ९।४९]—'आहता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः । सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः ॥' अत्रापिशब्दो भिन्नक्रमः । सौकुमार्यगुणसंभृतकीर्तिरपि सुरतेषु वाम एवेति । तेन हेतुफलभेदेनावस्थानात्कामस्य स्वभावद्वयम् । एकः संप्रयोगेच्छालक्षणः । अन्यो विसृष्टिलक्षण इति ।

**तस्मात्प्रहणनस्थानमङ्गम् । स्कन्धौ शिरः स्तनान्तरं पृष्ठं जघनं पार्श्वे इति स्थानानि ॥**

तस्य सुरतस्य । प्रहणनस्थानमङ्गमुपकरणम् । स्थानानीति प्रहणनस्य ।

**तच्चतुर्विधम्—अपहस्तकं प्रसृतकं मुष्टिः समतलकमिति ॥**

---

१. 'तस्य रागवशात्प्रहणनमङ्गम् । प्रहणनस्थानानि च असौ शिर पृष्ठमुरः स्तनान्तरं जघनपार्श्वमिति'.

तदिति प्रहणनं घातश्चतुर्विधम् । अपहस्तकादि प्रहणनस्य चतुर्विधत्वात् । प्रहण्यते वा स्थानमनेनेति प्रहणनमपहस्तकादीति करणे ल्युट् । तत्रापहस्तको हस्तपृष्ठं प्रसृताङ्गुलि । प्रसृतकं वक्ष्यति । मुष्टिः प्रसिद्धः । समतलकं सुस्थिरहस्ततलम् । यस्य मुस्तकेति प्रसिद्धिः ।

द्वितीयं प्रकरणं प्रहणनान्तर्गतमिति दर्शयन्नाह—

तदुद्भवं च सीत्कृतम् । तस्यातिरूपत्वात् । तदनेकविधम् ॥

तदुद्भवं चेति । तदुद्भवं प्रहणनादुद्भवतीति । कुत एतदित्याह—तस्यार्तिरूपत्वादिति । सीत्कृतं हि पीडया जन्यमानत्वात्तद्रूपमित्युक्तम् । यथा फलहेतु प्रहणनात्पीडया सीत्कृतं क्रियते तथेहापि पीडाद्योतनार्थं यच्छब्दितं तत्सीत्कृतमिव सीत्कृतं पूर्वाचार्यैः संज्ञितम् । नतु सीत्करणमेव सीत्कृतम् । यदाह—तदिति । सीत्कृतमनेकविधम् । हिंकारादिभेदात् ।

विरुतानि चाष्टौ ॥

विरुतानि तानि मूलवर्गेण संगृहीतानि सीत्कृतप्रकरण एव ध्वनिस्वभावत्वादुक्तानि । तेषां च रतिजन्यत्वात्प्रहणने चाप्रहणने च मनोज्ञत्वात्प्रयोगः । सीत्कृतस्य तु प्रहणन एवेति विशेषः ।

हिंकारस्तनितकूजितरुदितसूत्कृतदूत्कृतफूत्कृतानि ॥

तत्र हिंकारो यः सानुनासिकेन हिंशब्देन क्रियते । कण्ठनासिकाभ्यामूर्ध्वं गच्छन्मधुरो ध्वनिर्निष्पाद्यते । स्तनितं मेघस्येव यद्गम्भीरं ध्वनितम् । तच्च कण्ठाद्धंशब्देन निष्पाद्यते । रुदितं प्रतीतम् । तच्च मनोहारि स्यात् । सूत्कृतं सूत्करणं च श्वसितापरनाम । कूजितदूत्कृतफूत्कृतानां लक्षणं वक्ष्यति । सप्तैतान्यव्यक्ताक्षराणि ।

अम्बार्थाः शब्दा वारणार्था मोक्षणार्थाश्चालमर्थास्ते ते चार्थयोगात् ॥

---

१. 'अवस्थानम्'. २. 'स्वरसहस्ततलम्'. ३. 'तद्भव हि सीत्कृतम् । तच्चातिरूपत्वादनेकविधम्'. ४. 'मूलवर्गेण'. ५. 'हिंकारं स्तनित—'इत्यादिव्यस्तपदानि पुस्तकान्तरे. ६. 'सीत्कृत—'. ७. 'मोक्षार्थाः—चार्थसंप्रयोगात्'.

तत्र अम्बार्था इति अम्ब मातरित्यादयः । वारणार्था मा तिष्ठेत्यादयः । अलमर्था भवतु पर्याप्तमित्येवमादयः । मोक्षणार्थास्त्यज मुञ्चेत्यादयः । ते ते चार्थयोगादिति । अन्येऽपि पीडार्थयुक्ता मृतासि परित्रायस्वेत्येवमादयः ।

**पारावतपरभृतहारीतशुकमधुकरदात्यूहहंसकारण्डवलावकविरु[1]तानि सीत्कृतभूयिष्ठानि विकल्पशः प्रयुञ्जीत ॥**

पारावतादीनामिव विरुतानि पारावतविरुतानि । दात्यूहो यस्य 'डाउक' इति प्रसिद्धिः । सीत्कृतभूयिष्ठानीति सीत्कृतबहुलानि । प्रहणनकालेऽपि सीत्कृतस्य प्राधान्यादन्तरा प्रयुञ्जीतेत्यर्थः । सीत्कृतं हि स्वरान्तरसंश्लिष्टं मनोहारि स्यात् । विभागश्लिष्टगीतवत् । तत्रापि विकल्पशो विकल्पं विकल्पम् । एकैकमित्यर्थः ।

प्रहणनसीत्कृतयोर्यत्र देशेऽवस्थायां च प्रयोगस्तदुभयमाह—

**उ[2]त्सङ्गोपविष्टायाः पृष्ठे मुष्टिना प्र[3]हारः ॥**

उत्सङ्गोपविष्टाया इति नायकस्योत्सङ्गे । पृष्ठे मुष्टिना प्रहारः । नान्यैः । अननुरूपत्वात् ।

**तत्र सा[4]सूयाया इव स्तनितरुदितकूजितानि प्र[5]तीघातश्च स्यात् ॥**

तत्रेति मुष्टिना प्रहारे सासूयाया इव प्रहारमक्षममाणाया इव प्रयोक्त्यास्तदर्तिद्योतकानि स्तनितकूजितरुदितानि स्युः । तत्प्रहारानुरूपत्वात् । प्रतीघातश्चेति । मुष्टिनैव तत्पृष्ठे प्रतीघातः स्यात् ॥

**युक्तयन्त्रायाः स्तनान्तरेऽपहस्तकेन प्रहरेत् ॥**

युक्तयन्त्राया उत्तानायाः स्तनान्तरे स्तनयोर्मध्ये अपहस्तकेन प्रहरेत् । नान्यैः । अननुरूपत्वात् ।

**मन्दोपक्रमं वर्धमानरागमा परिसमाप्तेः ॥**

मन्दोपक्रमं वर्धमानरागमिति क्रियाविशेषणम् । आरम्भे मन्दया वृत्त्या प्रहारः । ततो यथा रागो वर्धते तथाधिक एवेत्यर्थः । आ परिस-

---

१. 'विरुतानि च'. २. 'उत्सङ्गमुपविष्टायाः'. ३. 'अभिघातः'. ४. 'सासूयेव'. ५. 'प्रतीघातांश्च प्रयोजयेत्'.

मासेस्त्रासिं यावत्। स्तनान्तरे हि रागास्पदस्य हृदयस्यावस्थानात्। योषितो हि त्रीणि रागस्थानानि—शिरो जघनं हृदयं चेति। तेषु हन्यमानेषु चिरचण्डवेगापि रागं मुञ्चति।

**तत्र हिंकारादीनामनियमेनाभ्यासेन विकल्पेन च तत्कालमेव प्रयोगः ॥**

तत्रेत्यपहस्तप्रहणने। हिंकारादीनां सप्तानाम्। अनियमेनेति मृदुना हृदयस्य हन्यमानत्वात्सर्वेषामेवार्तिसूचकानां संभवः। विकल्पेन मृदुमध्यातिमात्रभेदेन। अभ्यासेन च पौनःपुन्येन। तत्कालमेवेत्यपहस्तप्रहणनकालमेव। तस्य समाप्त्यवधिकः कालः।

**शिरसि किंचिदाकुञ्चिताङ्गुलिना करेण विवदन्त्याः फूत्कृत्य प्रहणनं तत्प्रसृतकम् ॥**

किंचिदाकुञ्चिताङ्गुलिना फणाकारेणेत्यर्थः। विवदन्त्या इति। अपहस्तेनासुखायमाना यदि प्रहारान्तराकाङ्क्षया प्रत्यवतिष्ठेत्तदास्याः प्रथमे रागास्पदे शिरसि तदनुरूपेण प्रसृतकेन प्रहणनमपरं मन्दोपक्रमं वर्धमानरागमा परिसमाप्तेर्विधेयम्। फूत्कृत्येति रागदीपनार्थम्।

**तत्रान्तर्मुखेन कूजितं फूत्कृतं च[1] ॥**

तत्रेति प्रसृतकाघाते। कूजितं फूत्कृतं च नायिकायाः स्यात्। कथमित्याह—अन्तर्मुखेनेति। मुखस्यान्तः स्थानमन्तर्मुखम्। तत्र कूजितम्। तत्संवृतेन कण्ठेन। कूजत्यनेनाव्यक्तं शब्दितम्। यदि विवृतेन जिह्वामूलेन च तत्फूत्कृतम्। तस्यानुकार्यं वक्ष्यति—बदरस्येवेति।

**रतान्ते च श्वसितरुदिते। वेणोरिव स्फुटतः शब्दानुकरणं दूत्कृतम्[2] ॥**

रतान्ते च श्वसितरुदिते। तदानीं धातुक्षयाच्छ्रमोत्पत्तेः। श्वसितं रुदितं च मधुरकोक्त्या प्रयोक्तव्यम्। वेणोरिव पुरुषव्यापारेण ग्रन्थिस्थाने स्फुटतस्तच्च दूत्कृतम्[3]।

---

१. 'च' इति पुस्तकान्तरे नास्ति. २. 'फूत्कृतम्'. ३. 'फूत्कृतम्'.

**अप्सु बदरस्येव निपततः (शब्दानुकरणं) फूत्कृतम् ॥**

ताल्वग्रादुपरिभागे जिह्वाग्रे संश्लेषादुत्पद्यते । बदरस्येवेति वृत्तगुटिकोपलक्षणार्थम् । निपततः । शब्दानुकरणमिति वर्तते । यस्येदं लक्षणं सलिले शर्करापातकालनिःस्वनितध्वनीति ।

**सर्वत्र चुम्बनादिष्वपक्रान्तायाः ससीत्कृतं तेनैव प्रत्युत्तरम् ॥**

चुम्बनादिष्वपक्रान्ताया इति चुम्बननखदशनच्छेद्येषु पुरुषेणाभियुक्तायाः ससीत्कृतं तेनैव प्रत्युत्तरं येनैव चुम्बनादीनामन्यतमेनोपक्रान्ता । तेनैव हिंकारादिसहायेन प्रत्युत्तरेदित्यर्थः । अनेन 'कृते प्रतिकृतं कुर्यात्' इति स्मरयति ।

**रागवशात्प्रहणनाभ्यासे वारणमोक्षणालमर्थानां शब्दानामम्बार्थानां च सतान्तश्वसितरुदितस्तनितमिश्रीकृतप्रयोगा विरुतानां च । रागावसानकाले जघनपार्श्वयोस्ताडनमित्यतित्वरया चापरिसमाप्तेः ॥**

रागवशात्प्रहणनाभ्यास इति । यदा रागस्योद्रेकान्नायकः पौनःपुन्येन प्रहरेत्तदा वारणार्थानां प्रयोगो युक्तः । किंरूप इत्याह—सतान्तेति । सह खिन्नाभ्यां श्वसितरुदिताभ्यां वर्तते यत्र स्तनितं तेन योजित इत्यर्थः । पारावतादिविरुतानां च प्रयोग एवंविध एव । रागावसानकाल इति । लिङ्गादासन्नवर्तिनी रतिरिति ज्ञात्वा जघने तृतीये रागास्पदे पार्श्वयोः कक्षाधस्ताडनम् । समतलेनेति पारिशेष्यात् । अन्ये 'समतलकेन' इति पठन्त्येव । अतित्वरयेति । विश्रब्धिकया हि ताडने मार्गोपन्ना हि रतिर्निवर्तते ।

**तत्र लावकहंसविकूजितं त्वरयैव । इति स्तननप्रहणनयोगाः ॥**

तत्रेति समतलकरताडने लावकहंसयोरिव शब्दितं कूजितं स्यात् । मृदुमधुरत्वात् । तच्च त्वरयैव । प्रहणनस्य त्वरितत्वात् । स्तननप्रहणन-

१. 'बदरस्येवाप्सु निमज्जत. प्लूत्कृतम्'. २. 'उपरिभागस्य'; 'उपरिभागजिह्वाग्रे'. ३. 'संश्लेषात्तु बदरस्येवेति'. ४. 'उपक्रान्तायाः'. ५. 'सतत–'; 'सुरतान्ते'; 'संततां'. ६. 'मिश्रितप्रयोगः'. ७. 'पीडन'. ८. 'लावकपरभृतहस–'.

योगा इति सीत्कृतविरुतात्मनः शब्दितस्य प्रहणनस्य च प्रयोगा उक्ताः।

स्त्रीपुंसयोः प्रहणनसीत्कृतेषु कस्य किं सहजं तेज इत्याह—

भवतश्चात्र श्लोकौ—

पारुष्यं रभसत्वं च पौरुषं तेज उच्यते।
अशक्तिरार्तिर्व्यावृत्तिरबलत्वं च योषितः॥
रागात्प्रयोगसात्म्याच्च व्यत्ययोऽपि क्वचिद्भवेत्।
न चिरं तस्य चैवान्ते प्रकृतेरेव योजनम्॥

पारुष्यमिति चेतसः शरीरस्य च कठोरता। रभसत्वमित्यविमृश्यकारिता धाष्टर्यं च। एतदुभयं पुरुषस्येदं तेजो धर्म इत्यर्थः। तद्योगात्पुरुषः प्रहरति। अशक्तिर्हन्तुमसामर्थ्यम्। हस्तसौकुमार्यादार्तिः पीडा। घ्नत्या व्यावृत्तिः। पुरुषेण हन्तुं नियुक्तायाः स्त्रिया अबलत्वं निष्प्राणता। स्वयमीषदाहरणात्। एते स्त्रैणा धर्माः। तद्युक्तत्वात्। न प्रहणनम्। सीत्कृतमेव तदुद्भवम्। अतः सीत्कृतप्रहणने विषयप्रतिनियते। क्वचिदिति। न सर्वत्र रते व्यत्ययोऽपि स्यात्। कारणमाह—रागप्रयोगसात्म्यादिति। रागस्य प्रकर्षेण योगाद्देशसात्म्याच्च स्त्री स्वधर्मांस्त्यक्त्वा पौरुषं तेजो बिभ्रती प्रहन्ति तदा पुरुषः स्त्रीप्रहणनार्थं स्वधर्मं त्यक्त्वा तद्धर्मानालम्ब्य सीत्कृतविरुतानि कुर्यात्। तानपि न चिरम्। कियतीमपि कालकलां व्यत्ययः स्यात्। ततः किं स्यादित्याह—तस्य चैवेति तस्यैव व्यत्ययस्यान्ते प्रकृतेरेव योजनं स्यात्। यथा स्वतेजसा स्त्रीपुंसयोर्वर्तनमित्यर्थः। तदेवं व्यत्ययप्रकृतियोजनाभ्यां प्रवृत्तेयाता(?)मा समाप्तेः। रागप्रयोगसात्म्याभावे तु प्राक्तन एव विधिः। तत्र व्यत्ययाभावात्।

प्रहणनं चतुर्विधमुक्तं यथा तदष्टधा दर्शयन्नाह—

कीलामुरसि कर्तरीं शिरसि विद्धां कपोलयोः संदंशिकां स्तनयोः पार्श्वयोश्चेति पूर्वैः सह प्रहणनमष्टविधमिति दाक्षिणात्या-

१. 'विहितात्मनः'. २. 'भवतश्चात्र श्लोकौ' इति पुस्तकान्तरे नास्ति. ३. 'प्रहन्ति'. ४. 'घ्नन्तं नत्वा व्यावृत्ति.'.

नाम्। तद्युवतीनामुरसि कीलानि च तत्कृतानि दृश्यन्ते। देशसात्म्यमेतत्॥

कीलामुरसीति। तत्र मुष्टिरेव तर्जनीमध्यमयोर्बहिः पृष्ठभागेन निष्क्रान्तयोरुपर्यङ्गुष्ठयोजनात्कीला। तयाधोमुख्या ताडनम्। कर्तरी द्विविधा प्रसृतकुञ्चिताङ्गुलिभेदात्। तत्र प्रसृताङ्गुलिर्द्विविधा। हस्तेनैकेन भद्रकर्तरी। द्वाभ्यां संश्लिष्टाभ्यां यमलकर्तरी। या कुञ्चिताङ्गुल्यङ्गुष्ठाग्रोपरिन्यस्तकुञ्चिततर्जनीका सा शब्दकर्तरी प्रयुज्यमाना श्लथाङ्गुलित्वादमितशब्दवती भवति। कैश्चिदुत्पलपत्रिकेत्युच्यते। उभाभ्यामपि कनिष्ठिकाग्रभागेण शिरसि ताडनम्। तर्जनीमध्यमयोर्मध्यमानामिकयोर्वा मध्येनाङ्गुष्ठं निष्काश्य बद्धा मुष्टिर्विद्धा। तयाङ्गुष्ठकवदनया कपोलयोर्व्यधनमेव ताडनम्। मुष्टिरेव तर्जन्यङ्गुष्ठकाभ्यां तर्जनीमध्यमाभ्यां वा संदंशनात्संदंशिका। तया स्तनयोः पार्श्वयोश्च मेलनपूर्वकं मांसस्याकर्षणमेव ताडनम्। पूर्वैरित्यपहस्तादिभिः। अष्टविधमिति दाक्षिणात्यानाम्। आचार्याणां तु चतुर्विधमस्ति। एतत्प्रत्यक्षेण दर्शयन्नाह—कीलानि चेति। तद्युवतीनां दाक्षिणात्यतरुणीनाम्। उरसीत्युपलक्षणम्। उरसि कीलाकृतम्। शिरसि सीमन्तमुखे कर्तरीकृतम्। कपोलयोर्विद्धाकृतम्। देशसात्म्यमेतत्। यद्रागवशात्तत्कृतं चिह्नं वैरूप्यकारणमपि श्लाघ्यते।

तेनान्यत्र प्रयोक्तव्यमित्याह—

कष्टमनार्यवृत्तमनादृतमिति वात्स्यायनः॥

कष्टमिति दुःखावहम्। निर्दयकर्मत्वात्। अनार्यवृत्तमसाधुचरितम्। अनादृतमित्यनादरणीयम्। दोषावहत्वात्।

तथान्यदपि देशसात्म्यात्प्रयुक्तमन्यत्र न प्रयुञ्जीत॥

तथान्यदपि प्रस्तराद्याहननं देशसात्म्यात्प्रयुक्तं दाक्षिणात्यैरन्यत्र नेति।

आत्ययिकं तु तत्रापि परिहरेत्॥

आत्ययिकं विनाशाङ्गवैकल्यकरणं तत्रापि परिहरेत् यत्रापि प्रयुक्तम्।

१. 'कीलानि च तद्युवतीनामुरसि'. २. 'एतदिति'. ३. 'व्यस्त–'. ४. 'मिषण–'. ५. 'तेनान्यत्र न'. ६. 'चान्यदपि'. ७. 'सात्म्यप्रयुक्त–'. ८. 'प्रयोक्तव्यम्'.

तमेवात्ययं दर्शयन्नाह—

**रतियोगे हि कीलया गणिकां चित्रसेनां चोलराजो जघान ॥**

रतियोगे इति । रत्यर्थे योगे यन्त्रसंप्रयोगे । चोलराजश्चोलविषये राजा । तेन हि चित्रसेना गणिका रतारम्भे दृढमालिङ्गिता सौकुमार्याच्छरीरपीडाममजत् । तथाप्रदर्शितावस्थामपि तां सुकुमारोपक्रमां रागान्ध्यादगणिततद्बलः कील्योरसि प्रयुक्तया व्यापादितवान् ।

**कर्तर्या कुन्तलः शातकर्णिः शातवाहनो महादेवीं मलयवतीम् ॥**

कुन्तल इति । कुन्तलविषये जातत्वात्तत्समाख्यः । शातकर्णिः शतकर्णस्यापत्यम् । शातवाहन इति संज्ञा । स हि महादेवीं मलयवतीमचिरप्रतिविहितमान्द्यामजातबलामपि मदनोत्सवे गृहीतवेषां दृष्ट्वा जातरागस्तामभिगच्छन्रागाक्षिप्तचेताः शिरसि कर्तर्यातिबलया जघान ।

**नरदेवः कुपाणिर्विद्धया दुष्प्रयुक्तया नटीं काणां चकार ॥**

नरदेवः पाण्ड्यराजस्य सेनापतिः । कुपाणिः शस्त्रप्रहारात्कुणिहस्तः । स हि राजकुले नटीं चित्रलेखां नृत्यन्तीं दृष्ट्वा जातरागः संप्रयोगे रागान्धो विद्धया कुपाणित्वाद्दुष्प्रयुक्तया कपोलतलमप्राप्याक्षिप्रासया काणां चकार । संदंशिका नोदाहृता । स्वभावतो नात्ययिकत्वात् ।

यद्वशादयुक्तं परिहरति [तत्] दर्शयन्नाह—

**भवन्ति चात्र श्लोकाः—**

**नास्त्यत्र गणना काचिन्न च शास्त्रपरिग्रहः ।**
**प्रवृत्ते रतिसंयोगे राग एवात्र कारणम् ॥**

नास्तीति । द्विविधो हि कामी शास्त्रतत्त्वज्ञस्तद्विपरीतश्च । तत्र शास्त्रतत्त्वज्ञस्यात्र प्रहणनविधौ न स्वभावतो गणनास्ति । काचिदिदमात्ययिकमिदम् । इदमित्यपेक्षयेत्यर्थः । न च शास्त्रपरिग्रहः । शास्त्रविहिताननुष्ठानात् । तस्मादस्य प्रवृत्ते रतिसंयोगे राग एवात्र प्रहणनविधौ प्रयोक्तव्ये कारणम् । नापरज्ञानम् । शास्त्रतत्त्वज्ञस्य तु सत्यपि रागे

---

१. 'पञ्चालराज.'. २. क्वचित्पुस्तके 'मलयवतीम्' इति नोपलभ्यते. ३. 'मान्द्यात्'. ४. 'कृपाणि.'; 'विप्राणिः'. ५. 'राजन्यस्य'. ६. 'श्लोकाः' इति पुस्तकान्तरे नास्ति. ७. 'गनिका'.

प्रवृत्तिकारणे ज्ञानमपरं कारणम् । ततश्च विमृश्यकारिणो गणना शास्त्रपरिग्रहश्चोभयमेव भवति । तस्मादुभयोरपि प्रवृत्तौ रागः कारणम् । तत्रैकस्य ज्ञानपरिष्कृतोऽन्यस्य तद्विकल इति विशेषः ।

यदा चानयोरतिप्रवृद्धो रागस्तदा तद्वशाददृष्टश्रुता अपि प्रयोगा भवन्तीति दर्शयन्नाह—

स्वप्नेष्वपि न दृश्यन्ते ते भावास्ते च विभ्रमाः ।
सुरतव्यवहारेषु ये स्युस्तत्क्षणकल्पिताः ॥

स्वप्नेष्वपीति । असंभाव्यवस्तुप्रकाशनयोग्येष्वपि । भावा अपि प्रियाविभ्रमचेष्टितानि । सुरतव्यवहारेषु परस्परचुम्बनाभिगमनादिव्यापारेषु तत्क्षणनिर्मितास्तत्कालकल्पिता. । न शास्त्रिता इत्यर्थः ।

तत्रैकस्य ज्ञानपरिष्कृतत्वाद्रतिजनन एवोत्पद्यन्ते अन्यस्य ज्ञानवैकल्यादत्ययावहा अपीति । तस्मादयं ज्ञानविकलोऽतिप्रवृद्धाद्रागात्प्रवर्तमानोऽत्ययं न पश्यतीति दृष्टान्तेन दर्शयन्नाह—

यथा हि पञ्चमीं धारामास्थाय तुरगः पथि ।
स्थाणुं श्वभ्रं दरीं वापि वेगान्धो न समीक्षते ॥
एवं सुरतसंमर्दे रागान्धौ कामिनावपि ।
चण्डवेगौ प्रवर्तेते समीक्षेते न चात्ययम् ॥

यथा हीति । अश्वस्य विक्रमो वैल्गितमुपकण्ठमुपजवो जवश्चेति पञ्चधारागतयस्तुरगशिक्षायामुक्ताः । तत्र पञ्चमीं जवाख्यां प्रकृष्टामास्थाय । स्थित्वेत्यर्थः । तत्रस्थो हि वायुगतिर्भवत्यश्वः । श्वभ्रं पौरुषं गर्तम् । दरीं देवनिर्मिताम् । एवमिति दार्ष्टान्तिकयोजनम् । सुरतसंमर्दे सुसंकुले । कामिनौ स्त्रीपुंसौ । 'पुमान्स्त्रिया' इत्येकशेषः ।

यस्माज्ज्ञानवैकल्यादयुक्तं दृश्यते तस्माज्ज्ञानप्रधानेन भवितव्यमिति दर्शयन्नाह—

तस्मान्मृदुत्वं चण्डत्वं युवत्या बलमेव च ।
आत्मनश्च बलं ज्ञात्वा तथा युञ्जीत शास्त्रवित् ॥

१. 'चुम्बनालिङ्गनादि–'. २. 'सप्राप्य'. ३. 'रागार्तौ'. ४. 'वलित–'. ५. 'ततः'; 'योगान्'.

तस्मादिति। मृदुत्वं चण्डत्वमिति। मन्दवेगतां चण्डवेगतां चेत्यर्थः। बलं प्राणः। आत्मनश्च मृदुत्वचण्डत्वे इति योज्यम्। तथेति मृद्वादिप्रकारेण। प्रयुञ्जीत प्रयोगान्। शास्त्रवित्। अन्यथा शास्त्रज्ञेतरयोः को भेदः स्यात्। वक्ष्यति च—'अस्य शास्त्रस्य तत्त्वज्ञो न स रागात्प्रवर्तते' इति।

मृद्वादिभेदेन प्रयोगयोजने सर्वे सर्वदा सर्वासु स्त्रीषु स्युरिति चेदाह—

न सर्वदा न सर्वासु प्रयोगाः सांप्रयोगिकाः।
स्थाने देशे च काले च योग एषां विधीयते॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे
प्रहणनप्रयोगास्तद्युक्ताश्च सीत्कृतक्रमाः[1] सप्तमोऽध्यायः।
आदितो द्वादशः।

न सर्वदेति। तत्र स्थाने प्रयोगो यथा—अपहस्तस्य स्तनान्तरे प्रसृतस्य शिरसीत्यादि। देश इति। प्रयोगविषय इत्यर्थः। यथा मालव्यां प्रहणनस्य आभीर्यामौपरिष्टकस्येत्यादि। युक्तयन्त्रायामपहस्तस्य उत्सङ्गोपविष्टायां मुष्टिरित्यादि कालप्रयोगः॥ प्रहणनप्रयोगाः पञ्चदशं प्रकरणम्। तद्युक्ताश्च तदन्तर्गताः सीत्कृतक्रमाः षोडशं प्रकरणम्॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां साम्प्रयोगिके द्वितीयेऽधिकरणे प्रहणनयोगाः सीत्कृतक्रमाश्च सप्तमोऽध्यायः।

---

अष्टमोऽध्यायः।

एवं प्रहणनादिव्यापारेण परिश्रान्ते नायके नायिका पुरुषवदाचरेदिति पुरुषायितम्, तदुपयोगित्वाच्च तदन्तर्गतानि पुरुषोपसृप्तानीति[2] प्रकरणद्वयमत्राध्यायः।

तत्र कारणान्याह—

नायकस्य संतताभ्यासात्[3]परिश्रममुपलभ्य रागस्य चानुपशमम्, अनुमता तेन तमधोऽवपात्य[4] पुरुषायितेन साहाय्यं दद्यात्। स्वाभिप्रायाद्वा विकल्पयोजनार्थिनी[5] नायककुतूहलाद्वा॥

---

१. 'सीत्कृतोपक्रमाः'. २. 'उपसृष्टानीति'. ३. 'रताभ्यास–'; 'सतताभ्यास'. ४. 'तमधः पात्य'; तमवपात्य'. ५. 'विकल्पप्रयोजनार्था'; 'शिल्पप्रयोजनार्था'.

नायकस्येति । संततताभ्यासादिति रतस्य पौनःपुन्येनानुष्ठानात् । परिश्रमं सर्वाङ्गिकं समम् । रागस्य चानुपशममशान्तिमुपलभ्य । तत्राप्यनुमता । तेनेति नायकेन । अननुज्ञाता हि योषिद्विसदृशमाचरन्ती निस्त्रपैव स्यात् । तमधोऽवपात्य नायकमधस्तात्कृत्वा । एवं हि पुरुषवदाचरितम् । तेन साहाय्यं सहायकर्म प्रतिपद्यते । कार्यस्यानिष्पन्नत्वात् । स्वाभिप्रायाद्वेति । अननुमतापि तेन जातविस्रम्भा । विकल्पं पुरुषायितभेदं योजयितुमर्थिनी । तच्छीलत्वात् । नायककुतूहलाद्वेति । नायकस्यात्र कौतुकमस्तीति ज्ञात्वा वा तेनाननुमता परिश्रान्तस्यापि दद्यादित्येव ।

तत्र युक्तयन्त्रेणैवेतरेणोत्थाप्यमाना तमधः पातयेत् । एवं च रतमविच्छिन्नरसं[1] तथा प्रवृत्तमेव स्यात् । इत्येकोऽयं मार्गः[2] । पुनरारम्भेणादित एवोपक्रमेत्[3] । इति द्वितीयः ॥

तत्रेति । पुरुषायिते द्विविधः क्रमः । तत्रायं प्रथमो युक्तयन्त्रेणैवापरित्यक्तशल्यसंयोगेनैव इतरेण नायकेन [4]ऽधस्स्थितेनासीनेन चोत्थाप्यमाना बाहुपाशसंदानिता सत्युपरि क्रियमाणा तं नायकमवपातयेदिति । एवं सति रतमविच्छिन्नरसं तथा प्रवृत्तमेव स्यात् । यन्त्रं हि विश्लेष्य पुनः संधाने रतमपूर्वमेव स्यात् । न पूर्वप्रकारप्रवृत्तम् । यथाप्रवृत्तश्चात्र रागो विच्छिद्यते । तस्य चाकस्माद्विच्छेदे न सौमनस्यमित्यत्र कामिनः प्रमाणम् । अयं मार्गः श्रमवृद्धौ रागस्यानुपशमे द्रष्टव्यः । स्वाभिप्रायादिषु पुनरारम्भेणेति । यदा रतस्य पुनरारम्भस्तदा तेनारम्भेण पुरुषवदादावेवोपक्रमेत् । प्रवृत्ते द्वितीयो मार्गः । नापरस्तृतीयः । यदन्तरा यन्त्रं विश्लेष्य प्रयोक्तव्यम् ।

पुरुषायितं द्विविधम्, बाह्यमाभ्यन्तरं च । तत्र प्रथममधिकृत्याह—

सा प्रकीर्यमाणकेशकुसुमा श्वासविच्छिन्नहासिनी वक्त्रसंसर्गार्थं स्तनाभ्यामुरः पीडयन्ती पुनः पुनः शिरो नामयन्ती याश्चेष्टाः पूर्वमसौ दर्शितवांस्ता[5] एव प्रतिकुर्वीत । पातिता प्रतिपातयामीति

१. 'रस भवति'. २. 'एको मार्गः'. ३. 'उपक्रमेत्'. ४. 'शय्यास्थितेन'. ५. 'असौ प्रदर्शितवान्'.

हसन्ती तर्जयन्ती प्रतिघ्नती च ब्रूयात् । पुनश्च व्रीडां दर्शयेत् । श्रमं विरामाभीप्सां च । पुरुषोपसृप्तैरेवोपसर्पेत् ॥

सेति । स्वशिरसः प्रकीर्यमाणानि केशकुसुमानि चेष्टमानया ययेति विग्रहः । श्वासेन विच्छिन्नो यो हासः सोऽस्ति यस्याः । असदृशव्यापारेण जातश्रमत्वात् । वक्त्रसंसर्गार्थं लज्जया । न तु चुम्बनदशनच्छेद्यार्थम् । स्तनाभ्यामुरो नायकस्य पीडयन्तीति । स्तनोपगूहनमेतत् । पुनः पुनः शिरो नामयन्ती लज्जया । सर्वमेतत्स्त्रैणेन तेजसा चेष्टितमुक्तम् । पौंस्नेनाह—या इति । चेष्टा यांश्चुम्बनादिव्यापारान्पूर्वमसौ दर्शितवान् पारुष्यरभसाभ्यां ता एव प्रतीपं कुर्वीत । तदेव स्फुटयन्नाह—पातितेति । यथाहं त्वया निर्दयरतेन क्लेशिता तथाहं त्वामपि प्रतीपं पातयामीति ब्रूयादिति संबन्धः । तत्रापि हसन्ती, राभसिकतया तर्जयन्ती तर्जन्या, प्रतिघ्नती चात्यर्थमपहस्तादिना । तदुभयं पारुष्यं दर्शयति । ततश्चासौ स्त्रैणतेजःप्रख्यापनार्थमव्रीडितापि व्रीडाम्, अश्रान्तापि श्रमम्, रन्तुमिच्छन्त्यपि विरामाभीप्सामुपेत्य दर्शयेत् । पुरुषवदाचरितं हि योषितः पुरुषायितम् । ततश्च पुरुषस्य योषिति यदुपसर्पणमुपसृप्तं तदप्याचरन्त्याः पुरुषायितम् । प्रायशश्च पुरुषोपसृप्तान्नान्यत्पुरुषायितमिति नियमयन्नाह—पुरुषोपसृप्तैरेवोपसर्पेदिति ।

तानि च वक्ष्यामः ॥

इतः प्रभृति पुरुषोपसृप्ताख्यं प्रकरणमिति दर्शयति ।

तानि द्विविधानि, बाह्यान्याभ्यन्तराणि च । तत्र बाह्यान्याह—

पुरुषः शयनस्थाया योषितस्तद्वचनव्याक्षिप्तचित्ताया इव नीवीं विश्लेषयेत् । तत्र विवदमानां कपोलचुम्बनेन पर्याकुलयेत् । स्थिरलिङ्गश्च तत्र तत्रैनां परिस्पृशेत् । प्रथमसंगता चेत्संहतोर्वोरन्तरे घट्टनम् । कन्यायाश्च । तथा स्तनयोः संहतयोर्हस्तयोः कक्षयोरंसयो-

१. 'प्रतितर्जयन्ती च'. २. 'कुर्यात्'. ३. 'उपघट्टम्'. ४. 'इति यदुपसर्पणमुपनियमयन्नाह'. ५. 'शयनगतायाः'. ६. 'वचनाक्षिप्त–'. ७. 'संहतयोश्चोर्वोः'. ८. 'स्तनयोर्हस्तकक्षयोः संहतयोः'.

**ग्रीवायामिति च । स्वैरिण्यां यथासात्म्यं यथायोगं च । अलके चुम्बनार्थमेनां निर्दयमवलम्बेत् । हनुदेशे चाङ्गुलिसंपुटेन । तत्रेतरस्या व्रीडा निमीलनं च । प्रथमसमागमे कन्यायाश्च ॥**

यदा पुरुषः प्रयोक्ता तदा पुरुषोपसृप्तकम्, स्त्री चेत्पुरुषायितमिति दर्शनार्थं पुरुषग्रहणम् । एवं च पुरुषायितेन सहास्य वचनम् । शयनस्थाया इति । शयनात्प्रागरतारम्भं प्रकरणं वक्ष्यति । तद्वचनव्याक्षिप्तचित्ताया इवेति नायकोक्तिभिरन्यचित्ताया नायिकायाः । लज्जाख्यापनार्थं दर्शनायेतीवार्थः । नीवी निवसनबन्धः । तत्रेति विश्लेषणे विवदमानां कर्तुमददतीं कपोलचुम्बनेन समन्तादाकुलयेत् । यथा नीवी सुखेन स्रंसते । स्थिरलिङ्गश्चेति । जातरागत्वात्सिद्धलिङ्गः । तस्यां च जातरागायां सिद्धं कार्यम्, न चेदत्राह—तत्र तत्रेति । कक्षोरुस्तनादिष्वेनां नायिकां रागजननार्थं हस्तेन परिस्पृशेदिति । एतदसकृन्नायकेन संगतायामतिविस्रब्धायामुक्तम् । यदि प्रथमसंगता तदास्या नीवीस्रंसनस्पर्शनं नास्त्येव । लज्जया संहतयोश्चोर्वोरन्तरे च संधौ हस्तेन संघट्टनं चलनम् । यथा विवृतौ स्याताम् । कन्यायाश्चेति । कन्याविस्रम्भणे विस्रब्धाया अप्यस्या लज्जया संहतयोरन्तरे घट्टनं नीवीस्रंसनं स्पर्शनं च । अस्या अधिकमाह—स्तनयोः संहतयोर्भुजमध्या सूच्या । हस्तयोः परस्पराश्लिष्टयोः प्रत्येकं वा बद्धमुष्टयोः । कक्षयोः प्रत्येकं कृतसंकोचयोः । अंसयोर्हस्तयोजनात् ग्रीवाबाहुशिखरयोजनाद्वा संहतयोः । ग्रीवायां हस्तपाशसंश्लेषात्संहतायाम् । संघट्टनमित्येव । स्वैरिण्यामिति । या नायिका रूढविस्रम्भत्वात्सुरते निस्त्रपं यथेष्टचारिणी सा स्वैरिणी । अभियोक्त्रीत्यर्थः । तस्या यथासात्म्यं यथायोगं चेति । यद्येन सात्म्यं यच्च यत्र युज्यते तत्तस्य स्पर्शनमित्यर्थः । चुम्बनार्थमेनामिति । कृतक्षान्ति पूर्वोक्तां स्वैरिणी चालके निर्दयमवलम्बेत् । इतरस्या इति नायि-

---

१. 'अस्वैरिण्याम्'. २. 'तत्र तत्रेतरस्या'. ३. 'ख्यापनार्थो'. ४. 'नो चेदाह'. ५. 'तत्तत्र'.

कायाः । विधिमाह—या प्रथमसंगता कन्या च तस्या व्रीडा लज्जा निमीलनं चाक्ष्णोः स्यात् । न त्वतिविस्रब्धायाः स्वैरिण्याश्चेति । एवं नीवीविस्रंसनस्पर्शनघट्टनावलम्बनैश्चतुर्भिर्बाह्यैरुपसृप्तैः शयनस्थां विश्वास्य सांप्रयोगिकांश्चुम्बनादीन्प्रयुञ्जीत ।

आभ्यन्तराण्यभिधातुमाह—

**रतिसंयोगे चैनां कथमनुरज्यत इति प्रवृत्त्या परीक्षेत ॥**

रतिसंयोगे चेति रत्यर्थे यन्त्रसंयोगे सति । एनामिति बाह्यैरुपसृप्तां प्रवृत्त्या चेष्टया परीक्ष्य यथाकथंचिदाभ्यन्तरैरुपसर्पेदित्यर्थः ।

तत्र प्रवृत्तिमाह—

**युक्तयन्त्रेणोपसृप्यमाणा यतो दृष्टिमावर्तयेत्तत एवैनां पीडयेत् । एतद्रहस्यं युवतीनामिति सुवर्णनाभः ॥**

युक्तयन्त्रेणेति । यत इति यत्र संबाधस्यान्तरं भागं लक्षीकृत्य साधनेनोपसृप्यमाणा तत्स्पर्शसुखाद्दृष्टिमावर्तयेद्दृष्टिमण्डलं भ्रमयेत् तत एवेति तमाश्रित्य पीडयेत् । साधनेनात्यर्थमुपसर्पेत् । तत्र हि पीडनाद्दुतं रतिमधिगच्छति । एतद्रहस्यम् । स्त्रीभिरप्रकाश्यत्वात् । तथा हि रतिप्राप्त्यर्थमन्यैः प्रकारान्तरमुक्तम् । शास्त्रकृतः सुवर्णनाभमतमभिमतम् । अप्रतिपिद्धत्वात् । अत्र च रतिंबन्धनमेको बहव इति केषांचित्प्रदेशविवादः । तत्रोपसृप्यमाणा यस्मिन्नेकस्मिन्नियतेऽनियते वा देशे स्पृष्टा दृष्टिमावर्तयेत्तस्मिन्नेव पीडयेदित्येकः प्रकारः । बहुषु वा यस्मिन्नुपसृप्यमाणा दृष्टिमावर्तयेत्तस्मिंस्तस्मिन्नेव पीडयेदिति द्वितीयः । तत्रापि यस्मिन्नत्यर्थं दृष्टिमावर्तयेत्तस्मिन्नत्यर्थमेव पीडयेदिति बोद्धव्यम् । एतेन नाडीप्रदेशा अप्यन्यतन्त्रोक्ता व्याख्याताः । तेषामनेनैव प्रकारेण ज्ञायमानत्वात् ।

---

१. 'स्तब्धायाः'. २. 'उपसृतैः'. ३. 'चैषा'. ४. 'तच्च परीक्ष्य'. ५. 'तत्र तत्रैनाम्'; 'तत्रैनाम्'; 'तत्र एवैनाम्'. ६. 'कक्षीकृत्य'. ७. 'संबन्धनम्'. ८. 'केचित्'. ९. 'अन्यत्रोक्ताः'.

उपसृप्यमाणाया भावस्य तिस्रोऽवस्थाः—प्राप्तः, प्रत्यासन्नः, संधुक्ष्यमाणश्चेति । त्रयाणां लक्षणमाह—

**गात्राणां स्रंसनं नेत्रनिमीलनं व्रीडानाशः समधिका च रतियोजनेति स्त्रीणां भावलक्षणम् ॥**

तत्र गात्रावसादो नेत्रनिमीलनं च प्राप्तस्य लिङ्गम् । व्रीडानाशो लज्जानिवृत्तिः । रतियोजनेति रत्यर्थं योजना । यन्त्रयोजनेत्यर्थः । सा स्वजघनस्य नायकजघनेनात्यन्तलग्नात्समधिकेति प्रत्यासन्नस्य । भावलक्षणमिति प्राप्तप्रत्यासन्नस्येत्यर्थः ।

संधुक्ष्यमाणस्येत्याह—

**हस्तौ विधुनोति स्विद्यति दशत्युत्थातुं न ददाति पादेनाहन्ति रतावमाने च पुरुषातिवर्तिनी ॥**

हस्ताविति । विधुनोति कम्पयति । उत्थातुं न ददाति यन्त्रयोगात् । पुरुषातिवर्तिनीति । पुरुषस्य रतिप्राप्तौ तमतिक्रम्य स्वजघनव्यापारेण वर्तत इत्यर्थः ।

**तस्याः प्राग्यन्त्रयोगात्करेण संबाधं गज इव क्षोभयेत् । आ मृदुभावात् । ततो यन्त्रयोजनम् ॥**

तस्याश्चेष्टितमीदृशं बुद्ध्वा यन्त्रयोगात्प्राग्वत्स्वयं रतमधिगम्य पश्चात्तदानीमस्या रतं विच्छिन्नरसं स्यात् । तच्चतुर्विधम् । यथोक्तम्—'अन्तः पद्मदलस्पर्शं गुटिकावच्च योषितः । वलिभं च वराङ्गं स्याद्गोजिह्वाकर्कशं तथा ॥' इति । तत्राद्यं त्यक्त्वा शेषं कण्डूतिबहलत्वात्करेण क्षोभयेत् । आ मृदुभावादिति । यावन्मृदुतां गतम् । ततो यन्त्रयोजनम् । मृदुभूते हि तस्मिन्नुपसृप्यमाणा द्रुतं रतिमधिगच्छति । गज इवेति करौपम्यार्थम् । गजाकारेणेत्यर्थः । तथा चोक्तम्—'अनामिकाप्रदेशिन्यौ श्लिष्टाग्रे

---

१. 'रागस्य'. २. 'यन्त्राणाम्'. ३. 'स्रस्तता नेत्रयोः' ४. 'हस्तौ धुनोति कम्पते दशति स्विद्यति खिद्यते—पुरुषातिवर्तिनी स्यादिति अनधिगतभावलक्षणम्'. ५. 'संक्षोभयेत्'. ६ 'प्राक्'. ७. 'अधिगम्य' इत्यत्र किमपि त्रुटितं भाति ८. 'वलिभं च'. ९. 'विषयत्वात्. १०. 'करोरूपस्यार्थे'.

ज्येष्ठया सह । गजहस्ताग्रसादृश्यात्तत्संज्ञं कृत्रिमं स्मृतम् ॥' एवं च क-रग्रहणं कृत्रिमसाधनोपलक्षणार्थम् । तेन कृत्रिमेणाभ्यन्तराण्युपसृप्तानि [1]द्रष्टव्यानि ।

तान्याह—

उपसृप्तकं मन्थनं हुलोऽवमर्दनं पीडितकं निर्घातो वराहघातो वृषाघातश्चटकविलसितं संपुट इति पुरुषोपसृप्तानि । न्याय्यमृजुसं-मिश्रणमुपसृप्तकम् । हस्तेन लिङ्गं सर्वतो भ्रामयेदिति मन्थनम् । नीची-कृत्य जघनमुपरिष्टाद्धट्टयेदिति हुलः । तदेव विपरीतं सरभसमवमर्द-नम् । लिङ्गेन समाहत्य पीडयंश्चिरमवतिष्ठेदिति पीडितकम् । सुदू-रमुत्कृष्य वेगेन स्वजघनमेवपातयेदिति निर्घातः । एकत एव भू-यिष्ठमवलिखेदिति वराहघातः । स एवोभयतः पर्यायेण वृषाघातः । सकृन्मिश्रितमनिष्क्रमय्य द्विस्त्रिश्चतुरिति घट्टयेदिति चटकविलसि-तम् । रागावसानिकं व्याख्यातं करणं संपुटमिति ॥

लिङ्गेन संबाधस्य मिश्रणात्सर्वमेवोपसृप्तकम् । तत्र यदृजु प्रगुणं न्याय्यमागोपालाङ्गनाप्रसिद्धं मिश्रणं तदुपसृप्तकमिति कन्प्रत्ययेन विशे-षसंज्ञां दर्शयति । हस्तेन लिङ्गं गृहीत्वा संबाधाभ्यन्तरे सर्वतो मैथ्न-न्निव भ्रामयेत् । नीचीकृत्य जघनमिति स्त्रीकटिमधः कृत्वा । उपरिष्टा-दिति । अभ्यन्तरस्योर्ध्वभागे भगं [ब]हुलेनैव लिङ्गेनावघट्टयेत् । तदे-वेति घट्टनम् । विपरीतमुच्चीकृत्य जघनमधस्तादिति विशेषश्चापरो यः । सरभसमिति । रभसेन गृह्णीयादित्यर्थः । अधोभागस्य कण्डूतिबहुलत्वात् । लिङ्गेनेति । वेगाद्वा मूलं प्रवेशमानेन समाहत्य पीडयन्भगमवतिष्ठेत । तिष्ठेत चिरमिति यावन्तं कालं लिङ्गोन्नमनावनमनानि कर्तुं समर्थः । सुदूरमिति । प्रवेशितं लिङ्गमाँ निबन्धमाकृष्य वेगेन जघन एव निर्घातवत्क्षिपेत् । एकत एवेति । एकस्मिन्नेव पार्श्वे भूयिष्ठं बहून्वारान्वराहवद्दंष्ट्रयाव-लिखेत् । स एवेति वराहस्य घातः । उभय इति । उभयपार्श्वयोः परि-

1. 'द्रष्टव्यानि । तान्याह' इति पुस्तकान्तरे नास्ति. २. 'मुकरम्'. ३. 'अवपी-डयेन'

पाट्या वृषभवच्छृङ्गाभ्यामवलिखेत् । सक्तन्मिश्रितमिति । एकवारं प्रवेशितं लिङ्गमनिष्क्रमय्यानिष्कास्य बहिरभ्यन्तरमेव किंचिदाकृष्य चटकवत्तत्रैव लिङ्गं संघट्टयेत् । द्विस्त्रिर्वा । प्रकर्षेण चतुरिति । रागावसानिकमेतत् । विसृष्टयवस्थायामेव स्वभावत्वात् । व्याख्यातमिति करणं संपुटम् । तच्च व्याख्यातम्—'ऋजुप्रसारितावुभयोश्चरणौ' इति । तत्र लिङ्गमनिष्क्रमय्य जघनेन जघनमेवगूह्य यत्संमिश्रणं तदपि संपुटमित्युक्तम् ।

तेषां स्त्रीसात्म्याद्विकल्पेन प्रयोगः ॥

तेषामिति उपसृप्तकादीनाम् । स्त्रीसात्म्यादिति येन यस्याः सात्म्यं तेन तस्यां प्रयोगः । विकल्पेन मृदुमध्यातिमात्रभेदेन । तत्र पुरुषोपसृप्तेषु यद्बाह्यं नीवीविश्लेषणादिकं तद्द्वितीये मार्गे नायककक्षाबन्धविश्लेषणादि बाह्यं पुरुषायितम्, यच्चाभ्यन्तरमुपसृप्तं तन्मार्गद्वयेऽप्याभ्यन्तरं पुरुषायितं द्रष्टव्यम् ।

पुरुषोपसृप्तं प्रकरणमुक्त्वा विशेषाभिधित्सया पुनः पुरुषायितमाह—

पुरुषायिते तु संदंशो भ्रमरकः प्रेङ्खोलितमित्यधिकानि ॥

पुरुषायिते त्विति । अभ्यन्तरे पुरुषायिते प्रवर्तमानायास्त्रीण्यधिकानि ।

वाडवेन लिङ्गमवगृह्य निष्कर्षन्त्याः पीडयन्त्या वा चिरावस्थानं संदंशः ॥

वाडवेनेति वराङ्गौष्ठसंदंशेन लिङ्गमवगृह्य निष्कर्षन्त्या अन्तः समाकर्षन्त्याः स्थानमवस्थितिः ।

युक्तयन्त्रा चक्रवद्भ्रमेदिति भ्रमरक आभ्यासिकः ॥

युक्तयन्त्रेति । भगप्रवेशितलिङ्गा कुलालचक्रवत्कुञ्चितचरणा नायकाङ्गे हस्ताभ्यां शरीरावष्टम्भं कृत्वा भ्रमयेत् । अयमभ्यासाद्भवति ।

तत्रेतरः स्वजघनमुत्क्षिपेत् ॥

---

१. 'करणसंपुटम्'. २. 'अवगुह्य'; 'अवगृह्य'. ३ 'अधिमात्र–'. ४. 'करव्याबन्ध–'. ५. 'भ्रमकरम्.' ६. 'वाडवकेन'. ७. 'निष्कर्षयन्त्याः'. ८. 'चिरमवस्थानम्'.

तत्रेति भ्रमरके । इतरो नायको यन्त्राविश्लेषार्थं भ्रमरकसौकर्यार्थं च स्वजघनमूर्ध्वं क्षिपेत् ।

**जघनमेव दोलायमानं सर्वतो भ्रामयेदिति प्रेङ्खोलितकम् ॥**

दोलायमानमिति पृष्ठतो नीत्वाग्रतो नयेत् । एकं पार्श्वं नीत्वा द्वितीयमित्येवम् । तत्प्रेङ्खणात्प्रेङ्खोलितकम् । मण्डलेन तु भ्रमितं मन्थनान्तर्भूतम् । तेषां पुरुषसात्म्याद्विकल्पेन च प्रयोग इत्यत्रापि योज्यम् ।

**युक्तयन्त्रैव ललाटे ललाटं निधाय विश्राम्येत ॥**

युक्तयन्त्रैव विश्राम्येत न विश्लिष्टयन्त्रा । रागस्यानुपशान्तत्वात् । ललाटे ललाटं निधायेति श्रमापनयनकारणम् ।

**विश्रान्तायां च पुरुषस्य पुनरावर्तनम् । इति पुरुषायितानि ॥**

पुनरागमनं पुनरुपरि गमनमित्यर्थः । रत्यधिगमात्तु परिश्रान्तायां पुनरावर्तनमित्यर्थोक्तम् । यथा रतपरिश्रान्तेन साहायकार्थं पुरुषायितेऽनुमन्यते तथा तत्स्वभावप्रतिपत्त्यर्थमिति ।

तत्र नियोज्यादि दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

**प्रच्छादितस्वभावापि गूढाकारापि कामिनी ।**
**विवृणोत्येव भावं स्वं रागादुपरिवर्तिनी ॥**

प्रच्छादितस्वभावापीति लज्जया प्रच्छादितोऽभिप्रायो यया । कथमित्याह—गूढाकारेति । अभिप्रायसूचकस्याकारस्य गोपितत्वात् । साप्युपरिवर्तिनी कामयमाना स्वभावमात्मीयमभिप्रायं रागात्प्रकाशयति न गृहितुं शक्नोति । अतो नियोज्यम् ।

तदेव स्फुटयन्नाह—

**यथाशीला भवेन्नारी यथा च रतिलालसा ।**
**तस्या एव विचेष्टाभिस्तत्सर्वमुपलक्षयेत् ॥**

यथाशीलेति । यादृशः स्वभावो यस्याः । यथा च रतिलालसा येन प्रकारेण रतौ जाततृष्णा । तस्या उपरिवर्तिन्या विचेष्टाभिस्तत्प्रकाराभिः ।

---

१. 'सर्वत्र'. २. 'कथम्'. ३. 'विश्रान्तायाः'. ४. 'च'. ५. 'गूढरागा'

तत्सर्वमिति शीलं रतिप्रकारं च सर्वमुपलक्षयेत् । येनोत्तरकाले तथैव सुरते समुपक्रमेत ।

तत्रापवादमाह—

न त्वेवर्तौ न प्रसूतां न मृगीं न च गर्भिणीम् ।
न चातिव्यायतां नारीं योजयेत्पुरुषायिते ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे पुरुषोपसृप्तानि पुरुषायितं चाष्टमोऽध्यायः ।

आदितस्त्रयोदशः ।

न त्वेवेति । ऋतौ न योजयेत् । गर्भाग्रहणभयात् । पुनरावर्तने च गर्भग्रहणाद्दारकदारिके व्यस्तशीले स्याताम् । न प्रसूतामचिरप्रसूताम् । प्रदरकटिनिर्गमभयात् । न मृगीम् । वृषाश्वयोरवपाटिकाभयात् । न गर्भिणीम् । गर्भस्रावभयात् । नातिव्यायतामतिस्थूलाम् । व्यापारयितुमशक्यत्वात् ॥ पुरुषायितं सप्तदशं प्रकरणम् । तदन्तर्गतानि पुरुषोपसृप्तान्यष्टादशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां सांप्रयोगिके द्वितीयेऽधिकरणे पुरुषायितं पुरुषोपसृप्तानि चाष्टमोऽध्यायः ।

---

नवमोऽध्यायः ।

आलिङ्गनादिपुरुषायितान्तं चतसृषु नायकासूक्तम्, 'तृतीयाप्रकृतिः पञ्चमीत्येके' इत्युक्तम्, तद्विषयमौपरिष्टकमुच्यते द्विविधेत्यादिना ।

**द्विविधा तृतीयाप्रकृतिः स्त्रीरूपिणी पुरुषरूपिणी च ॥**

तृतीयाप्रकृतिर्नपुंसकम् । स्त्रीरूपिणी स्त्रीसंस्थाना । स्तनादियोगात् । पुरुषरूपिणी पुरुषसंस्थाना । श्मश्रुलोमादियोगात् । यद्वृत्तिमाश्रित्यौपरिष्टकमनयोस्तदुच्यते ।

---

१. 'सत्युपक्रमेण' २. 'प्रजाताम्'.

तत्र पूर्वमधिकृत्याह—

**तत्र स्त्रीरूपिणी स्त्रिया वेषमालापं लीलां भावं मृदुत्वं भीरुत्वं मुग्धतामसहिष्णुतां व्रीडां चानुकुर्वीत ॥**

तत्रेति। तयोः सम्यक्स्त्रीत्वख्यापनार्थं तावत्स्त्रीधर्मानुकरणम्। तत्र वेषं केशपरिधानादिविन्यासेन, आलापं काकल्यनुगतम्, लीलां मन्थरादिगमनम्, भावं हावादिकम्, मृदुत्वमकार्कश्यम्, भीरुत्वं भयशीलताम्, मुग्धतामृजुताम्, असहिष्णुतां ग्रहणनवातातपाद्यक्षमताम्, व्रीडां लज्जामनुकुर्वीत।

**तस्या वदने जघनकर्म। तदौपरिष्टकमाचक्षते ॥**

तस्या इति स्त्रीधर्माननुकुर्वत्या। मुखे जघनकर्मेति स्वरूपाख्यानम्। भगे लिङ्गेन यत्कर्म तन्मुखे क्रियमाणमौपरिष्टकम्। आचक्षत इति पूर्वाचार्यकृतेयं संज्ञा। उपरिष्टान्मुखे भवतीत्यण्। 'अव्ययानां भमात्रे टिलोपः'। पश्चात् 'संज्ञायां कन्'। 'अमेहक्वतसित्रेभ्य एव' इति परिगणनात्त्यन्न भवति।

फलमाह—

**सा ततो रतिमाभिमानिकीं वृत्तिं च लिप्सेत्। वेश्यावच्चरितं प्रकाशयेत्। इति स्त्रीरूपिणी ॥**

सा तत इति। औपरिष्टकाद्रतिं प्रीतिमाभिमानिकीं प्रागुक्तलक्षणाम्। वृत्तिं जीविकाम्। भाटीलाभात्। चरितमिति वेश्याया वृत्तं वैशिके वक्ष्यति। तद्वेश्येव प्रकाशयन्ती गम्यैरभिगम्यमाना रतिं धृतिं वा प्राप्नोति।

द्वितीयामधिकृत्याह—

**पुरुषरूपिणी तु प्रच्छन्नकामा पुरुषं लिप्समाना संवाहकभावमुपजीवेत्[1]। संवाहने परिष्वजमानेव गात्रैरूरू नायकस्य मृद्नीयात्[2]। प्रसृतपरिचया चोरुमूलं सजघनमिति संस्पृशेत्[3]। तत्र स्थिरलिङ्गतामुपलभ्य चास्य पाणिमन्थेन परिघट्टयेत्। चापलमस्य कुत्सयन्तीव हसेत्। कृतलक्षणेनाप्युपलब्धवैकृतेनापि न चोद्यत इति चेत्स्वयमु-**

१. 'उपचरेत्। संवाहनेन च परिष्वजन्ती'. २. 'मृद्नीयात्'. ३. 'प्रसृतपरिचयोरुमूलं संस्पृशन्ती स्थिरलिङ्गतामस्योपलभ्य'.

**पक्रमेत् । [1]पुरुषेण च चोद्यमाना विवदेत् । कृच्छ्रेण चाभ्युपगच्छेत् ॥**

तुशब्दो विशेषणार्थः । रतिरौपरिष्टकं च तुल्यम् । वृत्तं तु पृथगिति । यदाह—प्रच्छन्नकामेति । आभिमानिकी प्रीतिः कामः स प्रच्छन्नो यस्याः । सा पुरुषरूपिणीत्वात्पुरुषेण सहसा न संप्रयुज्यत इति लब्धुमिच्छन्ती । संवाहकभावमुपजीवेदिति । लोकेऽङ्गमर्दनकर्मणा जीवेदित्यर्थः । एवमपि विश्वासाभावात्कथं रतिरिति विश्वासनार्थमाह—तत्रेति । संवाहने संविष्टस्य नायकस्योरू स्वगात्रैरप्रवृत्तपरिचयत्वादुपगूहमानेव [2]मृद्नीयात् । एवं मृद्नती प्रसृतपरिचया चेदूरुमूलमपि संस्पृशेत् । सजघनमिति । लिङ्गस्थानं त्यक्त्वा सह जघनस्य स्तोकेन भागेनोरुमूलमित्यर्थः । स्थिरलिङ्गतामिति सजघनभागोरुमूलसंस्पर्शात्स्तब्धलिङ्गताम् । पाणिमन्थेनेत्यागोपालादिप्रतीतेन लिङ्गं घट्टयेत् । न यथाकथंचित् । चापलं कुत्सयन्तीवेति । ईदृशस्तु चपलो यदूरुस्पर्शमात्रेण स्तब्धलिङ्गोऽसीति निन्दयन्ती स्वाभिप्रायख्यापनार्थं हसेत् । न तु रुष्यात् । कृतलक्षणेनापीति । स्तब्धलिङ्गत्वं रागस्य लक्षणम् । तत्कृतं यस्य नायकस्य । उपलब्धवैकृतेनेति [3]ज्ञातमुखचापलेन यदि न चोद्यते कुरु मुखचापलमिति तदा तस्मिन्स्वयमेव विना चोदनयोपक्रमेत् । पुरुषेण तूपलब्धवैकृतेनानुपलब्धवैकृतेन वा चोद्यमाना नाहमेवंविधं कर्मेति [4]सहसाङ्गीकारप्रतिषेधार्थं विवदेत् । तदेव स्फुटयति—कृच्छ्रेण चेति । स्त्रीरूपिणी तु प्रकटकामत्वादचोदिताप्यादित एवोपक्रमेत् ।

[5]तस्य क्रियाभेदाद्भेदमाह—

**तत्र कर्माष्टविधं समुच्चयप्रयोज्यम् । निमितं पार्श्वतो दष्टं बहिःसंदंशोऽन्तःसंदंशश्चुम्बितकं परिमृष्टकमाम्रचूषितकं संगर इति ॥**

तत्रेत्यौपरिष्टके । समुच्चयप्रयोज्यमिति । क्रमेण सर्वं समुच्चयेन योज्यमित्यर्थः ।

---

१. 'पुरुषेण तु', 'पुरुषेणात्तु'. २. 'गृह्णीयात्'. ३. 'अज्ञात–'. ४. 'हसन्ती करणप्रतिषेधार्थम्'. ५. 'तस्या.'.

तत्रापि नात्माभिप्रायेणेत्याह—

तेष्वेकैकमभ्युपगम्य विरामाभीप्सां दर्शयेत् ॥

तेष्विति निमितादिषु एकैकं प्रथमात्मभृत्युपगम्य कृत्वा परित्यागेच्छां दर्शयेत् ।

कौतुकजननार्थमभ्यर्थनयापरं प्रयोक्ष्यामीति नायकोऽप्येकस्मिन्नभ्युपगते किं प्रतिपद्यत इत्याह—

इतरश्च पूर्वस्मिन्नभ्युपगते तदुत्तरमेवापरं निर्दिशेत् । तस्मिन्नपि सिद्धे तदुत्तरमिति ॥

इतरश्चेति नायकः । पूर्वस्मिन्निति निमिते । तदुत्तरमिति तस्मान्निमितादनन्तरं पार्श्वतो दष्टम् । निर्दिशेदिदं च कुर्विति । तस्मिन्नपि पार्श्वतो दष्टे क्रियया सिद्धे तदुत्तरं बहिःसंदंशमिति । अनेन क्रमेण सर्वं समुच्चयेन निर्दिशेत् । स्वरागपरिसमाप्त्यर्थं तस्माच्चाभिमानिकसुखजननार्थं नायिकापि तथैव प्रयुञ्जीतेत्ययं चोदनायां विधिः । स्वयमुपक्रमे च स्वाभिप्रायेणैव समुच्चये प्रयोज्यम् ।

तत्कर्म द्विविधम्—बाह्यम्, आभ्यन्तरं च । तत्र बाह्यमाह—

करावलम्बितमोष्ठयोरुपरि विन्यस्तमपविध्य मुखं विधुनुयात् । तन्निमितम् ॥

करावलम्बितमिति अवनमनवारणार्थं करेण गृहीतमोष्ठयोरुपरि विन्यस्तमग्रभागेनापविध्येत्योष्ठेन वर्तुलीकृतेनावष्टभ्य मुखं स्वं विधुनुयात्कम्पयेत् । ओष्ठयोरुपरि विन्यस्तत्वान्निमितम् ।

हस्तेनाग्रमवच्छाद्य पार्श्वतो निर्दशनमोष्ठाभ्यामवपीड्य भवत्वेतावदिति सान्त्वयेत् । तत्पार्श्वतो दष्टम् ॥

हस्तेनावच्छाद्य मुष्टिग्रहणेन ततः पार्श्वतो लिङ्गमोष्ठाभ्यामवपीड्य । निर्दशनमिति क्रियाविशेषणम् । दन्तवर्जमित्यर्थः । दन्तैस्तु ग्रहणमस्ति ।

---

१. 'प्रतिपाद्यते'; 'प्रतिपाद्यं ते'. २. 'तु'. ३. 'तदनन्तरम्'. ४. 'तस्मिन्'. ५. 'क्रियासिद्धे'. ६. 'समुच्चयप्रयोज्यम्'. ७. 'करालम्बितमोष्ठोपरि'. ८. 'अवस्थाप्य'. ९. 'दशनवर्जम्'.

यदाह—भवत्वेतावदिति । एतावदेवास्तु । तद्ग्रहणेन परं खण्डनमिति सान्त्वयेत् ।

**भूयश्चोदिता संमीलितौष्ठी तस्याग्रं निष्पीड्य कर्षयन्तीव चुम्बेत् । इति बहिःसंदंशः ॥**

भूयश्चोदितेति । पार्श्वतो दष्टे संचोदिता पुनरन्यत्र चोदिता । स्वयमुपक्रमे त्वचोदितैव संमीलितौष्ठी लिङ्गस्याग्रमन्तः प्रवेश्य मीलितावोष्ठौ यया सा । ताभ्यामेव निष्पीड्य कर्षयन्तीव चुम्बेदिति । ओष्ठाभ्यामेवास्य कर्षणं कुर्वाणेव त्यजेदित्यर्थः । बहिःसंदंशश्चर्मणो बहिःसंदंशनात् ।

आभ्यन्तरमाह—

**तस्मिन्नेवाभ्यर्थनया किंचिदधिकं प्रवेशयेत् । सापि चाग्रमोष्ठाभ्यां निष्पीड्य निष्ठीवेत् । इत्यन्तःसंदंशः ॥**

तस्मिन्निति बहिःसंदंशे क्रियमाणे । अभ्यर्थनया याचनया । किंचिदधिकमिति निष्कास्य ग्रन्थिं यावन्नायकः प्रवेशयेदित्ययं चोदनापक्षः । स्वयमुपक्रमे तु किंचिदधिकं प्रवेश्याग्रं मणिबन्धमोष्ठाभ्यां निष्पीड्य निष्ठीवेन्निरस्येत् । अन्त.संदंशो निष्कोशितस्य संदंशनात् ।

**करावलम्बितस्यौष्ठवद्ग्रहणं चुम्बितकम् ॥**

ओष्ठवदिति यथाधरौष्ठस्यौष्ठाभ्यां ग्रहणं तथा निष्कोशितस्येति चुम्बितकं समग्रहणाख्यम् ।

**तत्कृत्वा जिह्वाग्रेण सर्वतो घट्टनमग्रे च व्यधनमिति परिमृष्टकम् ॥**

तदिति चुम्बितकं कृत्वा । अन्यथा ह्ययोगात् । जिह्वाग्रेणान्तः परिभ्रमता सर्वतो घट्टयेत्स्पृशेत् । अग्रे च व्यधनं स्रोतःस्थाने ताडनं जिह्वाग्रेणैव । परिमृष्टकं समन्तात् [परिमर्षणात्] ।

**तथाभूतमेव रागवशादर्धप्रविष्टं निर्दयमवपीड्यावपीड्य मुञ्चेत् । इत्याम्रचूषितकम् ॥**

---

१. 'कर्षयन्ती विमुञ्चेत्'. २. 'याच्नया'. ३. 'निष्कामस्य'. ४. 'निष्कासितस्य'. ५. 'अग्रेण च तद्व्यधनम्'. ६. 'परिभ्रमिता'.

तथाभूतमेवेति निष्कोशितमेव । रागवशादिति । नायकस्य रागाधिक्यात् । तदर्धप्रविष्टकं निर्दयमत्यन्तम् । अवपीड्यावपीड्येति जिह्वौष्ठपुटेन द्विस्त्रिरवपीड्यावपीड्य मुञ्चेदभ्यन्तर एव । तदाम्रस्येव चूषितकम् ।

**पुरुषाभिप्रायादेवं गिरेत्पीडयेच्चापरिसमाप्तेः । इति संगरः ॥**

पुरुषाभिप्रायादेवेति पुरुषाभिप्रायमेव बुद्ध्वा प्रत्यासन्नास्य रतिरिति गिरेत् । पीडयेच्चेति । जिह्वाव्यापारेण पीडयित्वा गिरेत् । ओष्ठव्यापारेण पीडयेत् । आ समाप्तेरिति शुक्रविसृष्टिं यावत् । संगरः समन्ताद्गिरणात् ।

**यथार्थं चात्र स्तननप्रहणनयोः प्रयोगः । इत्यौपरिष्टकम् ॥**

यथार्थमिति । यथा रागो निमितादिषु मृदुमध्याधिमात्रेण स्थितस्तथा स्तननप्रहणनयोः प्रयोगः । आलिङ्गनादीनामत्रासंभवात् । इत्यौपरिष्टकमिति । एवं विषयस्वरूपफलप्रवृत्तिप्रकारैरौपरिष्टकमुक्तम् ।

देशसात्म्यवशादविषयेऽप्यस्य वृत्तिरिति दर्शयन्नाह—

**कुलटाः स्वैरिण्यः परिचारिकाः संवाहिकाश्चाप्येतत्प्रयोजयन्ति॥**

कुलटा इति । याः स्वं कुलमन्यद्वा सदृशमटन्त्यो भ्रष्टशीलास्ताः कुलटाः । याः सदृशमसदृशं वा कुलमविचार्य स्वच्छन्दचारिण्यस्ताः स्वैरिण्यः । या अन्यपूर्वा वा मुक्तप्रग्रहा नायकमुपचरन्ति ताः परिचारिकाः । याः संवाहनकर्मणा जीवन्ति ताः संवाहिकाः । एतत्प्रयोजयन्तीति । औपरिष्टकं कारयन्ति । न केवलं तृतीया प्रकृतिरित्यपिशब्दार्थः ।

**तदेतत्तु न कार्यम् । समयविरोधादसभ्यत्वाच्च । पुनरपि ह्यासां वदनसंसर्गे स्वयमेवार्तिं प्रपद्येत । इत्याचार्याः ॥**

तदेतत्तु न कार्यमिति प्रयोज्यमानमपि समयविरोधादिति । धर्मशास्त्रे प्रतिषिद्धमेतत् । 'न मुखे मेहेत' इति । असभ्यत्वाच्चेति । सद्भिर्गर्हितत्वादसभ्यम् । तस्मादसभ्यत्वात् । प्रयोक्तुरप्यसभ्यत्वं दृष्ट एव दोषः । अयं चापर इत्याह—पुनरपि हीति । यदि हि कुलटादीनां मुखे जघन-

---

१. 'अवगिरेत्'. २. 'पिण्डवत्'. ३. 'स्तनप्रहणनयोगा'; 'प्रयोगाः'. ४. 'रागार्थो'. ५. 'प्रयोगाः'. ६. 'अनन्यपूर्वा'. ७. 'समवायविरोधात्'.

कर्म कुर्यात्तदा पुनरपि जघनकर्मकाले रागवशाद्वदनस्य संसर्गे संस्पर्शे सति अर्तिं प्रतिपद्येत दुःखमधिगच्छेत्। विटालितोऽसीति स्वयमेवेति। न तत्र नायिकापि।

**वेश्याकामिनोऽयमदोषः। अन्यतोऽपि परिहार्यः स्यात्। इति वात्स्यायनः॥**

वेश्याकामिन इति। कुलटादयो वेश्याविशेषाः। तत्कामिनो नायकस्यादोषोऽयमिति। समयविरोधादित्ययं दोषो न भवतीत्यर्थः। पैत्न्याश्चौपरिष्टकादौ दोषः। 'न मुखे मेहेत' इति। यदाह वसिष्ठः—'यस्तु पाणिगृहीतायां मुखे मैथुनमाचरेत्। पितरस्तस्य नाश्नन्ति दशवर्षाणि पञ्च च॥' इति। अन्यतोऽपि परिहार्य इति। असभ्यत्वाद्वदनसंसर्गाच्च। असभ्यत्वमर्तिश्चेत्ययं दोषः परिहार्यः। गुप्त्या वक्रभक्षणाच्च। कस्यचिद्देशप्रैवृत्तेरदोषत्वादपरिहार्य इत्यपिशब्दात्।

उभयमपि देशप्रवृत्त्या दर्शयन्नाह—

**तस्माद्यास्त्वौपरिष्टकमाचरन्ति न ताभिः सह संसृज्यन्ते प्राच्याः॥**

तस्मादिति। यतश्चैवं तस्मान्न संसृज्यन्त इति संबन्धः। यैस्त्विति। या वेश्यास्तु औपरिष्टकमाचरन्ति मुखे जघनकर्म कुर्वन्ति न ताभिः सह संसृज्यन्ते संप्रयुज्यन्ते। मा भूत्तद्वदनसंसर्ग इति। अन्याभिरदृष्टदोषत्वात्संसृज्यन्त एवेत्यर्थोक्तम्। प्राच्या अङ्गात्पूर्वेण।

**वेश्याभिरेव न संसृज्यन्ते आहिच्छत्रिकाः संसृष्टा अपि मुखकर्म तासां परिहरन्ति॥**

आहिच्छत्रिका अहिच्छत्रभवा न संसृज्यन्ते। अदृष्टमश्रुतमप्यौपरिष्टकं तासु संभाव्यत इति। संसृष्टा अपि त एव कथंचिद्रागवशात्। मुखे कर्म चुम्बनम्।

---

१. 'स्यात्' इति पुस्तकान्तरे नास्ति. २. 'पत्न्या त्वौपरिष्टकाशेष'. ३. 'प्रवृत्ति'. ४. 'सप्रयुज्यन्ते'. ५ 'या स्थितिवेश्यास्तु'. ६. 'विषयत्वात्'. ७. 'एवार्थोक्तम्'. ८. 'वेश्याभिर्मुखे न'.

**निरपेक्षाः साकेताः संसृज्यन्ते ॥**

साकेता आयोध्यकाः। ते निरपेक्षाः। वेश्यानां संप्रयोगे मुखकर्मणि च शौचाशौचविकल्पाभावात्।

**न तु स्वयमौपरिष्टकमाचरन्ति नागरकाः ॥**

नागरकाः पाटलिपुत्रकाः संप्रयुज्यन्ते वेश्याभिः न तु स्वयं तासां मुखे जघनकर्म कुर्वन्ति। मा भूद्वदनसंसर्ग इति। प्रयोजितास्त्वाचरन्ति वदनसंसर्गवर्जम्।

**सर्वमविशङ्कया प्रयोजयन्ति सौरसेनाः ॥**

सर्वमिति। संप्रयोगमौपरिष्टकं मुखकर्म च। अविशङ्केति। सर्वं शुचीत्यभिप्रायेणेत्यर्थः। सौरसेनाः कौशाम्ब्या दक्षिणतः कूले ये निवसन्ति।

शङ्कायां हि स्वभार्यास्वप्यनाश्वस्त[ता]मेव दर्शयन्नाह—

**एवं ह्याहुः—को हि योषितां शीलं शौचमाचारं चरित्रं प्रत्ययं वचनं वा श्रद्धातुमर्हति। निसर्गादेव हि मलिनदृष्टयो भवन्त्येता[1] न परित्याज्याः। तस्मादासां स्मृतित एव शौचमन्वेष्टव्यम्। एवं ह्याहुः—**

**'वत्सः प्रस्रवणे मेध्यः श्वा मृगग्रहणे शुचिः।**
**शकुनिः फलपाते[2] तु स्त्रीमुखं रतिसंगमे ॥' इति ॥**

एवं हीति। शीलं स्वभावं शौचमशुचिद्रव्यविश्लेषणं आचारं त्रयीकर्मानुष्ठानं चरितं कुलक्रमागतां स्थितिं प्रत्ययं विश्वासं वचनं[3] वल्गितकं कः श्रद्धातुमर्हति। परमार्थतः प्रत्येतुं[4] नैवेत्यर्थः। कुत इत्याह—निसर्गादेवेति। आत्मलाभादेव नान्यस्मात्। मलिनदृष्टयो मलिनबुद्धयः। यल्लोकशास्त्रविरुद्धमप्याचरन्ति। न च परित्याज्याः। एवंभूता अपि पुरुषार्थहेतुत्वात्। तस्माद्व्रतविधौ[5] स्मृतित एव शौचमन्वेष्टव्यम्। लोके स्मृतेः प्रामाण्यात्। तां स्मृतिमाह—एवं हीति। आह स्मृतिकारः। मुखवर्जं गौः सर्वतो मेध्येत्युक्तम्। प्रस्रवणकाले तु मुखं शुचि। उच्छिष्टं क्षीरम-

१. 'भवन्ति' इति पुस्तकान्तरे नास्ति. २. 'पातेषु'. ३. 'वचनवल्गितं वा'. ४. 'प्रत्येक'. ५. 'तस्या व्रतविधौ'.

पि । श्वपक्ष्युच्छिष्टं त्यजेदित्युक्तम् । मृगग्रहणफलपातकाले तु मुखस्य शुचित्वान्मांसं फलं च शुचि । तथा रतिसंगमे रत्यर्थसंगमे स्त्रीमुखं कृतौपरिष्टकमन्यद्वा मेध्यम् । अन्यदा सर्वाशुचिनिधानत्वादिति । अस्मिन्स्मृत्यर्थे सर्वत्र चुम्बनप्रसङ्ग इति ।

स्वमतं दर्शयन्नाह—

**शिष्टविप्रतिपत्तेः स्मृतिवाक्यस्य च सावकाशत्वाद्देशस्थितेरात्मनश्च वृत्तिप्रत्ययानुरूपं प्रवर्तेत । इति वात्स्यायनः ॥**

शिष्टविप्रतिपत्तेरिति । शिष्टाना प्राच्याहिच्छत्रिकनागरकाणां विप्रतिपत्तिर्दृश्यते । यथोक्तम्—'विरुद्धा च विगीता च दृष्टार्था दृष्टकारणा । स्मृतिर्न श्रुतिमूला स्याद्या चैषा संवनश्रुतिः ॥' इति । अत्रोत्तरमाह—सावकाशत्वादिति । पत्नीमेवाधिकृत्येत्युक्तम्—'स्त्रीमुखं रतिसंगमे' इति । यद्येवं वेश्यासु चुम्बनविकल्पानर्थक्यमित्यत्र पाक्षिकमभ्यनुज्ञानमाह—देशस्थितेरिति । यो यस्मिन्देशे आचारस्तदनुरूपं प्रवर्तेत । देशाचारस्य तत्रत्यानां प्रामाण्यात् । वृत्तिप्रत्ययानुरूपमिति । यथा सौमनस्यं यथा च विश्वासस्तथा प्रवर्तेत । न शास्त्रेणैव केवलेनेति ।

इदं स्त्रीविषयमसाधारणमौपरिष्टकमुक्तम् । स्त्रिया एव कर्तृत्वात् । पुरुषविषयमाह—

**भवन्ति चात्र श्लोकाः—**

**प्रमृष्टकुण्डलाश्चापि युवानः परिचारकाः ।**
**केषांचिदेव कुर्वन्ति नराणामौपरिष्टकम् ॥**

प्रमृष्टकुण्डला इति । उज्ज्वले कुण्डले येषामिति नेपथ्योपलक्षणम् । गृहीतनेपथ्या इत्यर्थः । युवानः प्राप्तरागत्वात्कर्तुं कुशलाश्चेटस्वरूपाः परिचारकाः । नान्ये । दोषात् । यथोक्तम्—'अजातश्मश्रवश्चेटा विश्वास्या मुखकर्मणि । योज्या गृहीतनेपथ्या नेतरे श्मश्रुदोषतः ॥' इति । केषांचिदिति । ये मन्दरागा गतवयसोऽतिव्यायता ये च स्त्रीष्वलब्धवृत्तयः ।

१. 'सौरसेनमत'. २. 'प्रकृतिप्रत्यया–'. ३. 'सुमृष्ट–'. ४. 'केषाचिदवकुर्वन्ति'; 'केषाचिदेतत्कुर्वन्ति'; 'केषाचिदेतत्कुर्वन्ति'. ५. 'यथा चोक्तम्'.

इदमप्यसाधारणम् । एकस्यैव[1] कर्तृत्वात् । द्वयोः कर्तृत्वे[2] साधारणम् । यदाह—

तथा नागरकाः केचिदन्योन्यस्य हितैषिणः ।
कुर्वन्ति रूढविश्वासाः[3] परस्परपरिग्रहम्[4] ॥

तथेति । नागरका ये नागरवृत्तावधिकृताः । केचिदिति योषाप्रायाः । हितैषिणः । विसृष्टिसुखकारित्वात् । रूढविश्वासा मैत्र्या । परस्परपरिग्रहमिति । मम तावत्कुरु पश्चात्तवापि करिष्यामीति । युगपद्वा देहव्यत्यासेन रागात्कालमनपेक्षमाणाविति द्विविधम् । साधारणमित्युपलक्षणम् । स्त्रियोऽपि कुर्वन्ति । यथोक्तम्—'अन्तःपुरगताः काश्चिदप्राप्तभाण्डकाः(?) स्त्रियः । भगे ह्यन्योन्यविश्वासात्कुर्वन्ति मुखचापलम् ॥' इति ।

पुरुषाश्च तथा स्त्रीषु कर्मैतत्किल कुर्वते ।
व्यासस्तस्य च[5] विज्ञेयो मुखचुम्बनवद्विधिः ॥

तथा स्त्रीष्विति । तथा स्त्रियः पुरुषेषु तथा स्त्रीषु पुरुषाः परिचारका नायका वा केचिद्भगे मुखेन कर्म कुर्वन्ति । किलेति संभावनायाम् । तस्य चेति पुरुषकर्तृकस्य । व्यासः प्रकारः । मुखचुम्बनवदिति । कन्याचुम्बने निमितादिना अन्यत्र समादिग्रहणेन यो विधिः सोऽस्यापि यथासंभवं विज्ञेयः ।

तत्र परिचारके कर्तर्यसाधारणं नायकेऽपि तु साधारणमपि संभवति । तच्च युगपत्परिपाट्या वा । तत्र युगपत्कथमित्याह—

परिवर्तितदेहौ तु स्त्रीपुंसौ यत्परस्परम्[6] ।
युगपत्संप्रयुज्येते[7] स कामः काकिलः स्मृतः[8] ॥

परिवर्तितदेहाविति । पार्श्वसंपुटे पुमान्स्त्रियामूर्वोः शिरो निधत्ते स्त्री च पुंस इति युगपत्संप्रयुज्येते । एकस्मिन्काले मुखेन परस्परोपस्थेन्द्रियग्रहणात् । काकिलः स्मृत इति । स्त्री पुमांश्च काक इव काकः । मुखेना-

१. 'एकस्यैक-'. २. 'कर्तृत्वात्'. ३. 'गूढविश्वासाः'. ४. 'प्रायः परपरिग्रहम्'. ५. 'तु'. ६. 'यत्परं रते'. ७. 'संप्रयुञ्जाते'. ८. 'कोकिलः स किलोच्यते'; 'कामः स किल काकिलः'.

मेध्यग्रहणात् । तौ विद्येते यस्मिन्काम इति । पिच्छादिषु द्रष्टव्यम् । ककनं वा काको लौल्यम् । 'कक लौल्ये' इति धातुपाठात् । तद्विद्यते ययोः स्त्रीपुंसयोरितीनिप्रत्ययः । तौ लात्यादत्त इति ।

नरयोषितोश्च परिवर्तितदेहयोर्व्याख्यातः । तत्र साधारणासाधारणयोरसाधारणं श्रेयः । ततोऽपि परिचारकविषयं हि खलसंसर्गादि परिशुद्धमिति दर्शयन्नाह—

तस्माद्गुणवतस्त्यक्त्वा चतुरांस्त्यागिनो नरान् ।
वेश्याः खलेषु रज्यन्ते दासहस्तिपकादिषु ॥

तस्मादिति । गुणवतो नायकगुणयुक्तान् । चतुरान् लोकयात्राकुशलान् । त्यागिनो दानशूरान् । वरानभिजनाद्युपेतान् । खलेषु नीचेषु । तानेव दर्शयति—दासहस्तिपकादिष्विति । रज्यन्त इति स्वभावाख्यानम् । अशिष्टधर्माचरणाद्वा । तेषु च रक्ता अपरचरितमपि प्रकाशयन्ति ।

न त्वेतद्ब्राह्मणो विद्वान्मन्त्री वा राजधूर्धरः ।
गृहीतप्रत्ययो वापि कारयेदौपरिष्टकम् ॥

न त्वेतदिति । नैवं वेश्याभिः कारयेत् । ब्राह्मणो विद्वान् श्रुतिस्मृत्यर्थतत्त्वज्ञः । मन्त्री राजधूर्धरः प्राधान्येन यो राज्यं संवाहयति । समासान्तो 'अ' अत्रानित्यत्वान्न भवति । अन्यो वा कश्चिद्गृहीतप्रत्ययो लोके विश्वास्यः । तासु क्रियमाणं लोके लब्धसमाख्यानं गौरवं व्यावर्तयति । अतो मा भूद्वदनसंस्पर्शदोषः । असभ्यत्वदोषस्तु दुर्निवारो नेतरेषाम् । अविवक्षितत्वात् ।

ननु च व्यासक्तन्मुखचुम्बनवद्विधिरिति शास्त्रेऽभिहितत्वात्साधारणस्यापि प्रयोगप्रसङ्ग इत्याह—

न शास्त्रमस्तीत्येतावत्प्रयोगे कारणं भवेत् ।
शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांस्त्वेकदेशिकान् ॥

न शास्त्रमिति । अभिधायकं शास्त्रमस्तीति नैतावत्प्रयोगे कारणम् । शास्त्रार्थान्व्यापिन इति । आलिङ्गनादेरर्थस्य रत्यौपयिकत्वात् सर्वानेव

कामिनोऽधिकृत्य प्रवृत्तत्वात् । प्रयोगानेकदेशिकान् । कस्यचिदेवार्थस्य शिष्टैः प्रवर्तनात् ।

अयं च न्यायोऽन्यत्रापीत्याह—

रसवीर्यविपाका हि श्वमांसस्यापि वैद्यके ।
कीर्तिता इति तत्किं स्याद्भक्षणीयं विचक्षणैः ॥

रसवीर्यविपाका इति । रसो मधुरादिः । वीर्यं सामर्थ्यम् । विपाक उपयुक्तस्य परिणतौ मधुरादिः । श्वमांसस्यापि कीर्तिता इति व्यापित्वं रसादीनाम् । भक्षणीयं विचक्षणैरित्येकदेशित्वम् ।

यद्येवं शिष्टपरिहृतत्वादिहोपदेशानर्थक्यमित्याह—

सन्त्येव पुरुषाः केचित्सन्ति देशास्तथाविधाः ।
सन्ति कालाश्च येष्वेते योगा न स्युर्निरर्थकाः ॥

तादृशा इति सन्ति ये शुच्यशुचिषु निर्विकल्पाः । देशास्तथाविधा लाटसिन्धुविषयादयः । काला औपरिष्टकसात्म्याः [2]ऽयायत्ता यदाजीवितादयः (?) । योगा[3] इति । मुख[4]चुम्बनवद्विधेयम् ।

तस्माद्देशं च कालं च प्रयोगं शास्त्रमेव च ।
आत्मानं चापि संप्रेक्ष्य योगान्युञ्जीत वा न वा ॥

तस्मादिति । यतश्चैवं तस्मात्साधारणस्यासाधारणस्य वा यथास्वं देशकालौ संवीक्ष्य, प्रयोगमुपायं च प्रयुज्यते नेति, शास्त्रमभिधायकमात्मानं च, कतरन्मे युक्तमिति न वा प्रयुञ्जीतोभयमपि विद्वान् । स्वमात्मानं संवीक्ष्य ।

अथवा नायं पुरुषादिनियम इत्याह—

अर्थस्यास्य रहस्यत्वाच्चलत्वान्मनसस्तथा ।
कः कदा किं कुतः कुर्यादिति को ज्ञातुमर्हति ॥

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरण औपरिष्टकं नवमोऽध्यायः ।
आदितश्चतुर्दशः ।

१. 'उपर्युक्तस्य'. २. 'त्रपायत्ता यदजीवितादयः'. ३. 'प्रयोगा इति'. ४. 'मुखचुम्बन च विधेयम्'.

अर्थस्येति । औपरिष्टकस्य रहसि भवत्वात् चित्तस्यास्थिरत्वात् विशेषतो रागसंयुक्तस्य । कः कुर्यात् विद्वानितरो वेति । कदा किं मत्तावस्थायामितरस्यां वेति । किं कुर्यात् साधारणमसाधारणं लौकिकं वा संप्रयोगमिति । कुतो हेतोः किं रागाद्देशप्रवृत्तेर्वेति को ज्ञातुमर्हति । नैवेत्यर्थः ॥ औपरिष्टकमेकोनविंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्याया सांप्रयोगिके द्वितीयेऽधिकरणे औपरिष्टक नवमोऽध्यायः ।

---

दशमोऽध्यायः ।

एवमौपरिष्टकान्तं रतमुक्तम् । तस्यारम्भेऽवसाने च किं प्रतिपत्तव्यमिति तदुद्भवं रता[रम्भा]वसानिकमुच्यते । यद्यपि प्रीतिविशेषानन्तरं रतारम्भिकं युक्तम् । रतावसानिकं चेहैव । तथाभूतत्वादनुष्ठानक्रमस्येति । तथापि प्रीतिसंबन्धत्वादालिङ्गनादीनां तदभिधानम् । तदनन्तरं च प्रकीर्णकन्यायेन सर्वशेषतया रतारम्भः । तत्प्रतिबद्धत्वाच्चावसानिकम् ।

तत्र पूर्वमधिकृत्याह—

नागरकः सहमित्रजनेन परिचारकैश्च कृतपुष्पोपहारे संचारितसुरभिधूपे रत्यावासे प्रसाधिते वासगृहे कृतस्नानप्रसाधनां युक्त्या पीतां स्त्रियं सान्त्वनैः पुनः पानेन चोपक्रमेत् । दक्षिणतश्चास्या उपवेशनम् । केशहस्ते वस्त्रान्ते नीव्यामित्यवलम्बनम् । रत्यर्थं सव्येन बाहुनानुद्धतः परिष्वङ्गः । पूर्वप्रकरणसंबद्धैः परिहासानुरागैर्वचोभिरनुवृत्तिः । गूढाश्लीलानां च वस्तूनां समस्यया परिभाषणम् । सनृत्तमनृत्तं वा गीतं वादित्रम् । कलासु संकथाः । पुनः पानेनोपच्छन्दनम् । जातानुरागायां कुसुमानुलेपनताम्बूल-

---

१. 'सर्वाशेषया'; 'सर्वाशेषतया'. २. 'रत्याधाने'. ३ 'कृतस्नानप्रसाधनः'. ४. 'पुनः पुनः'. ५ 'दक्षिणतोऽस्या' ६. 'नीव्या वावलम्बनम्'. ७.'च सपरिहासा–' ८.'वादित्रं च'. ९. 'कलावस्तुसंकथा'; 'कालावस्थासु सकथा'. १०. 'पानेन च'. ११.'रागाया च'.

दानेन च शेषजनविसृष्टिः । विजने च यथोक्तैरालिङ्गनादिभिरेनामुद्धर्षयेत् । ततो नीवीविश्लेषणादि यथोक्तमुपक्रमेत । इत्ययं रतारम्भः ॥

नागरक इति नागरकवृत्तावधिकृतो मित्रजनेन पीठमर्दादिना परिचारकैस्ताम्बूलदायकसरककर्मान्तिकादिभिः (?) सहोपक्रमेतेति संबन्धः । पुष्पोपहारः पुष्पप्रकारः । रत्यावास इति रत्यर्थो य आवासो बाह्यं वासगृहं तत्र हि शयनीयं प्रकल्पेतेति । अयं वासगृहसंस्कारः । स्त्रिया द्विविधः—स्नानं नेपथ्यग्रहणं चेति शरीरसंस्कारः । असंस्कृताया दर्शनमपि प्रतिषिद्धम् । युक्त्या पीतामिति मनःसंस्कारः । नातिपीताम् । विभ्रमकरत्वात् । पीतमस्या विद्यत इति । प्रथमं सान्त्वनैः प्रियवाक्यैः कुशलप्रश्नादिभिरुपक्रमेत् । पुनः पानेन सरकः पीयतामिति । तत्र दक्षिणे पार्श्वेऽस्या उपविशेत् । येन दक्षिणहस्तेन चषको वामेन च बाहुना परिष्वङ्गः । तत्र प्रथमं केशहस्तादिष्ववलम्बनं संस्पर्शनम् । ततः सव्येन वामेन परिष्वङ्गः । अनुद्धत इति यथा नोद्विजते । पूर्वप्रकरणसंबद्धैरिति अतिक्रान्तेन प्रस्तावेन युक्तैः 'सरसि सुभगे यदावयोस्तत्र तत्र परिहासोऽनुरागश्चासीत्' इत्येवं वचोभिरनुवर्तनम् । गूढाश्लीलानां चेति । यद्गूढं दुर्बोधमश्लीलं ग्राम्यं लोकप्रतीतं वस्तु गाथास्कन्धकादिषु बद्धं तस्योभयस्यापि जुगुप्सायां समस्यया संक्षेपेण परिभाषणम् । परिकथनमित्यर्थः । सनृत्तमनृत्तं वा गीतमिति । याँ नृत्ताभिज्ञा तत्समक्षं गीतार्थमाङ्गिकाद्यभिनयेन प्रकाशयीत । आसीननृत्तं स्यात् । इतरस्या गीतमेव केवलम् । वादित्रमिति नागदन्तावसक्तां वीणामादाय । तत्रान्यस्यासंभवात् । कलासु संकथा शेषास्वालेख्यादिषु कौशलख्यापनार्थम् । एवमावर्ज्य पुनः पानेनोपच्छन्दनं प्रोत्साहनम् । जातरागायां च यथोक्तानुष्ठानेन ताम्बूलदानसंप्रेषणोपायः । शेषजना मित्रपरिचारकादयः । यथोक्तैरिति रतार्म्भेगुक्तानि यानि । उद्धर्षयेदुत्कृष्टेन हर्षेण योजयेत् । यथा

१. 'विसर्जनेन च'. २. 'यथोक्तालिङ्गना–'. ३. 'प्रकारः'. ४. 'प्रकल्प्य'. ५. 'परिहासानुरागः'; 'परिहासोऽनुरागात्'. ६. 'अनुरञ्जनम्'. ७. 'यानि तत्समक्षं'. ८. 'प्रत्युक्तानि'.

शयनीयं प्रतिपद्यते। तत इति। उत्तरकाले शयनीयगताया नीवीविश्लेषणायोपक्रमेत्। इतः प्रभृति बाह्यं पुरुषोपसृप्तमिति।

रतावसानिकं[1] रागमतिवाह्यासंस्तुतयोरिव सव्रीडयोः परस्परमपश्यतोः पृथक्पृथगाचारभूमिगमनम्[2]। प्रतिनिवृत्त्य चाव्रीडायमानयोरुचितदेशोपविष्टयोस्ताम्बूलग्रहणमच्छीकृतं चन्दनमन्यद्वानुलेपनं तस्या गात्रे स्वयमेव निवेशयेत्[3]। सव्येन बाहुना[4] चैनां परिरभ्य चषकहस्तः सान्त्वयन्पाययेत्। जलानुपानं वा[5] खण्डखाद्यकमन्यद्वा प्रकृतिसात्म्ययुक्तमुभावप्युपयुञ्जीयाताम्। अच्छरसकयूषमम्लयवागूं[6] भृष्टमांसोपदंशानि पानकानि चूतफलानि शुष्कमांसं मातुलुङ्गचुक्रकाणि सशर्कराणि च यथादेशसात्म्यं च। तत्र मधुरमिदं मृदु विशदमिति च विदश्य विदश्य तत्तदुपाहरेत्। हर्म्यतलस्थितयोर्वा चन्द्रिकासेवनार्थमासनम्। तत्रानुकूलाभिः कथाभिरनुवर्तेत[7]। तदङ्कसंलीनायाश्चन्द्रमसं पश्यन्त्या नक्षत्रपङ्क्तिव्यक्तीकरणम्। अरुन्धतीध्रुवसप्तर्षिमालादर्शनं च। इति रतावसानिकम्॥

रतावसानिकमिति। वक्ष्यत इति शेषः। रागमतिवाह्य रतिमनुभूय। असंस्तुतयोरिवेति। अपरिचितयोर्यथा व्रीडा तद्वत्सव्रीडयोः। अविनयाचरणात्। एवं परस्परमपश्यतोः। तदवस्थदर्शनाद्वैराग्यमपि स्यादतः पृथक्पृथगाचारभूमिगमनम्[8]। नैकत्र शौचभूमौ शौचं कार्यमित्यर्थः। प्रतिनिवृत्त्याचारभूमेरव्रीडायमानयोः। एकान्तेनापरित्यक्तलज्जत्वात्। उचितदेशस्तदानीं शयनीयमपास्यान्यदेशः। ताम्बूलस्य ग्रहणं भक्षणम्। तदानी मुखस्याश्रीकृत्वाद्वैरस्याच्च। तत्र क्षीणप्रधानधातुत्वाच्छरीरस्य बृंहणं बाह्यमाभ्यन्तरं च। तत्र बाह्यं ग्रीष्मकाले अच्छीकृतं चन्दनमन्यद्वानुलेपनं कालौपयिकम्। स्वयमित्यनुरागख्यापनार्थम्। निवेशयेत्। पश्चा-

१. 'आवसानिकम्'. २. 'वहिर्भूमिगमनम्'; 'आचमनभूमिगमनम्'. ३. 'निदध्यात्'. ४. 'बाहुना परिष्वज्य'. ५. 'च'. ६. 'अच्छसरकम्'. ७. 'अनुवर्तनम्'. ८. 'आचमनभूमिगमनम्'.

दात्मन इत्यर्थः । आभ्यन्तरं पानादि । तत्रापि परिरभ्यालिङ्ग्य । चषके मद्यभाजने । सान्त्वयन्प्रियाणि ब्रुवन् पाययेत् । जलानुपानं वा खण्डखाद्यकं बृंहणीयत्वात् । अन्यद्वा तिलगर्भोत्करादिप्रकृतिसात्म्ययुक्तमुभावप्युपयुञ्जीयाताम् । अच्छरसकयूषमिति । यूषं द्विविधं मांसनिर्यूहं व्रीहिनिर्यूहं च । बृंहणीयत्वान्मांसनिर्यूहं रसकयूषमच्छमुपयुञ्जीयाताम् । अम्लयवागूं मांससिद्धाम् । बृंहणीयत्वात् । भृष्टं भर्जितं मांसं तदेवोपदंशो येषां पानकानाम् । चूतफलानि पक्कानि । शुष्कमांसं बलबृंहणत्वात् । मातुलुङ्गचुक्रकाणीति बीजपूरमीषदपनीतचुक्रं खण्डशः कृतं शर्करायुक्तम् । हृद्यत्वात् । यथादेशसात्म्यमिति । यस्मिन्देशे येन सात्म्यम् । तत्रेति भक्ष्याद्युपयोगेऽनुरागख्यापनार्थो विधिः । विदश्य विदश्येति । उपलक्षणं चैतत् । इदं वृष्यमिदं वृष्यमित्यास्वाद्यास्वाद्य पानमपि तत्तदुपाहरेत् । हर्म्यतलस्थितयोर्वेति । यदि वासगृहस्थितयोरासने तापश्चन्द्रिका चोदिता तदा तदुपरि सौधस्थितयोरूर्ध्वयोश्चन्द्रिकासेवनार्थमासनम् । तत्सेवनं च तापापनयनार्थम् । यदि च तापेन न तत्र ताम्बूलग्रहणाद्यनुष्ठितं तदानीमिहानुष्ठेयम् । तत्रेति हर्म्यतले । भुक्तविरसत्वात्कामस्य बृंहणानन्तरं कामजननार्थं तदनुकूलाभिः कथाभिरनुवर्तेत । तदङ्कसंलीनायाश्चेति । आसीनस्य नायकस्याङ्के न्यस्तदेहाया नियतं गगनतले दृष्टिः । तत्र चन्द्रमसं नयनानन्दजननम् । यस्याङ्गसङ्गान्नक्षत्रपङ्क्तिव्यक्तीकरणम् । प्रायशः स्त्रीणां नक्षत्रपङ्क्त्यपरिचयात्[1] । इयमरुन्धती भगवती सूक्ष्मा य एनां न पश्यति स षण्मासान्म्रियते । अयं ध्रुवादिविस्तारः यद्दर्शनाद्दिवसगतं पापमपैति । एते च सप्तर्षयः पङ्क्त्या स्थिताः । इति संदर्शयेत् ।

द्वयमप्यधिकृत्याह—

तत्रैतद्भवति—

अवसानेऽपि च प्रीतिरुपचारैरुपस्कृता ।
सविस्रम्भकथायोगै रतिं जनयते पराम् ॥

---

१. 'अपरिक्रमात्'.

परस्परप्रीतिकरैरात्मभावानुवर्तनैः ।
क्षणात्क्रोधपरावृत्तैः क्षणात्प्रीतिविलोकितैः ॥
हल्लीसकक्रीडनकैर्गायनैर्लाट[1]रासकैः ।
रागलोलार्द्रनयनैश्चन्द्रमण्डलवीक्षणैः[2] ॥
आद्ये संदर्शने जाते पूर्वं[3] ये स्युर्मनोरथाः ।
पुनर्वियोगे दुःखं च तस्य[4] सर्वस्य कीर्तनैः ॥
कीर्तना[5]न्ते च रागेण परिष्वङ्गैः सचुम्बनैः ।
तैस्तैश्च[6] भावैः संयुक्तो यूनो[7] रागो विवर्धते ॥

तत्रेत्यारम्भेऽवसाने चोभयत्राप्येतद्वक्ष्यमाणकं भवति । अवसानेऽपीति । अपिशब्दादारम्भेऽपीति । प्रीतिः स्त्रियाः पुंसश्च स्नेहः । उपचारैः स्रग्गन्धादिभिः पानादिभिश्च । उपस्कृतेत्यभिवर्धिता । सविस्रम्भकथायोगैरिति । सविश्वासाभिः कथाभिः सविश्वासैश्च योगैः । रतिं विसृष्टिलक्षणां परामुत्कृष्टां जनयते । कारणस्य तथाविधत्वात् । तत्र विस्रम्भयोगमधिकृत्याह—परस्परप्रीतिकरैरिति । स्त्रीपुंसयोस्तदन्ते सुखकरैः । कैरित्याह—आत्मभावानुवर्तनैरिति । आत्माभिप्रायेण यान्यनुवर्तनान्यालिङ्गनादीनि । अनुवर्त्यन्ते एभिरिति कृत्वा । क्षणक्रोधपरावृत्तैः क्षणप्रीतिविलोकनैरिति । अन्तरा प्रणयकलहात्क्षणक्रोधेन यानि परावर्तनानि पुनः प्रसादात्क्षणं प्रीत्या यानि विलोकनानि तैः । स्नेहो विवर्धत इति प्रतिपदं योज्यम् । हल्लीसकक्रीडनकैरिति । हल्लीसकक्रीडनं येषु गीतेषु । यथोक्तम्—'मण्डलेन च यत्स्त्रीणां नृत्तं हल्लीसकं तु तत् । नेता तत्र भवेदेको गोपस्त्रीणां यथा हरिः ॥' लाटरासकैरन्योन्यदेशीयैः । तेषां श्रव्यत्वाद्गीतविशेषणमेतत् । रागलोलार्द्रनयनैरिति । रागेण चञ्चलानि सबाष्पाणि च नयनानि येषु गीतकेषु । अनेन रक्तकण्ठत्वं दर्शयति । चन्द्रमण्डलवीक्षणैरिति मनोहारिवस्तूपलक्षणम् । एतेऽनुवर्तनादयो विस्रम्भयोगाः । विश्वासेन प्रयुज्यमानत्वात् । विस्रम्भकथामधिकृत्याह—

---

१. 'नाट्यरासकैः'. २. 'वीक्षितैः'. ३. 'ये भावा ये मनोरथाः'. ४ 'तस्य च प्रतिकीर्तनैः'. ५. 'कीर्तितानां च'. ६. 'तैस्तैः स्वभावैः सयुक्तैः'. ७. 'यूनोः'; 'यूनां'.

आद्य इति । प्रथमे मनोरथाः कदानयानेन वा संगमोऽस्त्वित्यादयः । पुनर्वियोगे संतप्तयोर्दुःखमस्वास्थ्यम् । कीर्तनान्ते चेति पुनर्वियोगस्यावर्तनमिति दर्शयति । तैस्तैरिति अन्यैरपि विस्रम्भयोगैर्भावसंयुक्तैः । यून इत्येकशेषनिर्देशात् यूनो युवत्याश्च ॥ रतारम्भावसानिकं विंशतितमं प्रकरणम् ॥

आरम्भावसानयो रतावयवत्वात्तद्ग्रहणे यथा रतं व्यवस्थं तथा स्वाभाविकादिरागभेदादपि विशिष्यत इत्यतो रतविशेषा उच्यन्ते—

**रागवदाहार्यरागं कृत्रिमरागं व्यवहितरागं पोटारतं खलरतमयन्त्रितरतमिति रतविशेषाः ॥**

रागवदित्यादिना स्वाभाविक आहार्यः कृत्रिमो दर्पजो विस्रम्भजश्चेति रागविशेषाः । तद्भेदाद्रागवदादयोऽपि रतविशेषाः ।

एषां लक्षणमुपचारमाह—

**संदर्शनात्प्रभृत्युभयोरपि प्रवृद्धरागयोः प्रयत्नकृते समागमे प्रवासप्रत्यागमने वा कलहवियोगयोगे तद्रागवत् ॥**

संदर्शनादिति । प्रथमदर्शनात्प्रभृति चक्षुःप्रीत्याद्यवस्थावशात्प्रवृद्धरागयोर्दूतसंप्रेषणादिप्रयत्नात्कृते समागमे यद्रतम्, यच्च प्रवासात्प्रत्यागमने विरहिणोरुत्कण्ठितयोः, यच्च प्रणयकलहे प्रशान्ते प्रसन्नयो रतं तद्रागवत् । स्वाभाविकस्य रागस्यातिशयेन योगात् ।

**तत्रात्माभिप्रायाद्यावदर्थं च प्रवृत्तिः ॥**

यावदर्थमिति प्रवृद्धरागत्वान्न किंचित्क्षमते । केवलं स्वाभिप्रायवशात्तयोर्यावद्रति प्रवृत्तिः ।

**मध्यस्थरागयोरारब्धं यदनुरज्यते तदाहार्यरागम् ॥**

मध्यस्थरागयोरिति । इच्छामात्रस्योत्पन्नत्वाच्चक्षुःप्रीतिरेव । न मनःसंप्रयोगादयोऽवस्थाः । इत्यतो मध्यस्थो रागः । तयोर्यदारब्धमारम्भकेण

---

१. 'संगतयोः'. २. 'यूनामिति'. ३. 'अतिप्रवृद्धरागयोः'. 'प्रवृद्धरागयोः' इति पुस्तकान्तरे नास्ति. ४. 'प्रवासप्रत्यागमने कुपितप्रसन्नाश्च'; कलहवियोगयोगे कुपितप्रसन्नायाश्च'. ५. 'तत्राभिप्रायात्'. ६. 'यदनुरते'.

विधिना । अनुरज्यत इति पश्चाद्रागेण संश्लिष्यते । कारणेन कार्योपचारान्मिथुनमेव रतमित्युक्तम् । आहार्यरागम् । तत्र रागस्योत्पाद्यमानत्वात् ।

**तत्र चातुःषष्टिकैर्योगैः सात्म्यानुविद्धैः संधुक्ष्य संधुक्ष्य रागं प्रवर्तेत । तत्कार्यहेतोरन्यत्र सक्तयोर्वा कृत्रिमरागम् ॥**

चातुःषष्टिकैरिति आलिङ्गनादिभिर्योगैः । सात्म्यानुविद्धैर्यस्य यैः सात्म्यं तदुक्तैः । रागमिच्छामात्रमात्मनः स्त्रियाश्च संदीप्य प्रवर्तेत । कार्यहेतोरिति । अर्थादनर्थप्रतीकाराद्वा । न रागात् । अन्यत्र सक्तयोर्वेति । अन्यस्मिन्पुंसि स्त्रीसक्ता पुमानप्यन्यस्यां स्त्रियाम् । तयोर्यदनुरोधाद्रतं कृत्रिमरागम् । उभयत्रापि स्वाभाविकरागस्यानुत्पत्तेः ।

**तत्र समुच्चयेन योगाञ्शास्त्रतः पश्येत् ॥**

समुच्चयेनेति न विकल्पेन । द्वयोर्योगयोरन्यतरयोगे स्वाभाविकरागस्यानुत्पत्तेः । तस्मात्समुच्चयेन सर्वानेवालिङ्गनादिप्रयोगान्प्रयोगकाले पश्येत् । तत्रापि शास्त्रतः । तदुक्तस्थानकालस्वभावानपेक्षयेत्यर्थः ।

अन्यत्र सक्तयोरित्यस्य विशेषमाह—

**पुरुषस्तु हृदयप्रियामन्यां मनसि निधाय व्यवहरेत् । संप्रयोगात्प्रभृति रतिं यावत् । अतस्तद्व्यवहितरागम् ॥**

पुरुष इति । योऽन्यप्रसक्तोऽप्यभावितसंतानस्तस्यापरस्यामपि राग उत्पद्यत एव अस्वाभाविकत्वात्कृत्रिममुच्यते । यस्तु संभावितसंतानः सोऽन्यस्यां न रमते । रागाभावात् । यदा तु तामेव हृदयप्रियामिष्टां मनसाभिध्याय चेतसि रागमुत्पाद्य संप्रयोगात्प्रभृति रतिं यावद्व्यवहरेत्प्रवर्तेत तदा तद्व्यवहितरागमित्युच्यते । हृदयप्रियया रागस्य व्यवहितत्वात् । एवं योषिदपि हृदयप्रियं निधायेति योज्यम् । अत्र समुच्चयेन योगानित्ययमेवोपचारः ।

स्वाभाविकाहार्यकृत्रिमरागभेदास्त्रयो नायका नायिकाश्च । तत्र सदृशसंयोगे त्रीणि शुद्धानि । विपर्यये षट् संकीर्णानि । तत्र संकीर्णानिवो-

---

१. 'कृत्रिमं रागम्'. २. 'विशेषणमाह'. ३. 'यत्र'. ४. 'कृतम्'. ५. 'योगात्'.

पचारान्योजयेत् । एतत्सर्वं समानप्रतिपत्त्योः स्त्रीपुंसयोः । हीनाधिकयोर्दर्पजाद्विशेषमाह—

**न्यूनायां कुम्भदास्यां परिचारिकायां वा यावदर्थं संप्रयोगस्तत्पोटारतम् ॥**

न्यूनायां तु कुम्भदास्यामिति । अधमायां कुम्भदास्यां परिचारिकायां वा न्यूनायां न समायां चन्द्रापीडस्येव पत्रलेखायाम् । यावदर्थं यावद्रति । पोटारतमिति । उभयव्यञ्जना पोटा नपुंसकम् ।

**तत्रोपचारान्नाद्रियेत ॥**

तस्यामुपचारान्नालिङ्गनादीन्नाद्रियेत । अरञ्जनीयत्वात् । केवलं दर्पादुत्पन्नो रागोऽपनेयः ।

**तथा वेश्याया ग्रामीणेन सह यावदर्थं खलरतम् ॥**

तथेति यथा नायकस्यासादृश्यसंप्रयोगः । वेश्याया इति गणिकाया रूपाजीवायाः । न कुम्भदास्याः । अभिप्रेतमलभमानाया दर्पाद्ग्रामीणेन कर्षकादिना संप्रयोगः खलरतम् । खलत्वेन विगोपनकरत्वात् ।

**ग्रामव्रजप्रत्यन्तयोषिद्भिश्च नागरकस्य ॥**

तथा ग्रामादियोषिद्भिर्नागरकस्य पत्तनवासिनो दर्पाद्यावदर्थं संप्रयोगः खलरतम् । न पोटारतम् । विगोपनस्यापि तत्र संभवात् । तत्र ग्रामयोषितः कर्षकादिस्त्रियः । व्रजयोषितो गोप्यः । प्रत्यन्तयोषितः शबर्यादयः ।

विस्रम्भरागाद्विशेषमाह—

**उत्पन्नविस्रम्भयोश्च परस्परानुकूल्यादयन्त्रितरतम् । इति रतानि ॥**

उत्पन्नविस्रम्भयोश्चेति । चिरकालसंप्रयोगाज्जातविश्वासयोः । परस्परानुकूल्यादिति । आनुकूल्येन पुमानारभेत तदानुकूल्येन च स्त्री । अयन्त्रितरतं यन्त्रणाभावात् । तच्च चित्ररतं पुरुषायितादिभेदादनेकविधमिति बहुवचनेन दर्शयति—रतानीति ॥ इति रतविशेषा एकविंशं प्रकरणम् ॥

---

१. 'दर्पजाविशेषमाह'. २. 'तस्यामिवोपचारान्'. ३. 'वेश्या'. ४. 'अपि गोपनकरत्वात्'. ५. 'तु'. ६. 'भजेत्'.

प्रणयकलहं वक्ष्यामः—यथा जातविस्रम्भयोरयन्त्रितरतं तथा प्रणयात्कलहोऽपीति प्रणयकलह उच्यते। तत्र कलहकारणमाह—

**वर्धमानप्रणया तु नायिका सपत्नीनामग्रहणं तदाश्रयमालापं वा गोत्रस्खलितं वा न मर्षयेत्। नायकव्यलीकं च॥**

वर्धमानप्रणया त्विति। यथा यथा विश्वासो वर्धते तथा तथा मृदुमध्याधिमात्रेण न मर्षयेदित्यर्थः। प्रायशश्च नायको विप्रियकारी। तन्मूलश्च कलह इति दर्शयन्नाह—नायिकेति। नायकस्य विप्रियकरणं वाचा क्रियया वा। तत्र वाचा सपत्नीनामग्रहणम्। तदाश्रयमिति। अगृहीत्वैव नाम सपत्नीसंबद्धं गुणसूचकमालापम्। गोत्रस्खलितं तन्नाम्ना नायिकाह्वानम्। नायकव्यलीकमिति। सपत्न्या गृहगमनं ताम्बूलादिप्रेषणं संयोगादिकं नायकस्यापराधं न मर्षयेत्। क्रियया विप्रियकरणमेतत्।

अमर्षेण चानुष्ठानादित्याह—

**तत्र सुभृशः कलहो रुदितमायासः शिरोरुहाणामवक्षोदनं प्रहणनमासनाच्छयनाद्वा मह्यां पतनं माल्यभूषणावमोक्षो भूमौ शय्या च॥**

तत्रेति सपत्नीनामग्रहणादिषु। अनुष्ठानं वाचा क्रियया च। तत्र वाचा कलहः सुभृशोऽतीव महान् पुनर्मैवं कार्षीरिति। क्रियया रुदितादि। आयासः शरीरवेदनाकम्पादिकः। अवक्षोदनं विधूननम्। प्रहणनमात्मनः। अन्ये नायकस्य शिरोरुहावलम्बनं प्रहणनं चेत्याहुः। मह्यामिति। यतः पतिताया न दुःखोत्पत्तिः। माल्यभूषणयोरपिनद्धयोर्मोक्षणं त्यागः। भूमौ शय्या। न तेन सह शयनम्।

स नायकोऽपि सापराधत्वात्किं प्रतिपद्येतेत्याह—

**तत्र युक्तरूपेण साम्ना पादपतनेन वा प्रसन्नमनास्तामनुनयन्नुपक्रम्य शयनमारोहयेत्॥**

तत्रेति तस्मिन्ननुष्ठाने। साम्नेति प्रियवचनेन। तस्य युक्तरूपता अ-

---

१. 'प्रणयकलहं वक्ष्यामः' इति मूलपाठ इव भाति, मूलपुस्तकेषु तु नोपलभ्यते. २. 'कारणम्'. ३. 'च'. ४. 'सुभृशम्' ५ 'प्रपतनम्'. ६. 'तेन तेन'. ७. 'प्रसन्नाया सानुनयमुपक्रम्य'.

पराधविशेषात् । पादपतनं नायकविशेषात् । प्रसन्नमना इति अप्रदर्शितविकारः । मा भूत्क्षते क्षार इति । तामिति भूमौ सुप्ताम् । अनुनयन् प्रसादयन् । उपक्रम्योत्थापयितुम् । शयनमारोहयेत् प्रसीदोत्तिष्ठ शयनमध्यास्यतामिति ।

**तस्य च वचनमुत्तरेण योजयन्ती विवृद्धक्रोधा सकचग्रहमस्यास्यमुन्नमय्य पादेन बाह्यौ[1] शिरसि वक्षसि पृष्ठे वा सकृद्द्विस्त्रिरवहन्यात्[2] । द्वारदेशं गच्छेत् । तत्रोपविश्याश्रुकरणमिति[3] । अतिक्रुद्धापि तु न द्वारदेशाद्भूयो गच्छेत् । दोषवत्त्वात् । इति दत्तकः । तत्र युक्तितोऽनुनीयमाना प्रसादमाकाङ्क्षेत् । प्रसन्नापि तु सकषायैरेव[5] वाक्यैरेनं तुदतीव प्रसन्नरतिकाङ्क्षिणी[4] नायकेन परिरभ्येत ॥**

तस्य चेत्यनुनयतः । वचनमुत्तरेण योजयन्ती तत्कालोचितेन । विवृद्धक्रोधा पुनः पुनरपराधस्मरणात् । सकचग्रहमस्यास्यं मुखमुन्नमय्य । किमुद्धार्यं नेति ज्ञातुं सकृदवहत्य । द्विस्त्रिरिति क्रोधवशात् । तदानीं शिरसि पादताडनमपि न दोषाय । सौभाग्यचिह्नं तदिति नागरकवृद्धाः । तत्र चेति द्वारदेशे । अश्रुकरणमश्रुविमोचनम् । न भूयो न बहिः । दोषवत्त्वाद्भूयोगमनस्य । कोपव्याजेनान्यत्र गमनाशङ्कोत्पत्तेः । दत्तकग्रहणं पूजार्थम् । तन्मतस्याप्रतिषिद्धत्वात् । तत्रेत्यश्रुकरणे । पादताडनं क्रोधस्यावधिरिति मन्यमानो नायकः पुनस्तां युक्त्यानुनयेत् । सा तेन युक्तितोऽनुनीयमाना पादपतनं प्रसादनोपायस्यावधिरिति मन्यमाना प्रसादमाकाङ्क्षेत् । ततः प्रसन्ना नायकेनालिङ्ग्यते । तथापि सकलुषैः सासूयैर्वाक्यैरेनं नायकं तुदती व्यथयन्ती । प्रसन्नरतिकाङ्क्षिणी प्रसन्नाद्रतिमाकाङ्क्षमाणा । अन्यथा न यदि परिरभ्येत तदातिभूमिं गतात्कोपान्नायकोऽप्यप्रसन्न इति । मतोऽयं कुलयुवत्याः पुनर्भुवश्च विधिः ।

वेश्यायाः परपरिगृहीतायाश्च विशेषमाह—

**स्वभवनस्था तु निमित्तात्कलहिता तथाविधचेष्टैव नायकमभिग-**

---

१. 'बाह्वोः'. २. 'अवहत्य'. ३. 'ततोऽत्र चोपविश्य'. ४. 'प्रसन्नां रतिकाङ्क्षिणीं'. ५. 'एव'.

च्छेत् । तत्र पीठमर्दविटविदूषकैर्नायकप्रयुक्तैरुपशमितरोषा तैरेवानुनीता तैः सहैव तद्भवनमधिगच्छेत् । तत्र च वसेत् । इति प्रणयकलहः ॥

स्वभवनस्था त्विति । निमित्तात्पूर्वोक्तात् । कलहितेति कलहः संजातो यस्याः । प्राकृतकलहेत्यर्थः । वाचिकममर्षणमेतत् । कायिकमाह—तथाविधचेष्टैवेति असूयासूचकैर्दुर्निरीक्षणभ्रूभङ्गादिभिः । नायकमभिगच्छेदिति । तस्य समीपे ढौकितेत्यर्थः । तत्र तस्मिन्कोपानुष्ठाने । नायकप्रयुक्तैस्तस्याः प्रत्यानयने । उपशमितरोषा साम्ना तैरेवानुनीता । अपादपतनेन नायकेन । बहिःस्त्रीषु पादपतनस्य प्रतिषिद्धत्वात् । सहैव गच्छेत् स्वगौरवोत्पादनार्थम् । तत्र च वसेत् नायकभवने तां रात्रिं रागसंधुक्षणार्थम् ।

अधिकरणार्थमुपसंहरति—

भवन्ति चात्र श्लोकाः—

एवमेतां चतुःषष्टिं बाभ्रव्येण प्रकीर्तिताम् ।
प्रयुञ्जानो वरस्त्रीषु सिद्धिं गच्छति नायकः ॥

एवमिति । चतुःषष्टिमालिङ्गनादिकाम् । बाभ्रव्येण पाञ्चालेन । वरस्त्रीषु तद्विज्ञासु । सिद्धिं गच्छति सौभाग्यमाप्नोति । तस्माच्चतुःषष्टिरालिङ्गनादीनां ज्ञातव्या । अन्यथा ह्यपरिज्ञाने अन्यशास्त्रपरिज्ञानेऽपि न केवलं सिद्धिं नाधिगच्छति अन्यत्रापि नात्यर्थं पूज्यते ।

अस्यास्तु परिज्ञाने अन्यशास्त्रापरिज्ञानेऽपि केवलं सिद्धः पूज्यश्चाग्रणी स्यादिति दर्शयन्नाह—

ब्रुवन्नप्यन्यशास्त्राणि चतुःषष्टिविवर्जितः ।
विद्वत्संसदि नात्यर्थं कथासु परिपूज्यते ॥

---

१. 'वेन'. २. 'तत्रैव'. ३. 'तथाविधैश्चेष्टितैरेवेति.' ४. 'उपगच्छेत्'. ५. 'अनुपशमितरोषा'. ६. 'एवमित्यधिकरणार्थं'. ७. 'अन्यशास्त्रपरिज्ञाने' इति पुस्तकान्तरे नास्ति. ८. 'चतुःषष्ट्या'.

ब्रुवन्नपीति अर्थतः प्रयोगतश्च कथयन्। विद्वत्संसदीति। त्रिवर्गप्रतिपत्तौ येऽधिकृतास्ते विद्वांसः। तत्सभायाम्। कथासु त्रिवर्गस्य।

वर्जितोऽप्यन्यविज्ञानैरेतया यस्त्वलंकृतः।
स गोष्ठ्यां नरनारीणां कथास्वग्रं विगाहते॥

अन्यविज्ञानैर्व्याकरणादिशास्त्रपरिज्ञानैः। एतयेति चतुःषष्ट्या। अलंकृतः प्रयोगतोऽर्थतश्च ज्ञातत्वात्। गोष्ठ्यामासनबन्धे अन्यशास्त्रं नाधिक्रियते। कथासु कामसूत्रस्य। अग्रं विगाहते अग्रणीर्भवतीत्यर्थः।

ननु चतुःषष्टेरपूज्यत्वात्कथं [तत्] ज्ञाता विद्वत्संसदि पूज्यत इति चेदाह—

विद्वद्भिः पूजितामेनां खलैरपि सुपूजिताम्।
पूजितां गणिकासंघैर्नन्दिनीं को न पूजयेत्॥

विद्वद्भिरिति त्रिवर्गवेदिभिः स्त्रीसंरक्षणोपायत्वात्पूजिताम्। खलैरपि सुपूजिताम्। वस्तुतस्तथाविधत्वात्। पूजितां गणिकासंघैः। जीविकोपायत्वात्। एवं च कृत्वा नन्दिनीत्युच्यत इत्याह—नन्दिनीमिति। नन्दनं नन्दः पूजा। सा विद्यते यस्या इति।

यथेयमनुगतार्थसंज्ञा तथान्यापीत्याह—

नन्दिनी सुभगा सिद्धा सुभगंकरणीति च।
नारीप्रियेति चाचार्यैः शास्त्रेष्वेषा निरुच्यते॥

नन्दिनीति। सुभगा सर्वैर्गृहिभिरनुष्ठीयमानत्वात्। सिद्धा विद्येव वशंकरणी। सुभगंकरणी स्त्रीपुंसयोः सौभाग्यकरणात्। नारीप्रिया विशेषतस्तत्सुखकरणात्। एवमनेकार्थसाधिका। कस्तां न पूजयेत्।

अतो ज्ञातापि तद्योगात्पूज्यः। विशेषतो नायिकानामित्याह—

कन्याभिः परयोषिद्भिर्गणिकाभिश्च भावतः।
वीक्ष्यते बहुमानेन चतुःषष्टिविचक्षणः॥

---

१. 'अर्थशः पृथगेनश्च'. २. 'अनया'. ३. 'तां'. ४. 'शास्त्रेष्वेवमिरुच्यते'. ५. 'तु'. ६. 'चतुःषष्ट्या'.

इति श्रीवात्स्यायनीये कामसूत्रे सांप्रयोगिके द्वितीयेऽधिकरणे रतारम्भावसानिकं रतविशेषाः प्रणयकलहश्च दशमोऽध्यायः ।
आदितः पञ्चदश ।

कन्याभिरिति । पुनर्भूः परयोषित्येवान्तर्भूता । सैव हि विधवा पुनर्भवतीति । वेश्येति वक्तव्ये गणिकाग्रहणं योषिदपि चतुःषष्टिविचक्षणेति दर्शनार्थम् । भावत इति भावेन हेतुना । बहुमानेन गौरवेण । प्रणयकलहो द्वाविंशं प्रकरणम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकाया जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां सांप्रयोगिके द्वितीयेऽधिकरणे रतारम्भावसानिकं रतविशेषाः प्रणयकलहश्च दशमोऽध्यायः ।

समाप्तं चेदं सांप्रयोगिकं द्वितीयमधिकरणम् ।

---

# कन्यासंप्रयुक्तकं नाम तृतीयमधिकरणम् ।

---

## प्रथमोऽध्यायः ।

[1]चतुःषष्टिविचक्षणः कन्याभिर्भावतो वीक्ष्यमाणोऽपि न समागमं विना संप्रयुज्यत इति तत्समागमोपाय आवाप उच्यते । समन्तादावाप्यन्ते स्त्रियोऽनेनेति । तत्र कन्यायाः प्रधानत्वात्कन्यासंप्रयुक्तकमुच्यते । तत्रो-[2]द्वापा अष्टौ विवाहाः—ब्राह्मः प्राजापत्य आर्षो दैवो गान्धर्व आसुरः पैशाचो राक्षस इति । तत्र पूर्वे चत्वारो धर्म्या इति तदर्थं वरणसंविधानं प्रकरणमुच्यते । किमर्थमेवमनुष्ठीयत इति चेदाह—

**सवर्णायामनन्यपूर्वायां शास्त्रतोऽधिगतायां धर्मोऽर्थः[3] पुत्राः संबन्धः पक्षवृद्धिरनुपस्कृता रतिश्च ॥**

सवर्णायामिति ब्राह्मणादीनां यथास्वं सवर्णायाम् । अनन्यपूर्वायामिति मनसा कर्मणा वचसा वान्यस्मै या न दत्ता । तत्र हि यत्प्रथमम-पत्यं तदस्यैवेति स्मृत्यर्थः । शास्त्रत इति । शास्त्रोक्तेन वरणपूर्वेण परि-णयविधिनाधिगतायां स्वीकृतायां सत्यां धर्मः पत्नी[4]प्रयोगाख्यो रत्यादि-प्रवर्तनं च । अर्थो यौतकलाभाद्गार्हस्थ्यानुष्ठानाच्च । पुत्रा दृष्टादृष्टार्थाः । संबन्धः सहैकभोजनादिहेतुः । पक्षवृद्धिरिति स्वपक्षस्य वृद्धिः । पक्षा-न्तरलाभात् । अनुपस्कृता रतिरकृत्रिमा । विश्वासातिशययोगात् ।

यतश्चैवम्—

**तस्मात्कन्यामभिजनोपेतां मातापितृमतीं त्रिवर्षात्प्रभृति [5]न्यून-वयसं श्लाघ्याचारे धनवति [6]पक्षवति कुले संबन्धिप्रिये संबन्धिभि-राकुले प्रसूतां [7]प्रभूतमातृपितृपक्षां रूपशीललक्षणसंपन्ना[8]मन्यूनाधि-**

---

१. चतुःषष्टिस्तन्त्रं तद्विचक्षणः. चतुःषष्टिः सूत्रम्. २. 'तत्रोपायाः'. ३. 'धर्मार्थ-पुत्राः'. ४. 'संयोगाख्या इत्यादि'. ५. 'अन्यूनवयसम्'. ६. 'पक्षवति संबन्धिप्रिये संब-न्धिभिश्चाकुले कुले'. ७. 'प्रभूतपितृपक्षाम्'. ८. 'अन्यूनाधिकाङ्गीम्'.

**कां[1]विनष्टदन्तनखकर्णकेशाक्षिस्तनीमरोगिप्रकृतिशरीरां तथा[2]विध एव श्रुतवाञ्शीलयेत् ॥**

तस्मात्कन्यां शीलयेदिति संबन्धः । अशीलितायां वरणासंभवात्। तत्र शीलमभिजनतः सनाथतो वयसः कुलाचारतोऽनुरागतो रूपतः शीलतो वा लक्षणत आरोग्यतश्चेति यथाक्रममाह—अभिजनं कुलं माता[3]पितृगतम् । त्रिवर्षादिति वर्षत्रयात्प्रभृति न्यूनवयसम्। नैकेन द्वाभ्यां वापि समवयसमधिकवयसं वा। श्लाघ्यः स्पृहणीय आचारो यस्मिन्कुले। धनवति धनधान्याढ्ये। संबन्धिप्रियेऽनुरागिणि। पक्षवति। संबन्धिभिराकुले। प्रभूतमातापितृपक्षामित्यनेनातिसनाथतामिति दर्शयति। रूपं शरीरस्य शोभनो यो वर्णः संस्थानं च। शीलं सुस्वभावता। लक्षणमवैधव्यादिसूचकम्। अन्यूनेति। तत्प्रत्येकं योज्यम्। यथासंभवमन्यूनमनधिकमनष्टं च दन्तादि यस्या । अवयवरूपेणापि युक्तामित्यर्थः । कन्याया दन्तादीनां प्रधानावयवत्वात् । अरोगिप्रकृतिशरीरामिति । स्वभावतो न रोगवच्छरीरं यस्या इत्यर्थः। तथाविध एवेति अभिजनाद्युपेतः। अन्यथा ह्यगम्य एव स्यात् । विशेषमाह—श्रुतवानिति। गृहीतविद्य इत्यर्थः। शीलयेन्मनसि समादध्यात्। 'शील समाधौ' इति धातुपाठात्।

**यां गृहीत्वा कृतिनमात्मानं मन्येत न च समानैर्निन्द्येत तस्यां प्रवृत्तिरिति घोटकमुखः ॥**

गृहीत्वा परिणीय। कृतिनं कृतार्थम्। न च समानैर्निन्द्येत कुत्साजन्यं कृतमनेनेति। प्रवृत्तिर्वरणसंविधानम् । घोटकमुखग्रहणमधिकरणप्रावीण्यख्यापनार्थम्।

वरणं द्विविधम्—पौरुषेण दैवेन च विधिना। तत्र पूर्वमधिकृत्याह—

**तस्या वरणे मातापितरौ संबन्धिनश्च प्रयतेरन् । मित्राणि च गृहीतवाक्यान्युभयसंबद्धानि ॥**

---

१. 'अविनष्टकेशनखदन्तकर्णाक्षिस्तनीम्'. २. 'तथाविधगुण एव'. ३. 'मातृपितृगतम्'.

तस्या इति शीलितायाः। वरणे याचने। मातापितरौ नायकेन मित्रजनमभिधाय प्रेरितौ प्रयतेताम्। वरयितृपुरुषप्रेरणेन संबन्धिनो ये नायककुले संबन्धं कृतवन्तः। मित्राणि च नायकस्य प्रयतेरन्नित्येव। गृहीतवाक्यानि। तद्वचनस्यानतिक्रमणीयत्वात्। उभयसंबद्धानि मातृसंबन्धेन पितृसंबन्धेन च।

**तान्यन्येषां वरयितृणां दोषान्प्रत्यक्षानागमिकांश्च श्रावयेयुः। कौलान्पौरुषेयानभिप्रायसंवर्धकांश्च नायकगुणान्। विशेषतश्च कन्यामातुरनुकूलांस्तदात्वायतियुक्तान्दर्शयेयुः॥**

तानीति मित्राणि। अन्येषामिति नायकादन्ये ये वरयितारः। 'वर ईप्सायाम्' अदन्तश्चौरादिकः। प्रत्यक्षान्दोषान्विरूपकान्वकुब्जादीन्। आगमिकान्सामुद्रोक्तान्। 'आगामिकान्' इति पाठान्तरम्। भाविन इत्यर्थः। श्रावयेयुः। तस्याः पितरावित्यर्थात्। कौलान्कुले भवान् शीलशौण्डीर्यादीन् नायकगुणान्। पौरुषेयान्पुरुषकारनिष्पन्नान् शास्त्रकलाग्रहणादीन्। अभिप्रायसंवर्धकांश्चेति पित्रोः कन्यादानाभिप्रायं संवर्धयन्ति ये। विशेषतः कन्यामातुर्येऽनुकूला भवन्ति ते बाल्यवयस्त्वादयः। तदात्वायतियुक्तानिति वर्तमानेन अनागतेन च कालेन फलदानात्संयुतान्। 'तत्कालस्तु तदात्वं स्यादायतिः काल उत्तरः' इत्यमरः। दर्शयेयुः। मित्राणीत्येव।

दैवमधिकृत्याह—

**दैवचिन्तकरूपश्च शकुननिमित्तग्रहलग्नबललक्षणदर्शनेन नायकस्य भविष्यन्तमर्थसंयोगं कल्याणमनुवर्णयेत्॥**

दैवचिन्तकरूपश्चेति सांवत्सरव्यञ्जनो नायकप्रहितः। शान्तायां दिशि रटतः काकादेः शकुनस्य। निमित्तस्य तज्जातादेः। शुभग्रहाणां

---

१. 'वरयितुं'. २. 'प्रत्यक्षा नागरिकाः सुखं श्रावयेयु.'. ३. 'पौरुपानभिप्रायसंवर्धनानन्यांश्च'. ४. 'गुणांश्च'. ५. 'विरूपकान्कुण्ठादीन्'. ६. 'फलदत्वात्'. ७. 'तत्कालस्तु—' इत्यादि पुस्तकान्तरे नास्ति. ८. 'उपश्रुतिशकुन—'. ९. 'ग्रहबललग्न—'. १०. 'नक्षत्रदर्शनं.'. ११. 'अनुवर्तयेत्'.

लग्नादुपचयस्थानेषु स्थितानां यद्बलं दिक्कालस्थानस्वभावैस्तस्य दर्शनेन लक्षणस्य शङ्खचक्रादेर्दर्शनेन भविष्यन्तमनागतमर्थसंयोगं सेनापत्याध्यक्षपत्तनादिलाभम् । कल्याणमिति कल्याणहेतुत्वात् । अर्थानुबन्धमित्यर्थः ।

**अपरे पुनरस्यान्यतो विशिष्टेन कन्यालाभेन कन्यामातरमुन्मादयेयुः ॥**

अपर इति दैवचिन्तकल्पाः । अस्य नायकस्य । अन्यत इति यतो व्रियते कन्या ततोऽन्यस्मात् । विशिष्टेनेति अमुष्य सेनापतेरतेरर्थरूपवती सुमहिमा अस्मै कर्तुमिष्यते । येन वयं श्वस्तने नक्षत्रसंयोगं पृष्टा इत्यनेन कन्यामातरमुन्मादयेयुरनुरञ्जयेयुः । येनानुरक्ता दुहितरं दद्यात् ।

**दैवनिमित्तशकुनोपश्रुतीनामानुलोम्येन कन्यां वरयेद्दद्याच्च ॥**

दैवनिमित्तशकुनोपश्रुतीनामिति । पूर्वजन्मकृतं शुभमशुभं वा कर्म दैवम् । तस्याभिव्यञ्जकत्वान्नक्षत्रग्रहा अपि दैवमुच्यते । अस्यानुकूल्येन षट्काष्टकादियोगाभावात् । किमियमूढा कल्याणकरी नेति शास्त्रोक्तं निमित्तं शकुनपृच्छा च कार्या । निशीथे चोपश्रुतिर्ग्राह्या । तेषामानुकूल्येन वराय दीयमानामीप्सेत, दद्याच्च कन्यापक्षः ।

**न यदृच्छया केवलमानुषायेति घोटकमुखः ॥**

केवलमानुषायेति । केवलं मानुषं कर्म यस्याम् । यदृच्छायामभिजनसानाथ्यादिकमस्तीति । नैवान्येच्छया वरयेद्दद्याच्चेत्यर्थः । घोटकमुख इति परमतमभिमतम् । अप्रतिषिद्धत्वात् ।

वरणकाले कन्यां दृष्ट्वा निमित्तं पश्येदिति दर्शयन्नाह—

**सुप्तां रुदतीं निष्क्रान्तां वरणे परिवर्जयेत् । अप्रशस्तनामधेयां च गुप्तां दत्तां घोनां पृषतामृषभां विनतां विकटां विमुण्डां शुचिदूषितां सांकरिकीं राकां फलिनीं मित्रां स्वनुजां वर्षकरीं च वर्जयेत् ॥**

---

१. 'उत्साहयेयुः' २. 'षट्कोष्टकादि'. ३. 'पृच्छाश्च'. ४. 'केवलमात्माशयेनेति ; 'केवलमात्मात्रोपयमेदिति'. ५. 'गुप्ताधिगता'. ६. 'घोणा'; 'घोला'; 'घोतां'. ७ 'मुण्डां'; 'मुरुण्डा'; 'विरुण्डा'. ८. 'सुविदूषिता'; 'विदूषिका'; 'मल्लपिका'. ९ 'स्थावरिकां शाङ्करिका'; 'स्थावरिका शाङ्करिका'. १०. 'फलिनीं पालीं गुल्मिनीं व्यङ्गा मित्रामनुजा वर्षी वर्जयेत्'; 'फणिनीं पालीं गुल्मिनीं जनसमवायेषु व्यङ्गा मित्राममित्रानुजा वर्षां वर्जयेत्'.

नक्षत्राख्यां नदीनाम्नीं वृक्षनाम्नीं च गर्हिताम्।
लकाररेफोपान्तां च वरणे परिवर्जयेत्॥

सुप्तामिति। शयनमल्पायुषं सूचयति। रुदतीं दुःखभागिनीम्। निष्क्रान्तां गृहान्निष्क्रामन्तीम्। गृहत्यागिनीं दृष्ट्वा वरणकाले वरयिता वर्जयेत्। अप्रशस्तनामधेयामिति मल्लिका चित्राटिकेति। गुप्तामप्रदर्शिताम्। आशङ्क्यमानदोषत्वात्[1]। दत्तामित्यनन्यपूर्वामित्यस्य[2], घोनादयश्च लक्षणसंपन्नामित्यस्य प्रपञ्चोऽवश्यत्यागार्थः। तत्र घोनां[3] कपिलां पतिघ्नीम्। पृषतां शुक्लबिन्दुयुतामर्थहानिकरीं पतिघ्नीं च। ऋषभां[4] पुरुषसंस्थानां दुःशीलाम्। विनतां स्कन्धदेशावनतां दुःशीलाम्। विकटामसंहतोरूं दुःखभागिनीम्। विमुण्डां बृहल्ललाटां पतिघ्नीम्। शुचिदूषितां[5] पितुर्मृतस्य दत्तोल्कां क्रियया न प्रशस्ताम्। सांकरिकीं पुरुषदूषिताम्। तस्यां पत्नीयोगो न धर्मः। राकां जातरजसम्। रजसा क्षतयोनित्वात्। फलिनीं मूकां संव्यवहारबाह्याम्[6]। मित्रां मित्रत्वेन गृहीतामगम्याम्। स्वनुजामिति त्रिवर्षात्प्रभृति न्यूनवयसमित्यस्य[7] शेषः। सुष्ठु पश्चाज्जातामित्यर्थः। यथोक्तम्—'चतुर्थादष्टमं यावत्कनिष्ठा वत्सरे वरात्। कन्यां परिणयेच्छस्तां नेतरातिवयाश्च याः॥' वर्षकरी स्विद्यत्करचरणां पतिघ्नीम्। नक्षत्राख्यां श्रवणां विशाखामित्येवमादि[8]। नदीनाम गङ्गायमुनेत्यादि। वृक्षनाम जम्बूः प्रियंगुरित्यादि। लकाररेफोपान्तां चेति। लकाररेफावन्ताक्षरसमीपे नाम्नि यस्याः। कमला विमला चारू तारू चेति।

यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिः। नेतरामाद्रियेत। इत्येके॥

मनश्चक्षुषोर्निबन्धनमिति केषांचिन्मतम्। यस्यामभिजनादिसद्भावेऽपि मनःसङ्गश्चक्षुःप्रीतिश्चोभयमपरमस्ति तस्यां पत्न्यां सत्यां सिद्धिस्त्रिवर्गप्राप्तिरित्ययमुत्तमः पक्षः। नेतरामिति। यस्यां[9] नास्ति न तामाद्रियेतेत्यधमः पक्षः। केवलमभिजनाद्यपेक्षां वरयेत्। पूर्वामादरेणेति विशेषः। दोषेषु

1. 'आशङ्कमानां दोषत्वात्'. २. 'अन्यपूर्वां'. ३. 'घोता'. ४. 'घृषभां'. ५. 'सुविदूषितां'. ६. 'सद्व्यवहार'. ७. 'ऊनवयसं'. ८. 'विशाखाख्या'. ९. 'यस्या नायकस्य'.

तु मनश्चक्षुर्निबन्धनेऽप्युपेक्षाम् । तत्रापि दोषाणां गुरुलाघवं परीक्ष्यमिति।

कन्यापक्षे वरणनिमित्तं संविधानमाह—

**तस्मात्प्रदानसमये कन्यामुदारवेषां स्थापयेयुः । अपराह्णिकं च नित्यं प्रसाधितायाः सखीभिः सह क्रीडा । यज्ञविवाहादिषु जनसंद्रावेषु प्रायत्निकं दर्शनम् । तथोत्सवेषु च । पण्यसधर्मत्वात् ॥**

तस्मादिति । यतः सुसाध्यनिमित्तात्कन्या न व्रियते तस्मात् । प्रदानसमय इति । उपलक्षणार्थत्वाद्वरणकालेऽपि प्रसाधितां स्थापयेयुः कन्यापक्षीयाः । अपराह्णिकमिति प्रदानात्प्रागपराह्णभवं विधिम् । स्थापयेयुरित्येव । तमाह—नित्यमिति । सखीभिः सह क्रीडा रथ्याचत्वरादिषु । यज्ञविवाहादिषु चान्यदीयेषु । जनसंद्रावेष्विति । जनाः संभूय द्रवन्ति येषु । 'समि युद्रुदुवः' इति कर्तरि कारके घञ् । प्रायत्निकमिति प्रयत्नसाध्यम् । परिचाराधिष्ठितत्वात्कौतुकेन लोको यत्नेन पश्यति । तथोत्सवेषु च वसन्तकादिषु जनसंद्रावेषु प्रायत्निकम् । पण्यसधर्मत्वादिति । विक्रेतव्यतुल्यकौतुकेन हि लोको यत्नेन पश्यति । न दृश्यमाना पण्यवद्व्रियेत ।

वरयितॄणां च लक्षणमुपचारं चाह—

**वरणार्थमुपगतांश्च भद्रदर्शनान्प्रदक्षिणवाचश्च तत्संबन्धिसंगतान्पुरुषान्मङ्गलैः प्रतिगृह्णीयुः । कन्यां चैषामलंकृतामन्यापदेशेन दर्शयेयुः । दैवं परीक्षणं चावधिं स्थापयेयुः । आ प्रदाननिश्चयात् ॥**

वरणार्थमिति । अहीनाङ्गत्वान्मङ्गलाचारप्रयुक्तत्वात् । प्रदक्षिणवाच इति अनुकूलवाचः । तत्संबन्धिसंगतानिति यत्प्रागुक्तं मित्राणि संबन्धिनश्चेति तैः सहेत्यर्थः । मङ्गलैर्दध्यक्षतादिभिः प्रतिगृह्णीयात् कन्यापक्षीयः । अन्यापदेशेनेति अन्यकार्यमपदिश्य । न तूपेत्य दर्शयेत् । दानस्यानिश्चितत्वात् । दैवं परीक्षणं चेति । यावत्प्रदानं न निश्चीयते तावद्दैवं प्राजाप-

१. 'निबन्धनेऽप्युपेक्षः'. २. 'प्रदानकाले दर्शनविषये स्थापयेयुः । आपराह्णिकं वा'; 'अपराह्णे च'. ३. 'नित्यप्रसाधितायाः'. ४. 'जनसमुदायेषु'; 'जनसद्भावेषु'. ५. 'पण्यसधर्मत्वात्कन्यानाम्'. ६. 'ततः'. ७. 'सुप्ता यद्यपि कन्या'. ८. 'सद्भावेषु'. ९. 'जनसद्भावेषु'. १०. 'सुहृत्संबन्धि—'. ११. 'दैवपरीक्षणं'. १२. 'निरुपेत्य'. १३. 'देवता'.

त्यधीनमिति। परीक्षणं च मित्रस्वजनैः सह निरूपयाम इत्यवधिं स्थापयेयुः। अन्यस्त्वाह—'गोष्ठसीताह्रदवृक्षश्मशाने रिणदेवतः। चतुष्पथाच्च मृत्पिण्डैः कुर्याद्दैवपरीक्षणम्॥'

**स्नानादिषु नियुज्यमाना वरयितारः सर्वं भविष्यतीत्युक्त्वा न तदहरेवाभ्युपगच्छेयुः॥**

स्नानादिषु नियुज्यमानाः कन्यापक्षीया वरयितार इति वृण्वन्ति ये। सर्वमिति स्नानादिकम्। भविष्यति प्रजापतावनुकूले। तदहरेवेति। तं दिवसं स्नानादिभिर्नाङ्गीकुर्युः।

**देशप्रवृत्तिसात्म्याद्वा ब्राह्मप्राजापत्यार्षदैवानामन्यतमेन विवाहेन शास्त्रतः परिणयेत्। इति वरणविधानम्॥**

देशप्रवृत्तिसात्म्याद्वेति। यस्मिन्देशे या प्रवृत्तिस्तदानुकूल्यादित्यर्थः। ब्राह्मप्राजापत्यार्षदैवतानामिति। एषां धर्म्यत्वादन्यतमेन। तथा चोक्तम्—'सुहृदाहूय कन्यां तु ब्राह्मे दद्यात्स्वलंकृताम्। सह धर्मं चरेत्येवं प्राजापत्योऽभिधीयते॥ वसुगोमिथुनं दत्त्वा विवाहस्त्वार्ष उच्यते। अन्तर्वेद्यां तु दैवः स्यादृत्विजे कर्म कुर्वति॥' शास्त्रत इति गृह्योक्तेन विधिना। वरणसंविधानं त्रयोविंशं प्रकरणम्॥

अभिजनादिभिः शीलितायामप्यनिश्चिते संबन्धे वरणाभावात्संबन्धनिश्चय उच्यते—

**भवन्ति चात्र श्लोकाः—**

**समस्याद्याः सहक्रीडा विवाहाः संगतानि च।**
**समानैरेव कार्याणि नोत्तमैर्नापि वाधमैः॥**

समस्याद्या इति संभूय क्रीडामादिं कृत्वा। संगतानि सख्यानि। तादृशैरिति समानैः। तुल्यजात्यभिजनद्रव्यायतित्वात्।

तेन समानधर्मोत्तमसंबन्धिभेदात्संबन्धस्त्रिविधः। तस्य कार्यद्वारेण लक्षणमाह—

१. 'इति ये त्विति'. २. 'विधीयते'. ३. 'संबन्धि—'. ४. 'समस्याद्या'. ५. 'मङ्गलानि'. ६. 'सदृशैः'. ७. 'च'.

कन्यां गृहीत्वा वर्तेत प्रेष्यवद्यत्र नायकः ।
तं विद्यादुच्चसंवन्धं परित्यक्तं [1]मनस्विभिः ॥

कन्यामिति । गृहीत्वा परिणीय । प्रेष्यवद्भृत्यवत् । द्रव्यायत्यभावात् । उच्चसंवन्धमिति अधिकेन च [2]संवन्धनात् । परित्यक्तं मनस्विभिः । ये तु नैवं ते कुर्वन्त्येव ।

स्वामिवद्विचरेद्यत्र वान्धवैः [3]स्वैः पुरस्कृतः ।
अश्लाघ्यो हीनसंवन्धः सोऽपि सद्भिर्[4]विनिन्द्यते ॥

स्वामिवदिति । कन्या गृहीत्वा प्रभुवद्विचरेत् । द्रव्यायतिमत्त्वात् । वान्धवैः श्वशुरश्यालकादिभिः प्रेष्यभूतैः परिवृतः । अश्लाघ्य इत्यश्लाघनीयः । तदनुरूपलोकाचाराभावात् । सद्भिरिति लोकव्यवहारज्ञैः ।

परस्परसुखास्वादा क्रीडा यत्र प्रयुज्यते ।
विशेषयन्ती [5]चान्योन्यं संवन्धः स [6]विधीयते ॥

परस्परसुखास्वादेति वरपक्षस्य कन्यापक्षस्य च सुखानुभवो यस्यां परस्परप्रयुक्तायां क्रीडायाम् । विशेषयन्ती चान्योन्यं प्रयुज्यते यस्मिन्संवन्धे स संवन्धो विधीयत इति । सद्भिः क्रियत इत्यर्थः । पूर्वौ तु न विधीयेते इत्यर्थोक्तम् ।

तयोरपि कः श्रेयानित्याह—

कृत्वापि चोच्चसंवन्धं पश्चाज्ज्ञा[7]तिषु संनमेत् ।
न त्वेव हीनसंवन्धं कुर्यात्सद्भिर्विनिन्दितम् ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे वरणविधानं संवन्धनिश्चयश्च प्रथमोऽध्यायः ।

कृत्वापीति । ज्ञातिषु संनमेदिति ज्ञातिगृहे स्वयं यायात् । न श्वाशुरगृह इत्यर्थः । न त्वेवेत्येकान्तेनैव प्रतिषेधः । संवन्धनि[8]श्चयश्चतुर्विंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे वरणविधानं संवन्धनिश्चयश्च प्रथमोऽध्यायः ।

---

१. 'मनीषिभिः'. २. 'संवन्धिना'. ३. 'तैः'. ४. 'निगद्यते'. ५. 'वान्योन्यं'. ६. 'अभिधीयते'. ७. 'वन्धुषु'. ८. 'निर्णयः'.

एवमधिगताप्यविश्वासिता न प्रयोगार्हेति कन्याविस्रम्भणमुच्यते । तत्र विवाहानन्तरं मङ्गलाचारमाह—

**संगतयोस्त्रिरात्रमधः शय्या ब्रह्मचर्यं क्षारलवणवर्जमाहारस्तथा सप्ताहं सतूर्यमङ्गलस्नानं प्रसाधनं सहभोजनं च प्रेक्षा संबन्धिनां च पूजनम् । इति सार्ववर्णिकम् ॥**

संगतयोरिति । परिणयात्प्राप्तसमागमयोः । त्रिरात्रमिति । रात्रिग्रहणं रात्रिकर्मप्रदर्शनार्थम् । अधः शय्या भूमौ शयनम् । न खट्वायाम् । ब्रह्मचर्यं यावच्चतुर्थिकाहोमो न क्रियते । दिवामैथुनस्य प्रतिषिद्धत्वात् । क्षारः फाणितगुडादिः । लवणं सैन्धवादि । तद्वर्जं भोजनं मधुक्षीरघृतसंस्कृतप्रायम् । तच्च नक्तं स्यात् । रात्रिकर्मवर्गे पठितत्वात् । तथा सप्ताहमिति । यथा त्र्यहम् । तदूर्ध्वमपराणि सप्तानीत्यर्थः । अहर्ग्रहणं दिनकर्मप्रदर्शनार्थम् । सवाद्यं समङ्गलं सगीतं स्नानं च । प्रसाधनं मण्डनम् । सहभोजनं चेति । एकस्मिन्स्थाने । पूर्वत्रापि सहभोजनं किंतु व्रतस्थत्वात्क्षारलवणवर्जं नक्तं च तदिति । प्रेक्षा संबन्धिनां नटादीनां च दर्शनम् । पूजनं च गन्धमाल्यादिभिः । सार्ववर्णिकमिति चतुर्ष्वपि ब्राह्मणादिवर्णेषु भवम् । अविरुद्धत्वात् । एतच्च लोके दशरात्रिकमित्युच्यते । तथा चोक्तम्—'कन्यावेश्मनि निर्वर्त्य राजवद्दशरात्रिकम् । सभार्यः स्वगृहं यायात्स्थितेर्वा कुलदेशयोः ॥' इति ।

विस्रम्भणोपायमाह—

**तस्मिन्नेतां निशि विजने मृदुभिरुपचारैरुपक्रमेत ॥**

तस्मिन्निति दशरात्रिके । कन्या द्विविधा संसर्गयोग्या इतरा च । पूर्वस्या विस्रम्भणं रतापेक्षया । द्वितीयाया भयलज्जापगमापेक्षया । निशि मन्दसाध्वसत्वात् । विजने कौतुकगृहे । लज्जापगमात् । मृदुभिरुपचारैरिति अनुद्वेगकैरालापस्पर्शनादिभिः ।

---

१. 'संहतयोः'. २. 'शयन'. ३. 'अक्षारालवणमाहारः'. ४. 'रात्रिकर्मवर्गोपन्वितत्वात्'. ५. 'उपायैः'. ६. 'रतापेक्षायाः'. ७. 'अनुद्वेजनकैः'.

किमर्थमुपक्रम्यत इत्याह—

**त्रिरात्रमवचनं हि स्तम्भमिव नायकं पश्यन्ती कन्या निर्विद्येत परिभवेच्च तृतीयामिव प्रकृतिम् । इति बाभ्रवीयाः ॥**

त्रिरात्रमिति । स्तम्भमिव मूकं निश्चेष्टं तत्र निर्वचनं पश्यन्ती निर्विद्येत । मूकेन ग्राम्येण चाहं मूढेति खिद्येत । परिभवेच्चेति निश्चेष्टत्वान्नपुंसकमिति तिरस्कारबुद्धिं तत्र कुर्यात् ।

अस्मिन्पक्षे सर्वस्याविशङ्कया करणे प्राप्ते प्रतिषेधमाह—

**उपक्रमेत विस्रम्भयेच्च, न तु ब्रह्मचर्यमतिवर्तेत । इति वात्स्यायनः ॥**

उपक्रमेत यथा न निर्विद्येत । विस्रम्भयेच्च यथा संप्रयोगेऽनुकूला भवति । न तु ब्रह्मचर्यमतिवर्तेत । अनुकूलायामप्यकाले व्रतखण्डनस्याधर्मत्वात् ।

**उपक्रममाणश्च न प्रसह्य किंचिदाचरेत् ॥**

उपक्रममाणश्चेत्यादिना मृदुभिरुपचारैरित्यस्य प्रपञ्चः । न प्रसह्य किंचिदिति । स्पर्शनमपि नाभिभूय कुर्यादित्यर्थः ।

किमर्थमित्याह—

**कुसुमसधर्माणो हि योषितः सुकुमारोपक्रमाः । तास्त्वनधिगतविश्वासैः प्रसभमुपक्रम्यमाणाः संप्रयोगद्वेषिण्यो भवन्ति । तस्मात्साम्नैवोपचरेत् ॥**

कुसुमसधर्माण इति कुसुमतुल्याः । योषित इति सर्वा एव । विशेषतः कन्याः । सुकुमारोपक्रमा इति मृदुरुपक्रमः स्पर्शनादिलक्षणो यासु । अनधिगतविश्वासैरिति । लब्धविश्वासैस्तु प्रसह्योपक्रमो न दोषाय ।

---

१. 'त्रिरात्रमवचनमित्याचार्याः । त्रिरात्रमवचन हि स्तम्भमिव विमना नायकं पश्यन्ती कन्या निर्विण्णोहूना परिभवेच्च'. २. 'तृतीया प्रकृतिमिव'. ३. 'ब्रह्मवर्चस'. ४. 'मालतीमाधवे सप्तमाङ्कप्रारम्भ एव बुद्धरक्षितावाक्ये समुद्धृतमेतत्सूत्र महाकविश्रीभवभूतिना. ५. 'भवन्ति । पुरुषद्वेषिण्यो वा'. ६. 'उपक्रमेत्'.

संप्रयोगद्वेषिण्यो जातानिच्छकत्वात् । तस्मात्सामेति मृदुना । सर्वोपचाराणामयं प्राथमिको विधिः ।

तत्रालब्धप्रसरस्योपचारयोगासंभावात्तदुपायमाह—

युक्त्यापि तु यतः प्रसरमुपलभेत्तेनैवानु प्रविशेत् ॥

युक्त्येति । कयाचिदर्थयुक्त्या तत्कालभाविन्या । यतः प्रसरमिति तत्सख्या सह संभाषणे क्रीडने वा आत्मनोऽवकाशमुपलभेत्तेनैव संभाषणेन क्रीडनेन वा द्वारेण तामनुप्रविशेत् ।

ततो लब्धप्रसरस्य प्रथममुपगूहनेनोपक्रम इत्याह—

तत्प्रियेणालिङ्गनेनाचरितेन । नातिकालत्वात् ॥

तत्प्रियेणेति । कथं तत्प्रियमित्याह—नातिकालत्वादिति । यद्दत्त्वानन्तरमेवापनीयते तस्यानुद्वेजनकरत्वात् ।

पूर्वकायेण चोपक्रमेत् । विपह्यत्वात् ॥

पूर्वकायेण चेति । तस्या यो नाभेरूर्ध्वभागस्तेन प्रथममुपक्रमेत् । विपह्यत्वादिति । तेनोपक्रमः शक्यते सोढुम् । नाधरकायेन । उद्वेजनकरत्वात् ।

दीपालोके विगाढयौवनायाः पूर्वसंस्तुतायाः । बालाया अपूर्वायाश्चान्धकारे ॥

दीपालोके कौतुकगृहवर्तिनि । विगाढयौवनापूर्वसंस्तुतयोः । भयलज्जाभावात् । बालापूर्वयोरन्धकारे । लज्जाधिक्यात् । विगाढयौवनाप्यन्यशुभलक्षणयोगादूढा । लघुदोषत्वात् ।

अङ्गीकृतपरिष्वङ्गायाश्च वेदनेन ताम्बूलदानम् । तदप्रतिपद्यमानां च सान्त्वनैर्वाक्यैः शपथैः प्रतियाचितैः पादपतनैश्च ग्राहयेत् । व्रीडायुक्तापि योषिदत्यन्तक्रुद्धापि न पादपतनमतिवर्तते इति सार्वत्रिकम् ॥

---

१. 'अनतिकालत्वात्'. २. 'उपनीयते । तस्यानुद्वेगजनकत्वात्'. ३. 'पूर्वकायेन चोपक्रमः'; 'पूर्वकायेनैवोपक्रमेत्'. ४. 'नावरकायेन'. ५. 'विगाढयौवनाया पूर्वसंस्तुताश्च'. ६. 'बालाया अपूर्वायाश्चान्धकारे' इति पुस्तकान्तरे नास्ति. ७. 'विगाढयौवनाकारा'. ८. 'लघुलक्षणत्वात्'. ९. 'वदने' १०. 'सान्त्वनवाक्यैः सशपथैः प्रीतियाचनैः'.

वदनेन ताम्बूलदानमिति स्वेन मुखेन । चुम्बनक्षान्तेरभिप्रेतत्वात् । तदप्रतिपद्यमानामिति ताम्बूलमगृह्णतीम् । सान्त्वनवाक्यैः प्रियाभिधायिभिः । शपथैरिति मच्छरीरेण शपासीति । प्रतियाचितैस्त्वमेतन्मे देहीति । पादपतनेन वा अन्त्यावस्थायां ग्राहयेत् । यतः स्त्रिया व्रीडात्याजने क्रोधापनयने च न पादपतनादूर्ध्वमुपायोऽस्ति । सार्वत्रिकमिति न कन्यायामेव । अन्यस्यामपि ।

तद्दानप्रसङ्गेण मृदु विशदमकाहलमस्याश्चुम्बनम् । तत्र सिद्धामालापयेत् । तच्छ्रवणार्थं यत्किंचिदल्पाक्षराभिधेयमजानन्निव पृच्छेत् । तत्र निष्प्रतिपत्तिमनुद्वेजयन्सान्त्वनायुक्तं बहुश एव पृच्छेत् । तत्राप्यवदन्तीं निर्बध्नीयात् ॥

मृद्विति यत्र ग्रहणं नास्ति । तस्योद्वेजनत्वात् । विशदं स्पर्शकरम् । अकाहलमशब्दम् । सशब्देन लज्जिता स्यात् । तत्र सिद्धां चुम्बनेनानुकूलामालापयेत् यथा ब्रवीति । अत्रोपायमाह—तच्छ्रवणार्थमिति आलापश्रवणार्थम् । यत्किंचिदिति दृष्टं श्रुतं वा तदानीम् । अल्पाक्षराभिधेयं सुकथनीयत्वात् । अजानन्निवेति । अन्यथा विहावयतीति जानीयात् । निष्प्रतिपत्तिं तूष्णीं स्थिताम् । सान्त्वनायुक्तं चाटुयुक्तम् । निर्बध्नीयात् अनेनैव क्रमेण ।

निर्बन्धे विरज्यत इति चेदाह—

सर्वा एव हि कन्याः पुरुषेण प्रयुज्यमानं वचनं विषहन्ते । न तु लघुमिश्रामपि वाचं वदन्ति । इति घोटकमुखः ॥

सर्वा एवेति । प्रयुज्यमानमिति पुनःपुनरुच्यमानं विषहन्ते । आविर्भवन्मन्मथत्वात् । लघुमिश्रामपीति कतिपयाक्षरामन्यार्थश्लिष्टामपि न वदन्ति । लज्जापरतन्त्रत्वात् ।

---

१. 'ख्यातेः'. २. 'साधनवाक्यैः'. ३. 'त्वमेतर्हि मे'. ४. 'ततः'; 'चेतः'; 'न च'. ५. 'तद्दानप्रयोगेण'; 'ताम्बूलदानप्रसङ्गेन'. ६. 'आस्यचुम्बनम्'. ७. 'तदालापश्रवणार्थं'; 'तद्वाक्यश्रवणार्थं'. ८. 'न निर्बध्नीयात्'. ९. 'यत्रग्रहण नास्ति तस्योद्वेजनात्'. १०. 'अपि'. ११. 'लघ्वक्षरमिश्राम्'.

अत्र कन्याया [1]आलापयोजनोपायमाह—

**निर्वध्यमाना तु शिरःकम्पेन [2]प्रतिवचनानि योजयेत् । [3]कलहे तु न शिरः कम्पयेत् ॥**

निर्वध्यमानेति । शिरःकम्पेनेति । किमिदं जानासीति पृष्टा जानामीत्यूर्ध्वाधःशिरश्चालनेन, न जानामीति तिर्यक् शिरश्चालनेन योजयेत् । धाष्टर्यपरिहारार्थम् । कलहे त्विति [4]अस्यामवदन्त्यां यदि कदाचिदर्थयुक्त्या प्रेरणप्रतिप्रेरणादिलक्षणो वाक्कलहो जातस्तस्मिन् किं कुपितासि नेति पृष्टा न शिरः कम्पयेत् । कोपख्यापनार्थम् ।

अकलहे तु स्नेहजिज्ञासायामालापयोजनमाह—

**इच्छसि मां नेच्छसि वा किं तेऽहं रुचितो न रुचितो वेति पृष्टा चिरं स्थित्वा निर्वध्यमाना तदानुकूल्येन शिरः कम्पयेत् । प्रपञ्च्यमाना तु विवदेत् ॥**

इच्छसि मां नेच्छसि वेति वार्तमानिकः प्रश्नः । किं तव रुचितोऽहमरुचितो वेति परिणयात्पूर्वकालिकः प्रश्नः । चिरं स्थित्वेति संकटः प्रश्नः । यदि पूर्वपक्षमाश्रयेयं तदा धाष्टर्यं लाघवं च, इतरं चेत्तदा नैष्ठुर्यमिति निर्वध्यमाना नायकेन संकटप्रश्ने किमनुष्ठास्यतीति । तस्या निर्वध्यमानाया उभयपक्षाश्रयणमेव युक्तमित्याह—तदानुकूल्येनेति । पूर्वपक्षोत्तरपक्षानुकूल्येनोभयथापि शिरः कम्पयेदित्यर्थः । प्रपञ्च्यमाना त्विति अनिश्चितार्थप्रकाशनान्नायकेन प्रतार्यमाणा विवदेत् । कोपख्यापनार्थं विरुद्धं वदेत् न मे रुचितोऽसि नेच्छामि त्वामिति ।

यदि पूर्वपरिचिता तदालापयोजने विधिमाह—

**संस्तुता चेत्सखीमनुकूलामुभयतोऽपि विस्रब्धां तामन्तरा कृत्वा कथां योजयेत् । तस्मिन्नधोमुखी विहसेत् । तां चातिवादिनीमधिक्षिपेद्विवदेच्च । सा तु [6]परिहासार्थमिदमनयोक्तमिति चानुक्त-**

१. 'आलापोपायमाह'. २. 'प्रतिवचनं'. ३. 'कलहेन च'. ४. 'अस्यामवस्थायां' ५. 'अपनुदेत्'. ६. 'परिहासात्सर्वमिदं'.

मपि ब्रूयात् । तत्र तामंपनुद्य प्रतिवचनार्थमभ्यर्थ्यमाना तूष्णीमासीत। निर्वध्यमाना तु नोऽहमेवं ब्रवीमीत्यव्यक्ताक्षरमनवसितार्थं वचनं ब्रूयात्। नायकं च विहसन्ती कदाचित्कटाक्षैः प्रेक्षेत । इत्यालापयोजनम् ॥

संस्तुता चेदिति। सखीमिति सखीनां मध्ये यानुकूला । विस्रब्धोभयत इति द्वयोरपि विस्रब्धा। विदितपूर्ववृत्तान्तत्वात्। तामन्तरा कृत्वा व्यवधाय कथायोजनम्। नायकस्य तु पूर्ववृत्तां कथां योजयेत्। किमहमस्या रुचितो न वेत्यर्थः। तस्मिन्निति। यदैव तस्यां क्रीडायां परिचयोऽभूत्तत एव प्रभृति रुचितोऽसीति सख्या कथने क्रियमाणेऽधोमुखी लज्जया विहसेत्। एवमिति तदितिख्यापनार्थम्। नायिका तां चेति सखीम् । अतिवादिनीमित्यनुरागातिशयं कथयन्तीमधिक्षिपेत् । विवदेच्च तया सह कलहयेत्। सा त्विति सखी। अनुक्तमपि नायिकया ब्रूयात्। अद्यैव यदि पाणिं गृह्णासि साधु भवतीति। तत्रेत्यनुरक्तकथने। अनवसितार्थमक्षराणामस्पष्टत्वाद्ब्रूयात् । मुग्धत्वख्यापनार्थम्। नायकं च विहसन्ती कदाचिदन्तरान्तरा परिचयवशात्कटाक्षेणोन्मुखीव प्रेक्षेत । अनुरागातिशयख्यापनार्थम् ।

एवं जातपरिचया चानिर्वदन्ती तत्समीपे याचितं ताम्बूलं विलेपनं स्रजं निदध्यात्। उत्तरीये वास्य निबध्नीयात्। तथा युक्तामाच्छुरितकेन स्तनमुकुलयोरुपरि स्पृशेत्। वार्यमाणश्च त्वमपि मां परिष्वजस्व ततो नैवमाचरिष्यामीति स्थित्या परिष्वञ्जयेत्। स्वं च हस्तमा नाभिदेशात्प्रसार्य निर्वर्तयेत्। क्रमेण चैनामुत्सङ्गमारोप्याधिकमधिकमुपक्रमेत्। अप्रतिपद्यमानां च भीषयेत् ॥

एवमालिङ्गनताम्बूलचुम्बनालापैर्जातपरिचया। अनिर्वदन्ती गृहाणेति।

---

१. 'अनूद्य'; 'अपरुध्यमाना'. २. 'नैवाहमेवं'. ३. 'पूर्ववृत्तान्त'. ४. 'किमहमरुच्यो रुचितो न वेत्यर्थः'. ५. 'कलहयेद्विवदेच्च'. ६. 'नायिकायाः'. ७. 'सखीयाचितं'. ८. 'तदायुक्ता'. ९. 'स्पर्शयेत्'. १०. 'परिष्वजेत्'. ११. 'परिष्वजमानायाः स्वहस्तं'. १२. 'प्रसार्य प्रसार्य'.

याचितं नायकेन । निदध्यात्स्थापयेत् । तथा युक्तामिति निदधतीमुत्तरीये वा निबध्नतीम् । आच्छुरितेन पूर्वोक्तेन । स्तनमुकुलयोरिति मुकुलग्रहणमतिस्पर्शनिवृत्त्यर्थम् । बालत्वात् । वार्यमाणश्चेति । स्पर्शनस्थित्या व्यवस्थया परिष्वञ्जयेत् । स्थितिमाह—त्वमपीति । आ नाभिप्रदेशादिति नाभिप्रदेशं यावत् । प्रसार्य निवर्तयेदिति वीप्सार्थं क्षान्त्यर्थम् । प्रसार्य प्रसार्येत्यर्थः । क्रमेणेति । न सहसोत्सङ्गमारोपयेत् । अधिकमधिकमिति नखदशनपदैरप्रतिपद्यमानामधिकोपक्रमं भीषयेत् ।

कथमित्याह—

**अहं खलु तव दन्तपदान्यधरे करिष्यामि स्तनपृष्ठे च नखपदम् । आत्मनश्च स्वयं कृत्वा त्वया कृतमिति ते सखीजनस्य पुरतः कथयिष्यामि । सा त्वं किमत्र वक्ष्यसीति बालविभीषिकैर्बालप्रत्यायनैश्च शनैरेनां प्रतारयेत् । द्वितीयस्यां तृतीयस्यां च रात्रौ किंचिदधिकं विस्रम्भितां हस्तेन योजयेत् ॥**

अहमिति । आत्मनश्च स्वयं कृत्वा दन्तपदं नखपदं च । किमसौ प्रतिपत्स्यते सखीजनो नवोढादुश्चेष्टितादन्यत्रेत्येतद्बालभीषितम् । अस्मिन्वचनानुष्ठाने तु नाहमेवं करिष्यामीति बालप्रत्यायनमर्थोक्तम् । शनैरेनां प्रतारयेत् कार्याभिमुखीं कुर्यादिति । एतत्प्रथमायां रात्रौ विस्रम्भणम् । तस्मात्किंचिदधिकं द्वितीयस्यां रात्रौ तृतीयस्यां च । हस्तेन योजयेदिति कक्षोरुजघनेषु हस्तस्पर्शसंबन्धिनीं कुर्यात् ।

हस्तेन योजनोपायमाह—

**सर्वाङ्गिकं चुम्बनमुपक्रमेत ॥**

सर्वाङ्गिकमिति । ललाटनयनादिषु विचुम्ब्यमाना पर्याकुला सर्वमभ्युपगच्छति ।

---

१. 'परिष्वजेत्'. २. 'अहं ते खलु'. ३. 'कृतमिति सखीजनस्य ते वक्ष्यामि'. ४. 'किमत्र प्रतिपत्स्यत इति बालविभीषितैः'. ५. 'प्रसारयेत्'. ६. 'ऊरुजघनेषु'.

हस्तयोजनविधिमाह—

ऊर्वोश्चोपरि विन्यस्तहस्तः संवाहनक्रियायां सिद्धायां क्रमेणोरुमूलमपि संवाहयेत्। निवारिते संवाहने को दोष इत्याकुलयेदेनाम्। तच्च स्थिरीकुर्यात्। तत्र सिद्धाया गुह्यदेशाभिमर्शनं रशनावियोजनं नीवीविस्रंसनं वसनपरिवर्तनमूरुमूलसंवाहनं च। एते चास्यान्यापदेशाः। युक्तयन्त्रां रञ्जयेत्। न त्वकाले व्रतखण्डनम् अनुशिष्याच्च। आत्मानुरागं दर्शयेत्। मनोरथांश्च पूर्वकालिकाननुवर्णयेत्। आयत्यां च तदानुकूल्येन प्रवृत्तिं प्रतिजानीयात्। सपत्नीभ्यश्च साध्वसमवच्छिन्द्यात्। कालेन च क्रमेण विमुक्तकन्याभावामनुद्वेजयन्नुपक्रमेत। इति कन्याविस्रम्भणम्॥

ऊर्वोरिति। तत्रायं क्रमः—प्रथमं पूर्वकायस्य संवाहनक्रिया। तस्यां सिद्धायामूर्वोरुपरि न्यस्तहस्त ऊरू संवाहयेत्। क्रमेणोरुमूलमिति। तत्रेत्यूरुमूले। आकुलयेत् चुम्बनाच्छुरितकैः। तच्चेति। यत्पूर्वाभ्युपगतं संवाहनं तच्च स्थिरीकुर्यात् क्षान्त्यर्थम्। तत्रेत्यूरुमूलसंवाहने सिद्धाया गुह्यदेशाभिमर्शनम्। संवाहनव्यपदेशेन रसनावियोजनाद्यपि कुर्यात्। पुनरूरुमूले संवाहनग्रहणमपरित्यागार्थम्। गुह्यस्पर्शहेतुत्वात्। एत इति गुह्यस्पर्शनादयो व्यापाराः। अस्येति नायकस्य। अन्यापदेशा इति त्रिरात्रादर्वागन्यमपदिश्य कर्तव्याः। न तु व्रतखण्डनमधिकृत्येत्यर्थः। युक्तयन्त्रां च चतुर्थिकाहोमादूर्ध्वं रञ्जयेदिति। रञ्जनमनुद्वेज्य सुखोत्पादनम्। अनुशिष्यात् चातुःषष्टिकान्योगान् शिक्षयेत्। आत्मानुरागं च दर्शयेत् इङ्गिताकाराभ्याम्। मनोरथान् पूर्वकालीनाननुवर्णयेत् ये ये तस्यामधरपानादयश्चिन्तिताः। आयत्यामिति। अनागतकाले तदानुकूल्येन प्रवृत्तिं प्रतिजानीयात् 'यदाह भवती तन्मया विधातव्यम्' इति। सप-

१. 'विन्यस्तपाणिः'. २. 'तत्र'. ३. 'सिद्धायां'. ४. 'विमोचनम्'. ५. 'अन्यापदेशेन'; 'अन्यापदेशात्'. ६. 'न त्वकाले युक्तयन्त्रा रञ्जयेत्.' ७. 'न त्वकाले व्रतखण्डनम्' इति पुस्तकान्तरे नास्ति. ८. 'कालेन च' इति पुस्तकान्तरे नास्ति. ९. 'चुम्बयेच्छुरितकैः'.

नीभ्यः साध्वसमवच्छिन्द्यात् । यद्यधिविन्ना स्यात् । कालेन च गच्छता मुक्तकन्याभावां युवतीमनुद्वेजयन्नुपक्रमेत् । तदाप्ययमेव क्रमः । स स्फुटः कर्तव्यः ।

उक्तमुपसंहरन्नाह—

भवन्ति चात्र श्लोकाः—

एवं चित्तानुगो बालामुपायेन प्रसाधयेत् ।
तथास्य सानुरक्ता च सुविस्रब्धा प्रजायते ॥

एवमिति । चित्तानुग इति चित्ताभिप्रायं बुद्ध्वा । उपायेनेति युक्त्या । प्रसाधयेद्विश्वासयेत् । किमेवं स्यादित्याह—तथेति । सुविस्रब्धा सती अनुरक्ता प्रजायत इति योज्यम् ।

तत्रापि विशेषमाह—

नात्यन्तमानुलोम्येन न चातिप्रातिलोम्यतः ।
सिद्धिं गच्छति कन्यासु तस्मान्मध्येन साधयेत् ॥

नात्यन्तमिति । सिद्धिं सुखम् । तत्र तदानुलोम्येन प्रवृत्तौ स एवोत्तरकालमपि मार्गः स्यात् । ततश्चास्य स्वेच्छौविघातात्तद्विषयासिद्धिः । प्रातिलोम्येनातिप्रवृत्तौ तु तदानीमेव विरक्तत्वात्कथं तद्विषया सिद्धिः । तस्मान्मध्येनोपायेन साधयेत् ।

विस्रम्भणं किंफलमित्याह—

आत्मनः प्रीतिजननं योषितां मानवर्धनम् ।
कन्याविस्रम्भणं वेत्ति यः स तासां प्रियो भवेत् ॥

आत्मन इति । वर्धनमिति । उपचारस्य तथाविधत्वात् । कन्यानामिति वक्तव्ये योषिद्ग्रहणं प्रथमसमागमे सर्वविषयमिदमिति दर्शनार्थम् । तत्परिज्ञानफलमाह—प्रियो भवेदिति ।

अतिलज्जान्वितेत्येयं यस्तु कन्यामुपेक्षते ।
सोऽनभिप्रायवेदीति पशुवत्परिभूयते ॥

१. 'सानुरागा च विस्रब्धा चैव'. २. 'प्रतिलोमतः'. ३. 'स्वेच्छाविधौ तद्विषया'. ४. 'फलमित्याह'.

सहसा वाप्युपक्रान्ता कन्याचित्तमविन्दता ।
भयं वित्रासमुद्वेगं सद्यो द्वेषं च गच्छति ॥
सा प्रीतियोगमप्राप्ता तेनोद्वेगेन दूषिता ।
पुरुषद्वेषिणी वा स्याद्विद्विष्टा वा ततोऽन्यगा ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे कन्याविस्रम्भणं द्वितीयोऽध्यायः ।

अतिलज्जान्वितेति । अस्मात्कारणात्कन्या नोपेक्षणीया । अनेन त्रिरात्रं निर्वचनं पश्यन्ती निर्विद्येत, परिभवेच्चेत्यस्य प्रपञ्चः । उपक्रान्तेत्युपसर्पिता । भयं यतो दर्शनपथेऽपि न तिष्ठति । वित्रासं तत्स्मरणाच्छरीरविधूननम् । उद्वेगं भोजनादिभ्यो व्यावर्तनम् । प्रीतियोगमप्राप्ता । लज्जान्वितेत्युपेक्षितत्वात् । उद्वेगेन दूषिता । सहसोपक्रान्तत्वात् । पुरुषद्वेषिणी सर्वान्पुरुषान्द्वेष्टि । सर्वोऽप्येवंविध इति द्विष्टा । प्रीतियोगमप्राप्तत्वात् । ततश्च तं मुक्त्वान्यं पुरुषं गच्छति । इति कन्याविस्रम्भणं पञ्चविंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे कन्याविस्रम्भणं द्वितीयोऽध्यायः ।

---

तृतीयोऽध्यायः ।

वरणसंविधानपूर्वकमधिगतायां विस्रम्भणमुक्तम् । या तु व्रियमाणा न लभ्यते तत्र गान्धर्वादयश्चत्वारो विवाहाः । तत्रालाभकारणान्येव तावदाह—

धनहीनस्तु गुणयुक्तोऽपि, मध्यस्थगुणो हीनापदेशो वा, सधनो वा प्रातिवेश्यः, मातृपितृभ्रातृषु च परतन्त्रः, बालवृत्तिरुचितप्रवेशो वा कन्यामलभ्यत्वान्न वरयेत् । बाल्यात्प्रभृति चैनां स्वयमेवानुरञ्जयेत् । तथायुक्तश्च मातुलकुलानुवर्ती दक्षिणापथे बाल एव

---

१. 'चिन्तां समुद्वेगं'. २. 'अप्राप्य'. ३. 'ततश्चान्य'. ४. 'उपचितप्रवेशः'. ५. 'मातुलानुवर्ती'.

**मात्रा च पित्रा च वियुक्तः परिभूतकल्पो धनोत्कर्षादलभ्यां मातुलदुहितरमन्यस्मै वा पूर्वदत्तां साधयेत् । अन्यामपि बाह्यां स्पृहयेत् । बालायामेवं सति धर्माधिगमे संवननं श्लाघ्यमिति घोटकमुखः ॥**

धनहीनस्त्वभिजनादिगुणयुक्तोऽपि दरिद्रः कन्यां न लभते । मध्यस्थगुणो हीनापदेशो वेति । मध्यस्था रूपशीलादयो गुणा अभिजनः प्रधानं तदभावाद्धीनव्यपदेशः । सधनो वा प्रातिवेश्य इति स्वगृहसमीपवासी सीमासंवन्धेन कलहादिजनकत्वात् धनगर्वान्न लभते । मातापित्रोर्भ्रातृपु च सत्सु परतन्त्रोऽन्यप्रधानः सधनोऽपि न लभते । बालवृत्तिरुचितप्रवेशो वेति । यो लाडीकवद्दृश्यते सोऽनिषिद्धगृहप्रवेशोऽपि परिभवान्न लभते । यदि न वरयेत्कथमधिगच्छेदित्याह—बाल्यादिति । अनुरञ्जयेत् । अनुरक्ता हि स्वयमेव गान्धर्वेण विवाहेन पाणिं ग्राहयति । यतः 'स्वयं संयोगे गान्धर्वः' इति । तस्मादनुरञ्जनार्थं बालायामुपक्रमादनेकप्रकारा उच्यन्ते । यत्र च देशे प्रायेणैवंविधा वृत्तिस्तामधिकृत्याह—तथायुक्तश्चेति । धनहीनत्वादियुक्तः । दक्षिणापथ इति । तत्र हि मातुलदुहिता परिणीयते । वियुक्तः पित्रोर्मृतत्वात्परिभूतकल्पो मातुलकुलयुक्तः । अन्यस्मै वा पूर्वदत्तामदत्तां वा । अन्यामपि बाह्यामिति । या मातुलदुहिता न भवति पित्रोः संवन्धबाह्या तामपि स्पृहयेत् । तत्र कर्तुः क्रियया आप्तुमिष्टतमत्वेन विवक्षित्वात्कर्मत्वम् । अनेनान्यस्मिन्नपि देशे विधिरयमिति दर्शयति । बाल्यात्प्रभृति सति धर्माधिगमे बालायां धर्मार्थमधिगमे संदर्शनालापलक्षणे सति संवननं वशीकरणमनुरञ्जनलक्षणं श्लाघ्यम् । अन्यथा दर्शनात्कथं संवननं स्यात् । धर्म्याश्च गान्धर्वा विवाहाः । यथोक्तम्—'तत्र पूर्वे धर्म्याश्चत्वारः । पडित्येके' ।

उपक्रमिवत्वाद्द्विविधो बालो युवा च । तत्र पूर्वमधिकृत्यानुरञ्जनमाह—

**तया सह पुष्पावचयं ग्रथनं गृहकं दुहितृकाक्रीडायोजनं भक्त-**

१. 'संचरणं'. २. 'सधर्मोऽपि'. ३. 'विवाहेन' इति पुस्तकान्तरे नास्ति. ४. 'उपक्रमाद्वा'. ५. 'तं'. ६. 'धर्मार्थ'. ७. 'दुहितृकापुत्रिका'; 'गृहदुहितृकक्रीडा'; 'गृहकन्दुकं दुहितृकापट्टिका'; 'गृहकन्दुकपुत्रिका'. ८. 'भक्ष्यपानकरणं'; 'भक्तं वा पाककरणं'.

पानकरणमिति कुर्वीत । परिचयस्य वयसश्चा¹नुरूप्यात् । आकर्षक्रीडा पट्टि²काक्रीडा मुष्टि³द्यूतक्षुल्लकादिद्यूतानि मध्यमाङ्गुलिग्रहणं षट्पाषाणकादीनि च देश्यानि तत्सात्म्यात्तदा⁴सदासचेटिकाभिस्तया च सहानुक्रीडेत । क्ष्वे⁵डितकानि सुनिमीलितकामारब्धिकां लवणवीथिकामनिलताडितकां गो⁶धूमपुञ्जिकामङ्गुलिताडितकां सखीभिरन्यानि च देश्यानि ॥

तयेति बालया । अवचयमुच्चपादपात् । ग्रथनं पुष्पाणाम् । गृहकं काष्ठमयं मृण्मयं वा स्वल्पम् । दुहितृका सूत्रदार्वादिमयी । भक्तपानकरणमिति सद्भक्तं तण्डुलैरितरत्पांसुभिः । परिचयस्य वयसश्चेति । आत्मनः स्वल्पमधिकं वा परिचयम्, बाल्यं तारुण्यं वा वयो बुद्ध्वा तदनुरूपमाचरेत् । नोक्तमित्येव । आकर्षक्रीडा पाशकक्रीडा । पट्टिकाग्रथनम् । मुष्टिद्यूतं प्रसिद्धम् । क्षुल्लकद्यूतं पै⁷ञ्चसमयादि । मध्यमाङ्गुलिग्रहणमिति अङ्गुलिविपर्यासेन गोपितुर्मध्यमाङ्गुलेर्ग्रहणम् । षट्पाषाणकमिति । यत्र स्वल्पानि षट्पाषाणानि हस्तस्य क्रोडेनोत्क्षिप्य पृष्ठेन गृह्यन्ते । आदिशब्दादन्यानि च देश्यानि पञ्चिकाप्रसृतकादीनि । तत्सात्म्यादिति यत्र नायिकाया अभिनिवेशः । तदासदासचेटिकाभिरिति तस्या ये दासाश्चेटिकाश्च ताभिः क्रीडन्तीभिः सहानुक्रीडेत । ततो लब्धप्रसरस्तया च । क्ष्वेडितकानि चेति ये⁸ऽङ्गव्यायामाः । तान्याह—सुनिमीलितकामिति । यत्रैकस्य कश्चिन्नेत्रे निमीलयति शेषाः प्रच्छन्नेष्वात्मानं गोपायित्वा तिष्ठन्ति ततोऽसावुन्मीलितचक्षुर्यद्गृह्णाति तस्य नेत्रनिमीलनमिति । आरब्धिकां कूष्णफलक्रीडाम् । लवणवीथिकां लवणहट इति प्रतीताम् । अनिलताडितकां यत्र पक्षवद्बाहू प्रसार्य चक्रवद्भ्रमणम् । गोधूमपुञ्जिकामिति । गोधूमग्रहणं व्रीह्युपलक्षणम् । यत्र बहूनामेकः प्रत्येकं रूपका-

१. 'अनुकुर्वीत'. २. 'पञ्जिकक्रीडा'. ३. 'मुष्टिकानि'; 'मुष्टिकृतकादिपूतानि'. ४. 'तदा चेटिकाभिः'; 'तदासदासचेटिकाधात्रेयिकाभि.'. ५. 'उदकक्ष्वेडितकानि सुनिमीलितकं मानसिकं'. ६. 'गोधूमपुञ्जिकामनिलताडितका लवणवीथिकाम्'. ७. 'एव समयादि'. ८. 'येऽङ्गव्यायामास्तान्याह'.

नादाय व्रीहिषु क्षिप्त्वा संमिश्र्य च तावतो भागान्करोति । अतस्ते य-थेच्छमेकैकं भागमादाय रूपकमन्विष्यन्ते । तत्र यो न लभते सोऽन्य-द्ददाति । अङ्गुलिताडितकामिति । यत्रैकं निमीलितनेत्रमन्यैर्ललाटे आ-हत्य केनाभिहतोऽसीति प्रश्नः । अन्यानि च देश्यानि मण्डूकिकैक-पादिकादीनि । एते प्रायशो बालस्योपक्रमाः ।

यूनस्तु ये प्रायशस्तानाह—

**यां च विश्वास्यामस्यां मन्येत तया सह निरन्तरां प्रीतिं कुर्यात्। परिचयांश्च बुध्येत। धात्रेयिकां चास्याः प्रियहिताभ्यामधिकमु-पगृह्णीयात्। सा हि प्रीयमाणा विदिताकाराप्यप्रत्यादिशन्ती तं तां च योजयितुं शक्नुयात्। अनभिहितापि प्रत्याचार्यकम्। अविदि-ताकारापि हि गुणानेवानुरागात्प्रकाशयेत्। यथा प्रयोज्यानुर-ज्येत। यत्र यत्र च कौतुकं प्रयोज्यायास्तदनु प्रविश्य साधयेत्। क्रीडनकद्रव्याणि यान्यपूर्वाणि यान्यन्यासां विरलशो विद्येरं-स्तान्यस्या अयत्नेन संपादयेत्। तत्र कन्दुकमनेकभक्तिचित्रमल्प-कालान्तरितमन्यदन्यच्च संदर्शयेत्। तथा सूत्रदारुगवलगजदन्त-मयीर्दुहितृका मधूच्छिष्टपिष्टमृण्मयीश्च। भक्तपाकार्थमस्या महान-सिकस्य च दर्शनम्। काष्ठमेढूकयोश्च संयुक्तयोश्च स्त्रीपुंसयोरजैड-कानां देवकुलगृहकाणां मृद्विदलकाष्ठविनिर्मितानां शुकपरभृतमदन-सारिकालावककुक्कुटतित्तिरिपञ्जरकाणां च विचित्राकृतिसंयुक्ता-नां जलभाजनानां च यन्त्रिकाणां वीणिकानां पटोलिकानाम-**

---

१. 'पादिकादीनि क्ष्वेडिकादीनि'. २. 'अस्यां' इति पुस्तकान्तरे नास्ति. ३. 'वा प्रत्याचार्यकं नायकस्य'; 'प्रत्याचार्यकं प्रतिनायकेन'; 'वा प्रीत्या नायकस्य'. ४. 'विदिता-कारापि'. ५. 'वापूर्वाणि'. ६. 'कचिद्विरलशः'. ७. 'प्रयत्नेन'. ८. 'मर्यो दुहि-तृकां'. ९. 'मृण्मयीश्च देयादिति'. १०. 'भक्तपाकार्थस्य महानसस्य प्रदर्शनम्'; 'भक्त-पाकार्थसाधनमस्या महानसस्य प्रदर्शनम्'; 'भक्तिपाकार्थमस्या महानसस्य च दर्शनम्'. ११. 'काष्ठमेण्ढकयोश्च'; 'काष्ठसंप्रयुक्तयोर्मेषयोस्तथैवाजैडकाना'; 'काष्ठसंप्रयुक्तकयो-र्मेषयोश्च तथैवाजैडकगजानां'. १२. 'यन्त्रकाणां'; 'विविधाना यन्त्राणां'. १३. 'पि-ण्डोलिकाना कण्डोलिकानां पेटलिकानां'; 'पिण्डोलिकानां पटतिकानां'.

लक्तकमनःशिलाहरितालहिङ्गुलकश्यामवर्णकादीनां तथा चन्दनकुङ्कुमयोः पूगफलानां पत्राणां कालयुक्तानां च शक्तिविषये प्रच्छन्नं दानं प्रकाशद्रव्याणां च प्रकाशम् । यथा च सर्वाभिप्रायसंवर्धकमेनं मन्येत तथा प्रयतितव्यम् । वीक्षणे च प्रच्छन्नमर्थयेत् । तथा कथायोजनम् । प्रच्छन्नदानस्य तु कारणमात्मनो गुरुजनाद्भयं ख्यापयेत् । देयस्य चान्येन स्पृहणीयत्वमिति । वर्धमानानुरागं चाख्यानके मनः कुर्वतीमन्वर्थाभिः कथाभिश्चित्तहारिणीभिश्च रञ्जयेत् । विस्मयेषु प्रसक्तमानामिन्द्रजालैः प्रयोगैर्विस्मापयेत् । कलासु कौतुकिनीं तत्कौशलेन गीतप्रियां श्रुतिहरैर्गीतैः । आश्वयुज्यामष्टमीचन्द्रके कौमुद्यामुत्सवेषु यात्रायां ग्रहणे गृहाचारे वा विचित्रैरापीडैः कर्णपत्रभङ्गैः सिक्थकप्रधानैर्वस्त्राङ्गुलीयकभूषणदानैश्च । नो चेद्दोषकराणि मन्येत । अन्यपुरुषविशेषाभिज्ञतया धात्रेयिकास्याः पुरुषप्रवृत्तौ चातुःषष्टिकान्योगान्ग्राहयेत् । तद्ग्रहणोपदेशेन च प्रयोज्यायां रतिकौशलमात्मनः प्रकाशयेत् । उदारवेषश्च स्वयमनुपहतदर्शनश्च स्यात् । भावं च कुर्वतीमिङ्गिताकारैः सूचयेत् । युवतयो हि संसृष्टमभीक्ष्णदर्शनं च पुरुषं प्रथमं कामयन्ते । कामयमाना अपि तु नाभियुञ्जत इति प्रायोवादः । इति बालायामुपक्रमाः ॥

अस्यामिति नायिकायां विश्वास्याम् । निरन्तरामनवच्छिन्नां प्रीतिं कुर्यात् । सापि हि धात्रेयिका मत्कार्यं करिष्यतीति परिचयाश्चावबुध्येत । प्रीतिं किमप्यस्यामपि करोतीति । धात्रेयिकां धात्र्या दुहितरम् । प्रियं तदात्वे सुखकरम् । हितमायत्याम् । अधिकोपग्रहे फलमाह—सा हीति ।

१. 'ताम्बूलपत्राणां'. २. 'प्रकाशः'. ३. 'वीक्षणेन च प्रच्छन्नमर्पयेत्'. ४. 'वर्धमानानुरागा'; 'वर्धमानानुरागक'. ५. 'प्रयुज्यमानामैन्द्रजालैर्योगैः'; 'प्रयुज्यमान ऐन्द्रजालैः'. ६. 'वस्त्र' इति पुस्तकान्तरे नास्ति. ७. 'विशेषाभिज्ञां धात्रेयिकां चास्याः पुरुषप्रवृत्तान्'. ८. 'तद्ग्रहणापदेशेन च प्रयोज्यायाः'. ९. 'अपहत–'. १०. 'वियात्'. ११. 'इति' इति पुस्तकान्तरे नास्ति. १२. 'अस्यामिति यां नायिका विश्वास्यां मन्येत तया सह.'

प्रीयमाणा स्निह्यमाना। विदिताकारापीति। नायको नायिकामिच्छतीति ज्ञाताभिप्रायापि। अप्रत्यादिशन्ती तमिति नायकमप्रत्याचक्षाणा। तां चेति नायिकां भयलज्जाव्यपनयनेन प्रतार्य योजयितुं शक्नुयात्। अनभिहिता प्रत्याचार्यकमिति। संयोजने त्वमाचार्यो भवेत्येतत्प्रति नायकेनानुक्तापि सती योजयितुं शक्नुयादिति योज्यम्। अविदिताकारापीति। यद्यपि[1] नायक एनामिच्छतीति न ज्ञातवती तथापि गुणानेव प्रकाशयेत्। अनुरागादिति नायकविषये धात्रेयिकानुरागात्। यत्र यत्र चेति। प्रतारणप्रकारे। तत्तदनुप्रविश्येति विज्ञाय। साधयेदिति संपादयेत्। क्रीडनद्रव्याणि वक्ष्यति। अन्यासामिति कन्यानाम्। विरलशः, न बाहुल्येन। अयत्नेनेति संपादनसामर्थ्यं दर्शयति। क्रीडनकद्रव्याण्याह—कन्दुकमिति। अल्पकालान्तरितमिति कौतुकप्रबन्धाभ्युपगमार्थम्[2]। अन्यदन्यत् भक्तीनां वैसादृश्यात्। दारु काष्ठम्। गवलं शृङ्गम्। दुहितृकाः पुत्रिकाः। संदर्शयेदित्येव। मधूच्छिष्टं सिक्थकम्। महानसिकस्येति। महानसविषयं कर्म महानसिकमित्युक्तम्। भक्तग्रहणमुपलक्षणार्थम्। भक्तादिपाकार्थस्य कर्मणस्तत्तच्छास्त्रोक्तेन विधिना दर्शनम्। स्त्रीणां प्रधानविद्यात्वात्। संयुक्तयोरिति एककाष्ठघटितयोः स्त्रीपुंसयोर्मेढ्कयोरविप्रयोगार्थं दर्शनम्। अजैडकानां काष्ठमयानाम्। उपलक्षणार्थत्वाद्गवाश्वादीनां च। मृदा वंशविदलैः काष्ठैर्वा विनिर्मितानां देवकुलानां देवगृहाणां च। शुकादिपञ्जराणां मृदादिनिर्मितानाम्। तत्र मदनसारिका पठति। जलभाजनानां शङ्खशुक्तिखण्डानां मृत्काष्ठशिलानिर्मितानाम्। विचित्राणां वर्णिकया आकृतियुक्तानां संस्थानवताम्। यन्त्रिकाणामिति यन्त्रमातृकोक्तानाम्। वीणिका स्वल्पवीणा पिण्डोलिका यत्र दुहितृकाः स्थाप्यन्ते। पटोलिका यत्र प्रसाधनं विधीयते। श्यामवर्णकं[3] राजावर्तचूर्णं चित्रकर्मोपयोगि। पत्राणि ताम्बूलस्य। कालयुक्तानामिति। यस्मिन्काले येनार्थिनी तत्र तस्य दर्शनमित्यर्थः। शक्तिविषय इति यस्मिन्प्र-

---

१. 'यदापि'. २. 'उपरमार्थम्'. ३. 'श्यामवर्णिकं.'

च्छन्ने स्वयं प्रवेष्टुं सामर्थ्ये तत्र दानम् । कुङ्कुमादीनामप्रकाश्यत्वात् । प्रकाशद्रव्याणा कन्दुकादीनां प्रकाशदानम् । तैरेव कल्पनीयत्वात् । सर्वाभिप्रायसंवर्धकमिति सर्वाभिलाषपूर्वकं यज्जन्मन ईप्सितं तत्तत्संपादयतीति । दीयमानं च यथा प्रच्छन्नमर्थयेत् । किं निमित्तमित्याह—वीक्षणे चेति । दर्शननिमित्तम् । प्रच्छन्ने दृश्यमाना निशङ्कमुपचर्यते । तथा कथायोजनमिति । अन्यमुखेन संवर्धनार्थं च कथा योजयेत् । प्रच्छन्नस्य तु कारणमुभयम् । तत्रात्मनो गुरुजनाद्भयं ख्यापयेत् तव पितरौ रुष्यत इति । अन्येन स्पृहणीयत्वमिति । अन्योऽप्येतद्दृष्ट्वा स्पृहयति । ततश्च गृह्णीयादिति । अन्वर्थाभिः स्वयं प्रयुक्ताभिः शकुन्तलाराजदारिकाकथाभिः । चित्तहारिणीभिरन्याभिरनुरागयुक्ताभिः । विस्मयेषु प्रसज्यमानामिति आश्चर्येषु प्रसक्तिं यान्तीम् । कलासु पत्रच्छेद्यादिषु । गीतप्रियामिति । कलान्तर्गतमपि पुनर्गीतग्रहणं प्राधान्यार्थम् । प्रायेण हि गीतप्रियो लोकः । आश्वयुज्यां कोजागरे । अष्टमीचन्द्रके मार्गशीर्षबहुलाष्टम्याम् । तत्र हि दिनमुपोष्योद्गते चन्द्रमसि भुज्यते । कौमुद्यामिति सामान्योपादानेऽपि यत्र कन्याभिर्ज्योत्स्नामण्डलकपूजा [क्रियते] सात्र द्रष्टव्या । सा कार्तिक्या भवति । उत्सवेषु इन्द्रमहादिषु । यात्राया देवतायाः । ग्रहणे सूर्याचन्द्रमसोः । गृहाचारे गृहमागतायाम्[1] । आपीडादिभिर्विस्मापयेदिति संबन्धः । नो चेद्दोषकराणीति तद्दाने यद्यात्मनोऽपायं न पश्येत । अन्यपुरुषविशेषाभिज्ञतयेति अन्येभ्यः पुरुषेभ्यो मम विशेषं धात्रेयिका जानात्विति । पुरुषप्रवृत्ताविति[3] जातसंप्रयोगाम् । अन्यथा कथं विशेषमेवेति । तद्ग्रहणोपदेशेनेति धात्रेयिकोपदेशद्वारेण । रतिकौशलमिति तज्ज्ञताम् । अनुपहतदर्शन इति । अस्योपाय उदारवेषत्वम् । तथाभूतं तं च दृष्ट्वा भावं कुर्वतीमनुरागं चेतसि जनयन्तीमिङ्गिताकारैर्लिङ्गैर्विद्यात् । किमित्यनुपहतदर्शनः स्यादित्याह—युवतय इति जातयौवनाः । संसृष्टं जातपरिचयम् । अभीक्ष्णदर्शनं सदा दृश्यमानम् ।

---

१. 'न'. २. 'आगतायाः'. ३. 'पुरुषप्रवृत्ताभिजातसंप्रयोगाम्'.

कामयन्त इच्छन्ति । नाभियुञ्जते कयाचिल्लज्जाद्यर्थयुक्त्या ॥ बालयामुपक्रमाः षड्विंशं प्रकरणम् ॥

भावं च कुर्वतीमिङ्गिताकारैः [1]सूचयेदित्युक्तं तेषां सूचनं प्रकाशनमुच्यते । यदाह—

तानिङ्गिताकारान्वक्ष्यामः ॥

तानीति तत्रेङ्गितमन्यथा वृत्तिः । आकारो [2]मुखनयनरागः । तदुभयमुत्तरत्र यथायोगं योज्यम् ।

संमुखं [3]तं तु न वीक्षते । वीक्षिता व्रीडां दर्शयति । [4]रुच्यमात्मनोऽङ्गमपदेशेन प्रकाशयति । [5]प्रमत्तं प्रच्छन्नं नायकमतिक्रान्तं च वीक्षते । पृष्टा [6]च किंचित्सस्मितमव्यक्ताक्षरमनवसितार्थं च मन्दंमन्दम[7]धोमुखी कथयति । तत्समीपे चिरं स्थानमभिनन्दति । दूरे [8]स्थिता पश्यतु मामिति मन्यमाना परिजनं [9]संवदनविकारमाभाषते । तं देशं न मुञ्चति । यत्किंचिद्दृष्ट्वा विहसितं करोति । तत्र कथामवस्थानार्थ[10]मनुबध्नाति । बाल[11]स्याङ्कगतस्यालिङ्गनं चुम्बनं च करोति । परिचारिकायास्तिलकं च रचयति । [12]परिजनानवष्टभ्य तास्ताश्च लीला दर्शयति । [13]तन्मित्रेषु विश्वसिति । वचनं चैषां बहुमन्यते करोति च । तत्परिचारकैः सह प्रीतिं संकथां द्यूतमिति च करोति । स्वकर्मसु [14]च प्रभविष्णुरिवैतान्नियुङ्क्ते । तेषु च [15]नायकसंकथामन्यस्य कथयत्स्ववहिता तां शृणोति । [16]धात्रेयिकया चोदिता नायकस्योदवसितं प्रविशति । [17]तामन्तरा कृत्वा तेन सह द्यूतं क्रीडामालापं [18]चायोजयितुमिच्छति । अनलंकृता दर्शनपथं

१. 'सूचयेदिङ्गिताकारैर्विद्यादित्युक्तम्'. २. 'अनुनयनरागाः'. ३. 'तं तु' इति पुस्तकान्तरे नास्ति. ४. 'तत्तदात्मनोऽङ्गमन्यापदेशेन'. ५. 'प्रयान्तं प्रच्छन्नं वा नायकमतिक्रान्तमपीक्षते'. ६. 'अपि'. ७. 'अन्यतोमुखी'. ८. 'स्थित्वा'. ९. 'सवचन–'. १०. 'मन्दमनुबध्नाति'. ११. 'अङ्कगतस्य' इति पुस्तकान्तरे नास्ति. १२. 'परिजने सावष्टम्भा तां ता लीलां'. १३. 'तस्मिन्मित्रेषु'. १४. 'चैतान्प्रभविष्णुरिव नियुङ्क्ते'. १५. 'नायककथा'. १६. 'धात्रेयिकानोदिता'. १७. 'अन्तरा च'. १८. 'च'.

परिहरति। कर्णपत्रमङ्गुलीयकं स्रजं वा तेन याचिता सधीरमेव गात्राद्वतार्य सख्या हस्ते ददाति। तेन च दत्तं नित्यं धारयति। अन्यवरसंकथासु विषण्णा भवति। तत्पक्षकैश्च सह न संसृज्यत इति॥

संमुखं न वीक्षत इति लज्जया। पराङ्मुखी तं तु नायकम्। वीक्षितेति नायकेन तु व्रीडां दर्शयति अधोमुखी भूत्वा। रुच्यमतिमनोहरम्। आत्मनोऽङ्गं स्तनबाहुमूलादि। अपदेशेनेति प्रावरणव्याजेन। प्रमत्तमनवहितम्। प्रच्छन्नमेकाकिनम्। अतिक्रान्तं दूरगतम्। पृष्टा यत्किंचिदिति नायकेन। सस्मितमित्यादिनानुरागोन्मुखता व्रीडा चाख्यायते। तत्समीप इति नायकसमीपे। परिजनमित्यात्मीयम्। सवदनविकारमिति सभ्रूभङ्गकटाक्षम्। तं देशमिति यत्र स्थिता तं पश्यति। तत्रैव यत्किंचिद्दृष्ट्वा विहसितं करोति। तिर्यक्पश्यन्ती। तत्र कथामनुबध्नाति सखीं प्रोत्साह्य। बालस्येति लाडीकस्य स्वाङ्कमारोपितस्य। चुम्बनावगूहनं च संक्रान्तकम्। परिचारिकायाः स्वस्यास्तिलकं रचयति नायकं पश्यन्ती। परिजनानवष्टभ्येति परिजनक्रोडापाश्रया। तास्ताश्चेति केशविरचनाङ्गवलनविजृम्भिकादिकाः। तन्मित्रेषु नायकमित्रेषु। विश्वसिति स्वभावं प्रकटयति। वचने चैषां बहुमानं कुरुते। तदनुरूपानुष्ठानात्। तत्परिचारकैरिति नायकपरिचारकैः। एतानिति नायकपरिचारकान्। तेष्विति परिचारकेषु कस्यचिदन्यस्य कथयत्सु। तां संकथाम्। धात्रेयिकया चोदिता प्रविशाव इति। उदवसितं गृहम्। तामन्तरा कृत्वेति धात्रेयिकां व्यवधानीकृत्य। नायकेन सह द्यूतादि नियोजयितुमिच्छति। दर्शनपथमिति नायकस्य। सधीरमवतार्य किं ग्रहीष्यतीति। सख्या हस्त इति लज्जया न तद्धस्ते ददाति। नित्यं धारयति श्लाघ्यमाना। तत्पक्षैरिति अन्यवरपक्षैः।

प्रकरणद्वयमुपसंहरन्नाह—

भवतश्चात्र श्लोकौ—

दृष्ट्वैतान्भावसंयुक्तानाकारानिङ्गितानि च।<br>
कन्यायाः संप्रयोगार्थं तांस्तान्योगान्विचिन्तयेत्॥

१. 'नायकेन'. २. 'अवमुच्य'. ३. 'तत्पक्षैश्च न'. ४. 'वचने चैषां बहुमान्यं करोति'.

दृष्ट्वेति। एतानिति आकारान् इङ्गितानि चेति लिङ्गविपरिणामेन योज्यम्। भावसंयुक्तानिति अनुरागसंगतान्। संप्रयोगार्थमिति। संप्रयोगोऽत्र समागमलक्षणो गान्धर्वो ज्ञेयः। योगानिति अभियोगान्।

त्रिविधा कन्या—बाला तरुणी प्रौढा चेति। यथाक्रममुपक्रममाह—

वालक्रीडनकैर्बाला[1] कलाभिर्यौवने स्थिता[2]।
वत्सला[3] चापि संग्राह्या विश्वास्यजनसंग्रहात्[4]॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे बालोपक्रमा इङ्गिताकारसूचनं च तृतीयोऽध्यायः।

वालक्रीडनकैरिति। कलाभिरनुरागिणी। वत्सला प्रौढा। यस्तस्या विश्वास्यस्तदुपग्रहात्स्वीकर्तव्या॥ इङ्गिताकारसूचनं सप्तविंशं प्रकरणम्॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे बालोपक्रमा इङ्गिताकारसूचनं च तृतीयोऽध्यायः।

---

चतुर्थोऽध्यायः।

शास्त्रकार एव प्रकरणसंबन्धमाह—

दर्शितेङ्गिताकारां कन्यामुपायतो[5]ऽभियुञ्जीत॥

दर्शितेङ्गिताकारामिति। उपायत इति उपाया एवाभियोगाः। अभियुज्यते तैरिति। ते चासहायस्येत्येकपुरुषाभियोगा उच्यन्ते। ससहायस्यापि केचित्संभवन्ति। ते द्विविधाः—बाह्या आभ्यन्तराश्चेति।

तत्र पूर्वानधिकृत्याह—

द्यूते क्रीडनकेषु च विवदमानः[6] साकारमस्याः पाणिमवलम्बेत॥

द्यूत इति। विवदमानो वाक्कलहं कुर्वन्। साकारं पाणिमवलम्बेत यथावगच्छेत् 'अहमनेनोढा' इति।

यथोक्तं[7] च स्पृष्टकादिकमालिङ्गनविधिं विदध्यात्॥

---

१. 'बालम्'. २. 'स्थिताम्'. ३. 'वत्सला चापि गृह्णीयात्'. ४. 'संश्रयात्'. ५. 'उपयातः'. ६. 'विवदमानायाः'. ७. 'यथोक्तं स्पृष्टकादिम्'.

स्पृष्टकादिकमिति स्पृष्टकं विद्धकमुद्धृष्टकं पीडितकमिति चतुष्टयमवसरप्राप्तत्वाद्यथायोग्यं विदध्यात् ।

**पत्रच्छेद्यक्रियायां च स्वाभिप्रायसूचकं मिथुनमस्या दर्शयेत्[1] ॥**

पत्रेति । स्वाभिप्रायसूचकं संप्रयोगसूचकं हंसादिमिथुनम् ।

**एवमन्यद्विरलशो दर्शयेत् ॥**

एवमिति । अन्यदपि[2] यन्मिथुनं भवति तिलकादिकं साकारम् । विरलश इति । सततदर्शने हि ग्राम्यता संभाव्यते[3] कौतुकं चापैति ।

**जलक्रीडायां तद्दूरतो[4]ऽप्सु निमग्नः समीपमस्या गत्वा स्पृष्ट्वा चैनां तत्रैवोन्मज्जेत् ॥**

जलेति । स्पृष्ट्वा चैनामिति निमग्न एव । तत्रैवोन्मज्जेत् नायिकासमीपे ।

**नवपत्रिकादिषु च सविशेषभावनिवेदनम् ॥**

नवपत्रिकादिषु चेति देश्यक्रीडासु । सविशेषभावनिवेदनमिति पूर्वोक्तेनैव स्वाभिप्रायसूचकेन पत्रच्छेद्यादिना ।

**आत्मदुःखस्यानिर्वेदेन कथनम् ॥**

आत्मदुःखस्य च कथनम् 'न जाने किं कृता मम चेतसि पीडा' इति । तत्राप्यनिर्वेदेन भूयो भूयः प्रधानकार्यत्वात्कथनम् ।

**स्वप्नस्य च भावयुक्तस्यान्यापदेशेन ॥**

अन्यापदेशेनेति । त्वत्तुल्यरूपया[5] सहोपगमः स्वप्ने ममाभूदिति कथनम् ।

**प्रेक्षणके स्वजनसमाजे[6] वा समीपोपवेशनम् । तत्रान्यापदिष्टं स्पर्शनम् ॥**

स्वजनसमाजः स्वजनगोष्ठी । समीपोपवेशनमिति नायिकायाः । तत्रेति समीपे प्रेक्षणकादिषु अन्यापदिष्टमन्यदपदिश्य[7] स्पर्शनम् ।

**अपाश्रयार्थं[8] च चरणेन चरणस्य पीडनम् ॥**

---

१. 'प्रदर्शयेत्'. २. 'अन्यदन्यत्'. ३. 'संभवात्कौतुकाभावाच्च'. ४. 'च दूरत.'; 'दूरतः'. ५. 'तत्तुल्य'. ६. 'स्वजनसमवाये', 'स्वजनसंबाधे'. ७. 'उद्दिश्य'. ८. 'अपाश्रयणार्थम्'.

अपाश्रयार्थमिति । अपाश्रयस्तदङ्गे स्वाङ्गस्थापनम् । चरणस्य पीडनं स्वचरणेन ।

ततः शनकैरेकैकामङ्गुलिमभिस्पृशेत् ॥

तत इति । तस्मात्सिद्धादुत्तरकाले । शनकैरिति कियतीं कालकलामतिक्रम्य तस्या अङ्गुलिमभिस्पृशेत् ।

पादाङ्गुष्ठेन च नखाग्राणि घट्टयेत् ॥

पादाङ्गुष्ठेनेति । नखाग्राणि घट्टयेच्चालयेत् ।

तत्र सिद्धः पदात्पदमधिकमाकाङ्क्षेत् ॥

तत्रेति । सिद्धो नखाग्रघट्टने । पदात्पदमिति स्थानात्स्थानान्तरं जघनोरुनितम्बादिकं स्प्रष्टुं सोपानक्रमेण काङ्क्षेत् ।

क्षान्त्यर्थं च तदेवाभ्यसेत् ॥

क्षान्त्यर्थं चेति सहनार्थम् । अभ्यसेत् तदेव यत्पूर्वाभ्युपगतम् ।

आन्तरानधिकृत्याह—

पादशौचे पादाङ्गुलिसंदंशेन तदङ्गुलिपीडनम् ॥

पादशौच इति पादधावनं ददत्याः । स्वपादाङ्गुलिसंदंशेन पीडनम् ।

द्रव्यस्य समर्पणे प्रतिग्रहे वा तद्गतो विकारः ॥

तद्गतो विकार इति । द्रव्यं पूगफलादिकं समर्पयता प्रतिगृह्णता वा द्रव्यगतो विकारः कार्यः । सनखस्पर्शमर्पयेत्प्रतिगृह्णीयाद्वेत्यर्थः ।

आचमनान्ते चोदकेनासेकः ॥

आचमनान्त इति । उपस्प्रष्टुं ददतीं तदन्ते जलचुलकेनाहन्यात् ।

विजने तमसि च द्वन्द्वमासीनः क्षान्तिं कुर्वीत । समानदेशशय्यायां च ॥

---

१. 'तदङ्गसमर्पणस्थापनार्थम्'. २. 'छिन्नात्'. ३. 'कियत्कालम्'. ४. 'पादाङ्गुष्ठेन च' इति पुस्तकान्तरे नास्ति. ५. 'तत्र सिद्धां पदात्पदमभिकाङ्क्षेत्'. ६. 'क्षान्त्यर्थमिति सहनार्थमित्यर्थः । तदेव यत्पूर्वा'. ७. 'पादधारणम्'. ८. 'द्रव्यस्य पूगीफलादेर्ग्रहणेऽर्पणे वा सनखस्पर्शमर्पणं दान वा'. ९. 'आचमनार्थोदकेन निषेकः'.

द्वन्द्वमिति साहचर्येणासीनः । क्षान्तिं कुर्वीतेति नखस्पर्शादिना । तत्काले लज्जाभावात्कन्यायाः । समानदेशशय्यायां च क्षान्तिं कुर्वीत ।

**तत्र यथार्थमनुद्वेजयतो भावनिवेदनम् ॥**

तत्रेति आसने शयने च । यथार्थं भावनिवेदनमाकारेण । न वाचा । प्रत्याख्यानभयात् । अनुद्वेजयत इति यथा नोद्विजते ।

यदा वाचा तदा विधिमाह—

**विविक्ते च किंचिदस्ति कथयितव्यमित्युक्त्वा निर्वचनं भावं च तत्रोपलक्षयेत् । यथा पारदारिके वक्ष्यामः ॥**

विविक्ते चेति । 'किंचिदस्ति कथयितव्यम्' इत्येतावद्वक्तव्यम्[1] । 'किं तत्' इति तयोच्यमाने[2] निर्वचनं ब्रूयादित्यर्थः । तत्रेति[3] वचनोपन्यासे । भावं संप्रयोगाभिलाषमस्या[4] लक्षयेत् । कथमित्याह—यथेति[5] । तत्र प्रवृत्त्या भावपरीक्षां वक्ष्यति । इङ्गिताकारैश्च यद्भाववेदनं तदनुरागमात्रवेदनमिति ।

विदित[6]भावस्याभ्यन्तरमभियोगमाह—

**विदितभावस्तु व्याधिमपदिश्यैनां वार्ताग्रहणार्थं[7] स्वमुदवसितमानयेत् ॥**

विदितेति । व्याधिमपदिश्येति[8] कृतकं शिरःशूलादिकमपदिश्य । समुदवसितं स्वगृहम् । आनयेत् विश्वास्यया प्रणिहितया ।

**आगतायाश्च[9] शिरःपीडने नियोगः । पाणिमवलम्ब्य चास्याः साकारं नयनयोर्ललाटे च निदध्यात् ॥**

शिरःपीडन इति शिरो मे दुःखयति पीडय हस्तेनेति[10] नियोगः ।

**औषधापदेशार्थं चास्याः कर्म[11] विनिर्दिशेत् ॥**

औषधेति । यथा जानात्यसत्कृतेयमस्यावस्थेति ।

---

१. 'वक्तव्यम्'. २. 'उच्यमानम्'. ३. 'ततो वागुपन्यासानन्तरम्'. ४. 'अस्या लक्षयेत्' इति पुस्तकान्तरे नास्ति. ५. 'यथा पारदारिकमिति'. ६. 'विजित'. ७. 'भावग्रहणार्थं'. ८. 'व्याधिं शिरःशूलादिक कृतकमुक्त्वा'. ९. 'आगताया च शिरःपीडननियोगः';'आगतायाश्च त्वशिरःपीडने'. १०. 'हस्तेनेति साकारं निदध्यात्'.११.'कर्माणि'.

**इदं त्वया कर्तव्यम् । नह्येतदृते कन्याया अन्येन कार्यमिति गच्छन्तीं पुनरागमनानुबन्धमेनां विसृजेत् ॥**

त्वयैवेति त्वया साधितं सिद्धिदं भवतीति । अनुबन्धं पुनरागन्तव्यमित्येवंरूपम् ।

**अस्य च योगस्य त्रिरात्रं त्रिसंध्यं च प्रयुक्तिः ॥**

अस्येति कन्यासाध्यस्य । त्रिरात्रं त्रिसंध्यं प्रयुक्तिः प्रयोगः ।

एतन्निर्देशे फलमाह—

**अभीक्ष्णदर्शनार्थमागतायाश्च गोष्ठीं वर्धयेत् ॥**

अभीक्ष्णेति । गोष्ठीमिति कलानामाख्यायिकानां वा । येन तदासक्ता चिरं तिष्ठेदित्यर्थः ।

**अन्याभिरपि सह विश्वासनार्थमधिकमधिकं चाभियुञ्जीत । नतु वाचा निर्वदेत् ॥**

अन्याभिरिति । ताभिर्विश्वासनं कार्यमिति हेतोरिति भावः । न त्विति ।

तत्र दोषमाह—

**दूरगतभावोऽपि हि कन्यासु न निर्वेदेन सिद्ध्यतीति घोटकमुखः ॥**

दूरेति । अत्यर्थजातविस्रम्भोऽपि न सिद्ध्यति । बहुशोऽभियोगापेक्षणीयत्वात्कन्यानाम् । घोटकमुखग्रहणं पूजार्थम् । तन्मतस्याप्रतिषिद्धत्वात् ।

**यदा तु बहुसिद्धां मन्येत तदैवोपक्रमेत् ॥**

यदा त्विति । बहुसिद्धां बहुभिरभियोगैः कार्योन्मुखीमुपक्रमेत ।

तत्र कालमाह—

**प्रदोषे निशि तमसि च योषितो मन्दसाध्वसाः सुरतव्यवसा-**

---

१. 'अनुबन्धे'. २. 'एवं ब्रूयात्'. ३. 'त्रिषवण च प्रयुक्तिरिति निर्दिशेत्'. ४. 'कन्यासाध्यं.' ५. 'अभीक्ष्णं दर्शनार्थमागताया च गोष्ठ्या प्रवर्धयेत्'. ६. 'निर्वादः'.

यिन्यो रागवसश्च भवन्ति। न च पुरुषं प्रत्याचक्षते। तस्मात्तत्कालं प्रयोजयितव्या इति प्रायोवादः॥

प्रदोष इति रात्रिप्रारम्भे। निशि रात्रौ त्रियामालक्षणायाम्। तत्राप्यन्धकारे प्रतार्यसर्वस्त्रीप्रतिपत्त्यर्थम्। मन्दसाध्वसाः कैश्चिददृश्यमानत्वात्। रागवत्यः संप्रयोगाभिलाषिण्यः। न प्रत्याचक्षते न निषेधन्ति। तस्मात्तत्कालमिति। अत्यन्तसंयोगे द्वितीया। प्रयोजयितव्या योज्याः। वाञ्छितकार्येषु।

एकपुरुषाभियोगानां त्वसंभवे गृहीतार्थया धात्रेयिकया सख्या वा तस्यामन्तर्भूतया तमर्थमनिर्वदन्त्या सहैनामङ्कमानाययेत्। ततो यथोक्तमभियुञ्जीत॥

एकेति। विप्रकृष्टत्वात्स्वयमेकस्याभियोगो न संभवति। सहायमपेक्षते। गृहीतार्थयेति नायकोऽपि नायिकां समीपमानयितुमिच्छतीत्येतद्रूपार्थज्ञानवत्या। अस्यामन्तर्भूतया नायिकायां प्रभवन्त्या। तादृशी तु धात्रेयिका सखी वा। अर्थं नायकपार्श्वगमनरूपम्। अनिर्वदन्त्या अन्यव्यपदेशिन्येत्यर्थः। ततो यथोक्तमिति द्यूतक्रीडनकेषु विवदमाना इति यथासंभवं पूर्वोक्तं योज्यमित्यर्थः।

स्वां वा परिचारिकामादावेव सखीत्वेनास्याः प्रणिदध्यात्॥

स्वामिति सहायार्थमिति भावः।

यज्ञे विवाहे यात्रायामुत्सवे व्यसने प्रेक्षणकव्यापृते जने तत्र तत्र च दृष्टेङ्गिताकारां परीक्षितभावामेकाकिनीमुपक्रमेत। नहि दृष्टभावा योषितो देशे काले च प्रयुज्यमाना व्यावर्तन्त इति वात्स्यायनः। इत्येकपुरुषाभियोगाः॥

यज्ञ इति। यज्ञादयो लोकव्यग्रत्वहेतवः। तत्र तत्रेति। अन्यत्राप्यनुक्त इत्यर्थः। परीक्षितभावामिति। नेयं शुष्कप्रतिग्राहिणी द्विधाभू-

---

१. 'तस्मात्काल.' २. 'तस्यामाविर्भूतया'. ३. 'आरोपयेत्'. ४. 'विवादकेषु'. ५. 'प्रेक्षाप्रवृत्ते जने'; 'प्रेक्षणकथाप्रवृत्ते जने'. ६. 'प्रयोज्यमाना'. ७. 'इति' इति पुस्तकान्तरे नास्ति.

तमानसा वा, किं त्वितरेति । उपक्रमेत गान्धर्वेण विधिनेत्यर्थः । दृष्टभावा उपलब्धभावाः । दृष्टोऽभिप्रेते काले यज्ञादिकाले प्रदोषादौ चेति ॥ इत्येकपुरुषाभियोगा अष्टविंशं प्रकरणम् ॥

यथा धनहीनत्वादियुक्तः कन्यामलभ्यत्वात्स्वयमेवानुरञ्जयेत् तत्र कन्यापि तथाविधा कैश्चिददास्यमाना स्वयमुपावर्तेत । तत्प्रयोज्यस्योपावर्तनमाह । उपावर्तनमभिमुखीकरणम् ।

कथं न व्रियत इत्याह—

**मन्दापदेशा गुणवत्यपि कन्या धनहीना कुलीनापि[1] समानैर[2]याच्यमाना मातापितृवियुक्ता वा ज्ञातिकुलवर्तिनी वा प्राप्तयौवना पाणिग्रहणं स्वयमभीप्सेत ॥**

मन्देति । मन्दापदेशा हीनाभिजना । गुणवत्यपि सा तैरदास्यमाना वा । धनहीना वा कुलीनापि । समानैस्तुल्याभिजनैर्धनिभिः । मातृपितृवियुक्ता वा अनाथत्वादयाच्यमाना । प्राप्तयौवनेति प्रत्येकं योज्यम् । स्वयमीप्सेत । तदानीं स्वयंवरस्या[3]भ्यनुज्ञानात् । यथोक्तम्—'त्रीणि वर्षाण्युपासीत कुमर्यनुमता सती । ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥' इति ।

सदृशप्रतिपत्तावुपायमाह—

**सा तु गुणवन्तं शक्तं सुदर्शनं बालप्रीत्याभियोजयेत् ॥**

सा त्विति । गुणवन्तं नायकगुणयुक्तम् । शक्तं युद्धादिषु । सुदर्शनं रूपवन्तम् । बालेति । बाल्ये क्रीडायां या प्रीतिस्तया [4]प्रयोज्यकर्त्र्या स तथाभियुञ्जानः सिद्ध्यतीत्यर्थः ।

गुणान्तरमाह—

**यं वा मन्येत मातापित्रोरसमीक्षया स्वयमप्ययमिन्द्रियदौर्बल्यान्मयि प्रवर्तिष्यत इति प्रियहितोपचारैरभीक्ष्णसंदर्शनेन च तमावर्जयेत् ॥**

---

१. 'वा'. २. 'अदास्यमाना'. ३. 'अभ्यनुज्ञातत्वात्'. ४. 'प्रयोज्यया कर्त्र्या'.

यं वेति । असमीक्ष्येति मातापितृभ्यां मम मार्गयित्वा । इन्द्रियाणि नियन्तुमसमर्थत्वात् यमेवं मन्येत तमपि योजयेदिति संबन्धः । प्रियहितेति प्रियोपचारा एतदर्थं सुखं कुर्वन्ति । आवर्जनमभिमुखीकरणम् ।

**माता चैनां सखीभिर्धात्रेयिकाभिश्च सह तदभिमुखीं कुर्यात् ॥**

माता चैनामिति । सा न जीवति चेत्कृतकमाता वा । सखीभिः सह लज्जापगमार्थम् । उपचारैर्बाह्यैराभ्यन्तरैश्चेति शेषः ।

तत्र पूर्वमधिकृत्याह—

**पुष्पगन्धताम्बूलहस्ताया विजने विकाले च तदुपस्थानम्[१] । कलाकौशलप्रकाशने वा संवाहने शिरसः पीडने[२] चौचित्यदर्शनम् । प्रयोज्यस्य सात्म्ययुक्ताः कथायोगाः बालायामुपक्रमेषु यथोक्तमाचरेत्[३] ॥**

पुष्पेति । तदुपस्थानं नायकसमीपगमनम् । कौशलप्रकाशनार्थम् । औचित्यदर्शनमिति । सहसा न प्रतिजानीयात् । अनुबध्यमानमनुकुर्यादित्यर्थः । प्रयोज्यस्य सात्म्ययुक्ताः प्रयोज्यानुकूलाः । बालायां ये नायकस्योपक्रमा उक्तास्तेषु यथोक्तं समाचरेत् ।

**न चैवान्तरापि[४] पुरुषं स्वयमभियुञ्जीत । स्वयमभियोगिनी हि युवतिः सौभाग्यं[५] जहातीत्याचार्याः ॥**

अन्तरापीति । कामपरवशापि न स्वयमभियुञ्जीत । आचार्यग्रहणं पूजार्थम् । तन्मतस्याप्रतिषिद्धत्वात् । स चेदभियुञ्जीत प्रतिगृह्णीयात् ।

**तत्प्रयुक्तानां त्वभियोगानामानुलोम्येन ग्रहणम् । परिष्वक्ता च न विकृतिं भजेत् । श्लक्ष्णमाकारमजानतीव प्रतिगृह्णीयात् । वदनग्रहणे बलात्कारः । रतिभावनामभ्यर्थ्यमानायाः[६] कृच्छ्राद्गुह्यसंस्पर्शनम्[७] ॥**

१. 'तदुपस्थानम्'. २. 'शिरसः कण्डूयने पीडने च'. ३. 'यथा चोक्तम्'. ४. 'न त्वेवानुरागादपि'; 'न त्वेवान्तरापि'. ५. 'सद्यः सौभाग्य'. ६. 'रतिभावनायामभ्यर्थनायां च'. ७. 'संदर्शनम्'.

तत्प्रयुक्तानामिति बाह्यानामभियोगानाम् । आनुलोम्येन येन न विमुखीभवति । आभ्यन्तरमधिकृत्याह—परिष्वक्तेति । न विकृतिमिति । मा ज्ञासीन्नायको मामुद्विग्नामिति हेतोरित्यर्थः । आकारमिति नायकस्य भावसूचकमाकारं प्रतिगृह्णीयात् । न प्रत्याचक्षीत । तत्रापि श्लक्ष्णमस्फुटम् । क्रियाविशेषणमेतत् । अजानतीवेति धाष्टर्यपरिहारार्थम् । बलात्कार इति । तथा कार्यं यथा हठाद्वदनं गृह्णातीत्यर्थः । रतिभावनामिति । आत्मनो व्युत्पत्तिं नायकेन यदा साभ्यर्थ्यते स्वगुह्ये तत्पाणिन्यासेन तदा कृच्छ्रान्नायकगुह्यस्पर्शनम् ।

तत्रापि विशेषमाह—

**[1]अभ्यर्थितापि नातिविवृता स्वयं स्यात् । अन्यत्रानिश्चयका[2]लात् । यदा तु मन्येतानुरक्तो [3]मयि न व्यावर्तिष्यत इति तदैवैनम[4]भियुञ्जानं बालभावमोक्षाय त्वरयेत् । विमुक्तकन्याभावा च विश्वास्येषु प्रकाशयेत् । इति प्रयोज्यस्यो[5]पावर्तनम् ॥**

नातिविवृतेति । भावाङ्गप्रत्यङ्गदर्शनेनेत्यर्थः । तत्र हेतुः—अनिश्चयेति । यदा त्विति । न व्यावर्तिष्यते न मां त्यक्ष्यति । अभियुञ्जानं प्रच्छन्नप्रदेशे । [6]बालभावमोक्षायेति गान्धर्वविधिपूर्वकं कौमारहरणाय त्वरयेत् । विश्वास्येषु सखीधात्रेय्यादिषु । प्रकाशयेत् गान्धर्वेण विवाहेनाहमूढेति ॥ इति प्रयोज्यस्योपावर्तनमेकोनत्रिंशं प्रकरणम् ॥

यदा प्रयोज्यमुपावर्तमाना बहुभिरभियुज्यते तदाभियोगतः कन्यायाः प्रतिपत्ति[7]रुच्यते । अभियोगं दृष्ट्वा कन्याया अनुष्ठानमित्यर्थः ।

[8]भवन्ति चात्र श्लोकाः—

**कन्याभियुज्यमाना तु यं मन्येताश्रयं सुखम् ।**
**अनुकूलं च वश्यं च तस्य कुर्यात्परिग्रहम् ॥**

---

१. 'अभ्यर्थ्यमानापि तु'; 'अभ्यर्थितापि न विवृता'. २. 'नियतकालात्'. ३. 'अथ न व्यावर्तयिष्यत इति'. ४. 'अभियुञ्जानं बालभावाद्विमोक्षयेत्'; 'अभियुञ्जाना बालभावविमोक्षणाय'; 'अभियुञ्जाना बालभावं विमोक्षेत्'. ५. 'स्योपावर्तनम्'. ६. 'बालभावमोचनाय'. ७. 'अपि युज्यते'. ८. 'भवन्ति चात्र श्लोकाः' इति पुस्तकान्तरे नास्ति. एकस्मिन्पुस्तके च 'भवन्ति चात्र' एतावदेवास्ति.

कन्येति। आश्रयमिति आश्रीयत इति कृत्वा। सुखमिति बाह्यस्योपभोगसुखस्य आन्तरस्य चरमसुखस्य हेतुत्वात्। अनुकूलं तच्चित्तानुविधायिनं वश्यं यथोक्तकारिणं मन्येत ततस्तस्य प्रतिग्रहं कुर्यात्। सोऽपि तथैवाचरेदित्यर्थः।

अनपेक्ष्य गुणान्यत्र रूपमौचित्यमेव च।
कुर्वीत धनलोभेन पतिं सापत्नकेष्वपि॥
तत्र युक्तगुणं वश्यं शक्तं बलवदर्थिनम्।
उपायैरभियुञ्जानं कन्या न प्रतिलोभयेत्॥

अनपेक्ष्येति। यस्मिन्स्वयंवरे गुणाननपेक्ष्य तदभावात् धनवानेव केवलम्। सापत्नकेष्वपि। न केवलमसापत्नकेषु। प्रायेण धनिनां बहुदारत्वात्। तत्र स्वयं युक्तगुणं सगुणं शक्तं समर्थं बलवदर्थिनमेकान्ततोऽर्थिनं न प्रतिलोभयेत् अपाकुर्यात्।

यस्तु धनवान्बहुपत्नीको गुणवानपि न तमभियुञ्जानं प्रतिलोभयेदिति दर्शयन्नाह—

वरं वश्यो दरिद्रोऽपि निर्गुणोऽप्यात्मधारणः।
गुणैर्युक्तोऽपि न त्वेवं बहुसाधारणः पतिः॥

वरमिति। आत्मधारणः कुटुम्बमात्रधारकः बहुसाधारणो बहूनामेकः। यस्तु धनवान् कृतपरिग्रहो गुणवान् वश्यः सन् प्रतिलोभयेदित्यर्थः।

यस्तु न वश्यस्तत्र दोषमाह—

प्रायेण धनिनां दारा बहवो निरवग्रहाः।
बाह्ये सत्युपभोगेऽपि निर्विस्रम्भा बहिःसुखाः॥

प्रायेणेति। अत एव धनवान्बहून्दारान्प्रतिगृह्णाति। विशेषतस्ताश्च निरवग्रहा निरङ्कुशाः। तत्र कारणम्—बाह्य इति। आसनाद्युपभोगेन बहिःसुखाः। निर्विस्रम्भा आन्तरेण रताख्यसुखेन वर्जिता इत्यर्थः॥

---

१. 'आश्रियते'. २. 'सोऽपि'. ३. 'अभियुञ्जीत'. ४. 'स्वगुण'. ५. 'आत्मवाम्नर.'. ६. 'वा नैव' ७. 'धनवान्गुणवान्'.

नीचो यस्त्वभियुञ्जीत पुरुषः पलितोऽपि वा ।
विदेशगतिशीलश्च न स संयोगमर्हति ॥

नीचोऽधमजातिः[1] पूर्वगुणयुक्तोऽपि । पलितो वृद्धः । सदा प्रवासी ।

यदृच्छयाभियुक्तो[2] यो दम्भद्यूताधिकोऽपि वा ।
सपत्नीकश्च सापत्यो न स संयोगमर्हति ॥

यदृच्छयेति । स्वेच्छाभियोगशीलः । बलात्कारेणेति भावः । व्याजबहुलो दम्भद्यूतासक्तश्च । सपत्नीकः सापत्यश्च परिणीतभार्यायुक्तस्तदपत्यवांश्च । एकतरवान्वा ।

वश्यस्तु तादृशोऽपि संयोगमर्हत्येवेत्याह—

गुणसाम्येऽभियोक्तॄणामेको वरयिता वरः ।
तत्राभियोक्तरि श्रैष्ठ्यमनुरागात्मको हि सः ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे एकपुरुषाभियोगा अभियोगतश्च कन्यायाः प्रतिपत्तिश्चतुर्थोऽध्यायः ।

गुणेति । यथोक्तगुणानां साम्ये । एको वर इति व्रियन्त इति वराः सर्वे एवाभियोक्तारः । तेषां वर एको वरयिता वरणे साधुः । 'वर ईप्सायाम्' । साधुकारिणि तस्मिन्नभियोक्तरि तत्त्वाविशेषे श्रैष्ठ्यं श्रेष्ठता । तस्यानुरागात्मकत्वात् । इत्यभियोगतः कन्यायाः प्रतिपत्तिरियं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे एकपुरुषाभियोगा अभियोगतश्च कन्यायाः प्रतिपत्तिश्चतुर्थोऽध्यायः ।

---

पञ्चमोऽध्यायः ।

एवमनुरञ्जितां[3] स्वयंवरप्रवृत्तां च गान्धर्वेण योजयेत् । विपरीतामासुरा-

---

१. 'अधर्मजातिः'. २. 'अभियुद्धे'. ३. 'एवमनुरञ्जिताया स्वयंवरप्रयुक्तां च'.

दिभिरिति विवाहयोगा उच्यन्ते । तत्र गान्धर्वेण प्रायशो दृश्यन्ते । तस्यास्तावत्सहायसाध्यविधिमाह—

**प्राचुर्येण कन्याया विविक्तदर्शनस्यालाभे धात्रेयिकां प्रियहिताभ्यामुपगृह्योपसर्पेत् ॥**

प्राचुर्येणेति । धात्रेयिकां पुरुषप्रवृत्तामित्यर्थात् । उपगृह्य प्रियहिताभ्यामुपसर्पेत् तस्याः समीपे निसृष्टार्थां प्रेषयेत् ।

**सा चैनामविदिता नाम नायकस्य भूत्वा तद्गुणैरनुरञ्जयेत् । तस्याश्च रुच्यान्नायकगुणान्भूयिष्ठमुपवर्णयेत् । अन्येषां वरपितॄणां दोषानभिप्रायविरुद्धान्प्रतिपादयेत् । मातापित्रोश्च गुणानभिज्ञतां लुब्धतां च चपलतां च बान्धवानाम् । याश्चान्या अपि समानजातीयाः कन्याः शकुन्तलाद्याः स्वबुद्ध्या भर्तारं प्राप्य संप्रयुक्ता मोदन्ते स्म ताश्चास्या निदर्शयेत् । महाकुलेषु सापत्नकैर्बाध्यमाना विद्विष्टा दुःखिताः परित्यक्ताश्च दृश्यन्ते । आयतिं चास्य वर्णयेत् । सुखमनुपहतमेकचारितायां नायिकानुरागं च वर्णयेत् । समनोरथायाश्चास्या अपायं साध्वसं व्रीडां च हेतुभिरवच्छिन्द्यात् । दूतीकल्पं च सकलमाचरेत् । त्वामजानतीमिव नायको बलाद्ग्रहीष्यतीति तथा सुपरिगृहीतं स्यादिति योजयेत् ॥**

सा चेति । सा उपसर्पिता नायकस्याविदितेव भूत्वा कृतकप्रयोगपरिहारार्थम् । तस्य नायकस्य गुणैः । तस्याश्चेति । अभिप्रायविरुद्धानिति यथा नेच्छति तानियं तथेत्यर्थः । गुणानभिज्ञतां लुब्धतां चेति । अगुणज्ञौ तव पितरौ लुब्धौ च येन गुणवन्तमपहायान्यं धनिनं निर्गुणं गवे-

---

१. 'प्रियहिताभ्या' इति पुस्तकान्तरे नास्ति. २. 'परिवर्णयेत्'. ३. 'अन्यवरयितॄणा'. ४. 'गुणानपेक्षिता'. ५. 'स्वबुद्ध्या भर्तारं'; 'स्वबुद्ध्या रुच्य भर्तार प्राप्य सयुक्ताः सुरतं मोदन्ते स्म'. ६. 'दर्शयेत्'. ७. 'एकचारितां नायकानुरागं कन्याविषयं वर्णयेत् मनोरथाश्च'; 'एकचारिता च वश्यतां नायकानुराग च मनोरथाश्च वर्णयेत्'. ८. 'अपायसाध्वस'. ९. 'नाम' इति पुस्तकान्तरे. १०. 'इति' इति पुस्तकान्तरे नास्ति. ११. 'यथेच्छितानि तथेत्यर्थ'.

पयत इति। नानुरूपोऽयं ममेति। स्वबुद्ध्यावधारणं, न पित्रोरिच्छया। तथा कर्तव्ये शकुन्तलादिकृताः कथाः कथयेत्। कौशिकः स्वतपोविघ्नार्थमिन्द्रसंप्रेषितामप्सरसं मेनकां दृष्ट्वा जातरागश्चकमे। सा च तद्वीर्यग्रहणात्तत्रैव कन्यां प्रसूय त्यक्त्वा चारण्ये दिवं जगाम। शकुन्तसंपातमध्यगतां च तां कन्यां कण्वर्षिः करुणयाश्रममानीय वर्धितवान्। यथार्थं च शकुन्तलेति नाम चक्रे। सा च कालेन प्राप्तयौवना मृगयाप्रसङ्गादागतं दुष्यन्तं राजानं दृष्ट्वा स्वबुद्ध्या पाणिं ग्राहितवतीति। आदिशब्दाद्राजदारिकाः कन्या निदर्शयेत्। महाकुलेष्विति। महाकुलेषु च लोभात्पित्रा दत्ता नियतं सापत्नकैर्बाध्यन्ते। ततश्च विद्विष्टाः परिजनस्य परित्यक्ताः सत्यो दुःखिता दृश्यन्त इति दर्शयेत्। आयतिमुत्तरभाविनमर्थम्। भविष्यति चेति। एकचारितायामिति एकपत्नीत्वे सुखमनुपहतं वर्णयेत्। सापत्न्यदुःखाभावात्। नायकानुरागं चेति। समनोरथाया इति। अस्त्येवायमस्या मनोरथः किं तु दोषान्पश्यतीत्युत्प्रेक्ष्याह—अपायमिति। विनाशं कुतश्चित्। साध्वसं भयं गुरुजनात्, व्रीडां परिजनेषु हेतुभिरुपायैर्दर्शनैरपनयेत्। दूतीकल्पं च पारदारिके वक्ष्यमाणं प्रतारणकरणम्। त्वामजानतीमिवेति। जानतीमिव बलात्कारेण ग्रहीष्यति तदा न तव दोषः। तथेति तेन प्रकारेण सुगृहीतं स्यात्।

प्रतिपन्नामभिप्रेतावकाशवर्तिनीं नायकः श्रोत्रियागारादग्निमानाय्य कुशानास्तीर्य यथास्मृति हुत्वा च त्रिः परिक्रमेत्। ततो मातरि पितरि च प्रकाशयेत्। अग्निसाक्षिका हि विवाहा न निवर्तन्त इत्याचार्यसमयः॥

प्रतिपन्नामिति। अभ्युपगतामेकान्तदेशवर्तिनीम्। श्रोत्रियेति। तत्राग्नेः संस्कृतत्वादित्यर्थः। यथास्मृति स्वगृह्योक्तविधिना। त्रिः परिक्रमेत् अग्निं भ्रमयेत्। प्रकाशयेत् प्रणिधिना यथा नायकेनोढेति। न निवर्तन्त इति नान्येनोह्यते इति दर्शयति। धर्मविवाहेष्वग्निसंनिधानं कार्यमिति।

१. 'वरण'. २. 'कौशिकस्य तपो'. ३. 'भ्रमं'. ४. 'प्रतारणप्रकरणम्'; 'प्रतारणकारणम्'. ५. 'आनीय'. ६. 'परिणयेत्'. ७. 'अतिवर्तन्ते'.

**दूषयित्वा चैनां शनैः स्वजने प्रकाशयेत् । तद्बान्धवाश्च यथा कुलस्याघं परिहरन्तो दण्डभयाच्च तस्मा एवैनां दद्युस्तथा योजयेत् । अनन्तरं च प्रीत्युपग्रहेण रागेण तद्बान्धवान्प्रीणयेदिति । गान्धर्वेण विवाहेन वा चेष्टेत ॥**

दूषयित्वेति अभिगम्येत्यर्थः । नोद्वाहितमात्राम् । शनैः स्वजने प्रकाशयेत् तस्या आत्मीकरणार्थम् । यथा पितरौ तथाविधामपि प्रयच्छत इति तदाह—तद्बान्धवा इति । नायिकाबान्धवाः । नायकोपगृहीतेत्यघं दोषं परिहरन्तो यदि तस्मै न प्रतिपाद्यते तदा कुलं दुष्यत इति । दण्डभयाच्चेति । एवं चानुष्ठीयमानं यदि राजा शृणुयात्तदा दण्डं पातयेदिति । तस्मै एव नायकायैव । अनन्तरं चेति ।

आन्तरस्थामधिकृत्याह—

**अप्रतिपद्यमानायामन्तश्चारिणीमन्यां कुलप्रमदां पूर्वसंसृष्टां प्रीयमाणां चोपगृह्य तया सह विषह्यमवकाशमेनामन्यकार्यापदेशेनानाययेत् । ततः श्रोत्रियागारादग्निमिति समानं पूर्वेण ॥**

अप्रतिपद्यमानायामिति स्वयं पाणिग्रहणमकुर्वत्याम् । अन्तश्चारिणीमन्यामित्यन्तरङ्गां कुलस्त्रियम् । पूर्वसंबद्धां पित्रोः सौजन्येन प्रीयमाणां नायकस्य । उपगृह्येति द्रव्येण स्वीकृत्य । विषह्यमिति गम्यम् । अन्यं कार्यमपदिश्यानाययेत्प्रणिधिना । समानं पूर्वेणेति । श्रोत्रियागारादित्यादि पूर्ववदित्यर्थः ।

**आसन्ने च विवाहे मातरमस्यास्तदभिमतदोषैरनुशयं ग्राहयेत् । ततस्तदनुमतेन प्रातिवेश्याभवने निशि नायकमानाय्य श्रोत्रियागारादग्निमिति समानं पूर्वेण ॥**

---

१. 'शनैः शनैः'. २. 'कुलस्य त्याग'; 'कुलस्याङ्ग'; 'कुलस्य भङ्गं'. ३. 'प्रीत्युपग्रहैरनुरागेण च तान्बान्धवान्'. ४. 'च चेष्टयेत्'. ५. 'अङ्ग' ६. 'विपद्य सावकाशं'. ७. 'आसन्ने चास्या विवाहेऽन्येन वरेण—वरदोषै'; 'अन्यवरदोषैः'. ८. 'ततस्तदनुमतेन ग्राहयित्वा प्रातिवेश्यभवन निशि नायकं श्रोत्रिया'

तदनुमतेन मातुरभिप्रायेण। अनुशयादूर्ध्वम्। प्रातिवेश्याभवने इति। तस्या द्रव्येणोपगृहीतत्वात्। इति द्वितीयः।

**[1]भ्रातरमस्या वा समानवयसं वेश्यासु परस्त्रीषु वा प्रसक्तमसुकरेण [2]साहाय्यदानेन प्रियोपग्रहैश्च सुदीर्घकालमनुरञ्जयेत्। [3]अन्ते च स्वाभिप्रायं ग्राहयेत्। प्रायेण हि युवानः समानशीलव्यसनवयसां वयस्यानामर्थे जीवितमपि त्यजन्ति। ततस्तेनैवा[4]न्यकार्यात्तामानाययेत्। विपक्षं सावकाशमिति समानं पूर्वेण॥**

अस्या भ्रातरं तुल्यवयसमेकान्त[5]प्रसक्तमसुकरेण कष्टसाध्येन दुःसाध्यस्त्रीसंपादनादिना। प्रियोपग्रहैरिति सामदानैरन्यैर्वा। इत्यनुरञ्जनविधिः। स्वाभिप्रायमिति त्वद्भगिनीं परिणेतुमिच्छामि। अन्यकार्यादिति ल्यब्लोपे पञ्चमी। अन्यकार्यमुद्दिश्येत्यर्थः। तत्रापि नायिकामानाययेदिति तृतीयः।

सुप्तप्रमत्तोपगमात्पैशाचः। तमधिकृत्याह—

**अष्टमीचन्द्रिकादिषु च धात्रेयिका मदनीयमेनां पाययित्वा किंचिदात्मनः कार्यमुद्दिश्य नायकस्य विषह्यं देशमानयेत्। तत्रैनां [6]मदात्संज्ञामप्रतिपद्यमानां दूषयित्वेति समानं पूर्वेण॥**

अष्टमीचन्द्रिकादिष्विति। अष्टमीचन्द्रिकादिषु तत्र दिवसमुपोष्य पूजापुरःसरं रात्रिजागरणमा चन्द्रोदयम्। [7]अनन्तरं तां धात्रेयिका नायकप्रसक्ता मदनीयं सुरादिकं पाययित्वा। किंचिदात्मनः कार्यमिति। अङ्गुलीयकं विस्मृत्यागतासि तत्र गच्छेत्युपदिश्यानयेदित्यर्थः। तत्रेति विपक्षदेशे। संज्ञां चेतनाम्। दूषयित्वेति। दूषयित्वा चैनां शनैः स्वजनेषु प्रकाशयेत्। तद्बान्धवाश्चेत्यादिपूर्ववत्। इत्येकः प्रकारः।

**सुप्तां चैकचारिणीं [8]धात्रेयिकां वारयित्वा संज्ञामप्रतिपद्यमानां दूषयित्वेति समानं पूर्वेण॥**

---

१. 'ज्येष्ठं वा भ्रातरं समान'. २. 'साहाय्यक'. ३. 'तदन्ते च स्वमभिप्रायं'. ४. 'अन्यकार्यापदेशेन'. ५. 'प्रयुक्तं'. ६. 'अतिमदात्'. ७. 'अतस्ता'. ८. 'धात्रेयिकया'.

सुप्तां चैकचारिणीमिति । अङ्कसुप्तेति द्वितीयः । अत्राप्याहरणादिकं नास्ति अधर्मत्वादिति ।

प्रसह्याहरणाद्राक्षसमधिकृत्याह—

**ग्रामान्तरमुद्यानं वा गच्छन्तीं विदित्वा सुसंभृतसहायो नायकस्तदा रक्षिणो वित्रास्य हत्वा वा कन्यामपहरेत् । इति विवाहयोगाः ॥**

ग्रामान्तरेति । अस्माद्ग्रामादन्यग्रामम् । सुसंभृतसहाय इति सुसंनद्धबहुसहायः । रक्षिणः कन्यारक्षकान् । वित्रास्य ते यथा त्यक्त्वा पलायन्ते । हत्वा वा प्रहारैः कन्यामपहरेत् । कृष्णवद्रुक्मिणीम् । अत्राप्यधर्मत्वान्नान्याहरणादि । विवाहयोगा गान्धर्वादीनां विषयः ।

अष्टानां विवाहानां मध्ये किमपेक्षया कस्य प्राधान्यमित्याह—

**पूर्वः पूर्वः प्रधानं स्याद्विवाहो धर्मतः स्थितेः ।**
**पूर्वाभावे ततः कार्यो यो य उत्तर उत्तरः ॥**

पूर्वः पूर्व इति । धर्मसंस्थितेरिति धर्मतो व्यवस्थानादित्यर्थः । तत्र पूर्वे धर्म्याश्चत्वारः । अस्मिन्दर्शने गान्धर्वाद्ब्राह्मादयः प्रधानम् । तत्रापि केचित्तरतमभेदेन पूर्वः पूर्व इत्याहुः । गान्धर्वो ह्यासुरात् पडिति । एते एकस्मिन्पक्षे द्वावपि धर्म्यौ । किं तु यथा पूर्वेण तथा परतः । यथा च गान्धर्वो न तथासुर इति । केचित् 'आसुरोऽपि पैशाचात्तथाधर्मत्वात् । पैशाचोऽधर्म्योऽपि राक्षसात्प्रधानम् । राक्षसस्य साहसकर्मत्वात् । यो य उत्तर उत्तर इति अन्यगत्या अन्यः' इत्याहुः ।

गान्धर्व एव प्रधानमित्याह—

**व्यूढानां हि विवाहानामनुरागः फलं यतः ।**
**मध्यमोऽपि हि संयोगो गान्धर्वस्तेन पूजितः ॥**

व्यूढानामिति कृतानामनुरागः फलम् । अन्यथानुरागाभावे निष्फलः

---

१. 'प्रभूतसहायः'; 'सभृतसहायः'; 'संभृतसहाय'. २. 'योगः'. ३. 'धर्मे'. ४. 'सद्योगात्'.

स्यात् । मध्यमोऽपि हि पडित्येकस्मिन्पक्षे । सद्योग इति शोभनोऽनुरागात्मको योगोऽस्येति । तेन च सद्योगेन गान्धर्व इत्युच्यते ।

एवं च कृत्वास्य प्राधान्यमित्याह—

सुखत्वादवहुक्लेशादपि चावरणादिह ।
अनुरागात्मकत्वाच्च गान्धर्वः प्रवरो मतः ॥

इति श्रीवात्स्यायनीये कामसूत्रे कन्यासंप्रयुक्तके तृतीयेऽधिकरणे विवाहयोगाः पञ्चमोऽध्यायः ।

सुखत्वादिति सुखहेतुत्वात् । अवहुक्लेशात् प्रायेणेति । प्रायशो न यत्नसाध्य इत्यर्थः । अवरणात् वरणसंविधानाभावात् ॥ इति विवाहयोगा एकत्रिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां कन्यासंप्रयुक्तके तृतीयेऽधिकरणे विवाहयोगाः पञ्चमोऽध्यायः ।

---

समाप्तं चेदं कन्यासंप्रयुक्तकं तृतीयमधिकरणम् ।

---

# भार्याधिकारिकं नाम चतुर्थमधिकरणम्।

## प्रथमोऽध्यायः।

कन्या पुरुषेण संप्रवृत्ता[1] तया पुंसि कथं वर्तितव्यमित्यतो भार्याधिकारिकमुच्यते। तच्च कन्यासंप्रयुक्तकशेषभूतम्[2]। अन्यथा विशेषाधिकाननुष्ठानात्संयुक्ताप्यसंप्रयुक्तकैव स्यात्। भार्या च द्विविधा—एकचारिणी सपत्निका[3] च। तत्र प्राधान्येनैकचारिणीवृत्तमुच्यते—

**भार्यैकचारिणी गूढविश्रम्भा[4] देववत्[5]पतिमानुकूल्येन वर्तेत ॥**

भार्येति। गूढविश्रम्भा। इतरस्याः कपटव्यवहारः। संभावितत्वात्[6]। 'भर्ता तु देवता स्त्रीणाम्' इति न्यायात्। आनुकूल्येन चित्तानुविधानेनैव। वर्तेतेत्यन्तर्भावितोऽर्थः। शरीरस्थितिविषयमेतत्।

वृत्तं सूचयति—

**तन्मतेन[7] कुटुम्बचिन्तामात्मनि संनिवेशयेत् ॥**

तन्मतेनेति यदा तु नायकेनानुज्ञाता। कुटुम्बचिन्तां गृहचिन्ताम्। बाह्यवस्तुविषयमेतत्। आत्मनि संनिवेशयेत् आत्माधीनां कुर्यात्। यथायोगं योज्यम्।

तत्र गृहप्रतिबद्धत्वाद्गृहस्य चिन्तामाह—

**वेश्म च शुचि सुसंमृष्टस्थानं विरचितविविधकुसुमं श्लक्ष्णभूमितलं हृद्यदर्शनं त्रिषवणाचरितबलिकर्म[8] पूजितदेवायतनं कुर्यात् ॥**

वेश्म चेति। कुर्यादित्यनेन संबन्धः। सुसंमृष्टं सुशोभितम्। स्थानेषु विरचितानि विप्रकीर्णानि विविधानि कुसुमानि यस्य। श्लक्ष्णभूमितलमिति मसृणभूतलम्। हृद्यं हृदयप्रियं दर्शनं यस्य। त्रिषवणं त्रिसंध्यमाचरितं कारितं बलिकर्म यत्र। देवतायतनं देवगृहम्। तत्पूजितं यस्मिन्।

**न ह्यतोऽन्यद्गृहस्थानां चित्तग्राहकमस्तीति गोनर्दीयः ॥**

---

१. 'प्रवृत्ता'. २. 'असंयुक्तकस्येव'. ३. 'सपत्नीका च'. ४. 'रूढविश्रम्भा'. ५. 'देवतावत्'. ६. 'समावितवत्'. ७. 'तन्मतेन तु'. ८. 'त्रिषवणं विरचित'; 'उपवनोपरचित.'

अतोऽन्यदिति अत्रोपवर्णितवेश्मनः । चित्तग्राहकं मनोहारि । गोनर्दीय इति पूजार्थम् । अधिकरणेऽधिकृतत्वात् ।

तत्र वृत्तद्वयं दर्शयन्नाह—

**गुरुषु भृत्यवर्गेषु नायकभगिनीषु तत्पतिषु च यथार्हं प्रतिपत्तिः॥**

गुरुष्विति श्वशुरादिषु । नायकभगिनीषु ननान्दृषु । तत्पतिषु ननान्दृपतिषु । यथार्हं प्रतिपत्तिरिति यथा यस्यां प्रतिपत्तिः । वाक्कायाभ्यामनुष्ठानात् ।

**परिपूतेषु च हरितशाकवप्रानिक्षुस्तम्बाञ्जीरकसर्षपाजमोदशतपुष्पातमालगुल्मांश्च कारयेत् ॥**

परिपूतेषु चेति पवित्रेषु । हरितं धान्याकार्द्रकादि । शाकं पालङ्क्यादि च । एषां वप्रान्केदारान् । इक्षुस्तम्बानिक्षुविटपान् । जीरकादीञ्शतपुष्पापर्यन्तान्कारयेत् । तत्राजमोदोऽनेनैव नाम्ना प्रतीतः । तमालगुल्मांस्तमालविटपान् ।

**कुब्जकामलकमल्लिकाजातीकुरण्टकनवमालिकातगरनन्द्यावर्तजपागुल्मानन्यांश्च बहुपुष्पान्वालकोशीरकपातालिकांश्च वृक्षवाटिकायां च स्थण्डिलानि मनोज्ञानि कारयेत् ॥**

तत्र कुब्जकादीनां गुल्मान् । तगरः पिण्डीतगरः । जपा ओड्रपुष्पम् । बहुपुष्पा ये निर्भरं पुष्प्यन्ति । वालकोशीरयोः पातालिका केदारः । स्थण्डिलान्यवपदिकानि ।

**मध्ये कूपं वापीं दीर्घिकां वा खानयेत् ॥**

वापीं समचतुरस्रां पुष्करिणीम्, दीर्घिकामायतचतुरस्रां खानयेत् । वास्तुवशात् ।

**भिक्षुकीश्रमणाक्षपणाकुलटाकुहकेक्षणिकामूलकारिकाभिर्न संसृज्येत ॥**

---

१. 'पुरुषभृत्य.' २. 'परिपूते स्थाने'. ३. 'नवमल्लिका'. ४. 'बहून्पुष्पविशेषान्'. ५. 'उशीरकफेलिकाश्च'; 'उशीरकाश्च.' ६. 'उच्छ्रितानि वितृणान्यकण्टकानि च स्थण्डिलानि'. ७. 'मनोज्ञानि कारयेत्' इति पुस्तकान्तरे नास्ति. ८. 'अवपट्टिकानि'; 'अवयवकानि'. ९. 'सामान्येषु देशेषु कूप'. १०. 'वस्तु'; 'यस्तु.'

भिक्षुकी भिक्षणशीला । श्रमणा क्षपणा प्रव्रजिता रक्तपट्टिका च । कुलटा प्रच्छन्नं खण्डितचारित्रा । कुहका कौतु[क]कारिका । ईक्षणिका विप्रश्निका । मूलकारिका वशीकरणेन मूलेन या कर्म करोति तां(तया) च न संसृज्येत । भर्तुर्विकल्पहेतुत्वात् ।

भोजने च रुचितमिदमस्मै द्वेष्यमिदं पथ्यमिदमपथ्यमिदमिति च विन्द्यात् ॥

भोजने चेति । भोजनकाले रुचिता[दी]नि विन्द्यात् ।

स्वरं वहिरुपश्रुत्य भवनमागच्छतः किं कृत्यमिति ब्रुवती सज्जा भवनमध्ये तिष्ठेत् ॥

किं कृत्यमिति । आदिश्यमानकार्यस्यानुष्ठानबुद्ध्या । सज्जा सावधाना । भवनमध्येऽङ्गणके ।

परिचारिकामपनुद्य स्वयं पादौ प्रक्षालयेत् ॥

परिचारिकामिति । पादप्रक्षालनोद्यतामपनुद्यापास्य ।

नायकस्य च न विमुक्तभूषणं विजने संदर्शने तिष्ठेत् ॥

संदर्शन इत्यग्रतो न तिष्ठेत् । कृतशरीरसंस्कारामदृष्ट्वा वैराग्यमपि स्यात् ।

अतिव्ययमसद्व्ययं वा कुर्वाणं रहसि बोधयेत् ॥

अतिव्ययमुचितव्ययादधिकम् । असद्व्ययं यदनर्थिजने प्रतिपाद्यते । रहसि बोधयेत् । लोकमध्ये हि लज्जित एव स्यात् ।

आवाहे विवाहे यज्ञे गमनं सखीभिः सह गोष्ठीं देवताभिगमनमित्यनुज्ञाता कुर्यात् ॥

आवाहे वरगृहे । विवाहे कन्यागृहे । गोष्ठीं संभूय पानभोजनम् । देवताभिगमनं द्रष्टुमनुज्ञाता कुर्यात् । अन्यथा स्वैरिणीत्याशङ्कयेत ।

सर्वक्रीडासु च तदानुलोम्येन प्रवृत्तिः ॥

सर्वक्रीडासु चेति यक्षरात्र्यादिषु लोके प्रवृत्तासु तच्चित्तानुविधानेन प्रवृत्तिः ।

---

१. 'बहिरुपद्युत्य'; 'स्वरमागच्छतो बहिरुपश्रुत्य'. २. 'परिचारिका.'; 'परिचारकान्'. ३. 'भूषणा'. ४. 'आवाहविवाहयज्ञगमनं'. ५. 'वरग्रहेति'. ६. 'कन्याग्रहे'. ७. 'आशङ्केत'.

पश्चात्संवेशनं पूर्वमुत्थानमनवबोधनं च सुप्तस्य ॥

पश्चात्संवेशनं शयितस्य नायकस्य । पूर्वमुत्थानमनुत्थितान्नायकात् । अहनि यावन्न प्रतिबुध्येत ।

महानसं च सुगुप्तं स्याद्दर्शनीयं च ॥

महानसं सुगुप्तं स्यात् । यथान्य उपरिको न विशति । दर्शनीयं चान्धकारभावात् ।

नायकापचारेषु किंचित्कलुषिता नात्यर्थं निर्वदेत् ॥

नायकापचारेष्विति नायकापराधेषु । किंचित्कलुषिता धीरोदात्तत्वख्यापनार्थम्। निर्वदेत् पुनर्मा कार्षीरिति। तत्रापि नात्यर्थं मा भूद्वैलक्ष्यमस्येति।

साधिक्षेपवचनं त्वेनं मित्रजनमध्यस्थमेकाकिनं वाप्युपालभेत । न च मूलकारिका स्यात् ॥

मित्रजनमध्यस्थं यदि कार्यवशात्साधिक्षेपवचनमुपालभेत । न च मूलकारिका स्यात् ।

सत्स्वप्यपचारेषु युक्तिमाह—

नह्यतोऽन्यदप्रत्ययकारणमस्तीति गोनर्दीयः ॥

अत इति मूलकर्मणः । अप्रत्ययकारणमविश्वासकारणम् । गोनर्दीयमतमनुमतम् । अप्रतिषिद्धत्वात् ।

दुर्व्याहृतं दुर्निरीक्षितमन्यतो मन्त्रणं द्वारदेशावस्थानं निरीक्षणं वा निष्कुटेषु मन्त्रणं विविक्तेषु चिरमवस्थानमिति वर्जयेत् ॥

दुर्व्याहृतं दुर्मन्त्रितम् । दुर्निरीक्षितमस्निग्धवीक्षणम् । अन्यतो मन्त्रणं तिर्यङ्मुखं कृत्वा भाषणम् । एतत्त्रितयं वैराग्यजननम् । द्वारदेशावस्थानं गृहद्वारस्थितिर्निरीक्षणं च तदुभयमयत्नसाध्यसूचकम् । निष्कुटेष्विति गृहवाटिकायां निर्गत्य कयाचित्सह मन्त्रणम् । विविक्तेषु निर्जनेषु गृहप्रदेशेषु चिरमवस्थानमस्निग्धताजनकं भवेत् ।

---

१. 'आहारं च महानसं च सुगुप्तं प्रवेशसंकटं सुदर्शनीयं च'. २. 'यथायथान्य'. ३. 'न किंचित्कलुषिता निर्वदेदधिक्षेपवचनं'. ४. 'साधिक्षेपवचनं त्वेनं' इति पुस्तकान्तरे नास्ति. ५. 'यद्यप्युपचारेषु'.

स्वेददन्तपङ्कदुर्गन्धांश्च बुध्येतेति[1] विरागकारणम् ॥

स्वेदादीन्बुध्येतापनयनार्थम्। दन्तपङ्को दन्तमलः। विरागकारणमिति वैराग्यजनकं भवेद्भर्तुः।

बहुभूषणं विविधकुसुमानुलेपनं विविधाङ्गरागसमुज्ज्वलं वास इत्याभिगामिको वेषः। प्रतनुश्लक्ष्णाल्पदुकूलता परिमितमाभरणं सुगन्धिता नात्युल्वणमनुलेपनम्। तथा शुक्लान्यन्यानि पुष्पाणीति वैहारिको वेषः ॥

नानावर्णकालवशाद्यद्यद्विराजते वर्णतस्तत्तदुपादेयमिति। आभिगामिको नायकाभिगमनप्रयोजनः। तदा हि बहुभूषणादिभिः कालौपयिकेन च रक्तवाससा[2] प्रसाधिता[3] मनोहरेति। प्रतनु श्लक्ष्णमल्पं सूक्ष्मं शोभते वस्त्रम्। परिमितं कर्णयोर्ग्रीवायां च। नात्युद्धतं वर्णकमित्य[4] अंशाभ्यां (?) चेति वैहारिके। यात्राक्रीडाविहारप्रयोगाः।

नायकस्य व्रतमुपवासं च स्वयमपि करणेनानुवर्तेत। वारितायां[5] च नाहमत्र निर्बन्धनीयेति तद्वचसो[6] निवर्तनम् ॥

व्रतं नियमं स्वयमनुकरणेनानुवर्तेत भक्तिख्यापनार्थम्। वारितायां नायकेन व्रतोपवासाभ्याम्। नाहमत्र निर्बन्धनीया निषेधनीयेति वाक्येन नायकवचसो निवर्तनं भक्तेर्नाट्यार्थम्[7]।

मृद्विदलकाष्ठचर्मलोहभाण्डानां च काले समर्घग्रहणम् ॥

मृद्भाण्डं घटादि। विदलभाण्डं पिटकादि। काष्ठभाण्डं पीठखट्वादि। लोहभाण्डं ताम्रादिमयम्। काल इत्युपयोगकाले। तत्रापि समर्घं प्राप्यते।

तथा लवणस्नेहयोश्च गन्धद्रव्यकटुकभाण्डौषधानां च दुर्लभानां भवनेषु प्रच्छन्नं निधानम् ॥

लवणं सैन्धवादि। स्नेहा घृततैलवसामज्जानः। गन्धद्रव्यं तगरादि। कटुकं तुम्ब्यादि। औषधं द्विपञ्चमूलादि। दुर्लभा ये न तत्रत्याः। अपि

---

१. 'इति विरागकारणम्' इति मूलपुस्तकेषु नोपलभ्यते. टीकानुरोधादत्र लिखितम्.
२. 'अम्बरेण'. ३. 'प्रसाधाभ्या चेति प्रसाधिता'. ४. 'वर्णमिति'. ५. 'वारितायाश्च'.
६. 'वचनात्तद्वचसो'. ७. 'भक्तेनाथार्थम्'.

तु दुःखेन लभ्यन्ते । प्रच्छन्नं निधानं यत्र तानि भवन्ति, न विनश्यन्ति वा ।

मूलकालुकपालङ्की दमनकाम्रातकैर्वारुकत्रपुसवार्ताककूष्माण्डालाबुसूरणशुकनासास्वयंगुप्तातिलपर्णिकाग्निमन्थलशुनपलाण्डुप्रभृतीनां सर्वौषधीनां च बीजग्रहणं काले वापश्च ॥

मूलकादीनां च बीजग्रहणमिति । एर्वारुकः कर्कटिका । अलाबुस्तुम्बी । सूरणः कन्दः । शुकनासा स········ । स्वयंगुप्ता कपिकच्छूः । तिलपर्णिका काश्मरी । अग्निमन्थोऽनेनैव नाम्ना प्रथितः । पलाण्डुर्लशुनाकारो लोहितः ।

स्वस्य च सारस्य परेभ्यो नाख्यानं भर्तृमन्त्रितस्य च ॥

सारस्य द्रव्यस्य परेभ्यो नाख्यानं 'धनायुषी गुप्ततमे कार्ये' इति वचनात् । भर्तृमन्त्रितस्य च नाख्यानं मा ज्ञासीद्भिन्नरहस्येति ।

समानाश्च स्त्रियः कौशलेनोज्ज्वलतया पाकेन मानेन तथोपचारैरतिशयीत ॥

आत्मनोऽधिकत्वख्यापनार्थम् । मानेन मनस्वितया । उपचारैर्भर्तरि क्रियमाणैः ।

सांवत्सरिकमायं संख्याय तदनुरूपं व्ययं कुर्यात् ॥

तदनुरूपमायानुरूपं कालयापनार्थम् ।

भोजनावशिष्टाद्गोरसाद्घृतकरणम् तथा तैलगुडयोः । कर्पासस्य च सूत्रकर्तनम् सूत्रस्य वानम् । शिक्यरज्जुपाशवल्कलसंग्रहणम् । कुट्टनकण्डनावेक्षणम् । आचाममण्डतुपकणकुड्यङ्गाराणामुपयोजनम् । भृत्यवेतनभरणज्ञानम् । कृषिपशुपालनचिन्तावाहनविधानयोगाः । मेषकुक्कुटलावकशुकशारिकापरभृतमयूरवानरमृगाणामवेक्षणम् । दैवसिकायव्ययपिण्डीकरणमिति च विद्यात् ॥

घृतकरणमिति यदादिषु ब्राह्मणान्भोजयित्वा यदवशिष्टं तस्माद्घृतकरणं

---

१. 'मानेन मनस्वितया तथोपचारैर्भर्तरि क्रियमाणैरतिशयीत'. २. 'आत्मनोवाधितत्व'. ३. 'सारग्रहणम्'. ४. 'तन्त्रवानम्'. ५. 'संग्रहाः'. ६. 'खण्डन'. ७. 'आचमातुष'. ८. 'कडङ्गरकाणां'. ९. 'पालनपोषण'. १०. 'दैवसिकस्य व्ययस्य'.

मथितं चापरं भवति। तैलगुडयोः करणं सर्षपेक्षुकाण्डपीडनात्। कर्पासस्य सूत्रकरणम्। वानमाच्छादनार्थम्। शिक्यस्य भाण्डारोपणार्थम्। रज्ज्वा जलोद्धरणार्थम्। पाशस्य पशुबन्धनार्थम्। वल्कलस्य रज्ज्वाद्यर्थे संग्रहणम्। कुट्टनं धान्यानाम्। कण्डनं तण्डुलानाम्। तयोरवेक्षणं परीक्षणम्। आचामस्य मण्डस्य च पानार्थे चेटिकादिषूपयोजनम्। तुषाणां रन्धनलेपनादिषु। कणानां क्षुद्रतण्डुलानां कुक्कुटादिषु। कुटीनां तण्डुलपरागाणां गोमेषादिषु। अङ्गाराणां महानसादुत्पन्नानां लोहभाण्डकरणादिषु। भृत्या ये बहिरन्तः कर्मसु नियुक्ताः। तेषां वेतनं प्रतिमासं प्रतिवर्षं वा यो निबन्धः। भरणं प्रतिदिनं भम्रकं (?) तयोर्ज्ञानं देशकालकर्मवशेन। कृषिपशुपालनचिन्तेति कर्षणवापनरोपणादिप्रत्यवेक्षणम्। प्रत्यहायव्ययस्य पिण्डीकरणमेकीकरणमिति। विद्यादित्येतत्कृतकरणादि।

तज्जघन्यानां च[१] जीर्णवाससां संचयस्तैर्विविधरागैः[२] शुद्धैर्वा कृतकर्मणां परिचारकाणामनुग्रहो मानार्थेषु[३] च दानमन्यत्र वोपयोगः॥

तज्जघन्यानामिति नायकोपभुक्तानाम्। तैः संचितैः। कृतकर्मणामिति यैः कर्म कृतम्। मानार्थेषु चेति मान एवार्थो येषाम्। ते हि तैर्दत्तैर्मानिता भवन्ति। अन्यत्र वेति दीपवर्त्यादिषु।

सुराकुम्भीनामासवकुम्भीनां[४] च स्थापनं तदुपयोगः क्रयविक्रयावायव्ययावेक्षणम्[५]॥

स्थापनमिति प्रच्छन्नम्। तदुपयोग इति कार्यवशात्सुरादीनामुपयोजनम्। क्रयविक्रयौ समर्घमहर्घतया। आयव्ययावल्पमहत्तयावेक्षेत।

नायकमित्राणां च स्रगनुलेपनताम्बूलदानैः[६] पूजनं न्यायतः[७]। श्वश्रूश्वशुरपरिचर्या तत्पारतन्त्र्यमनुत्तरवादिता परिमिताप्रचण्डालापकरणमनुच्चैर्हासः। तत्प्रियाप्रियेषु स्वप्रियाप्रियेष्विव वृत्तिः। भोगेष्वनुत्सेकः। परिजने दाक्षिण्यम्। नायकस्यानिवेद्य न कस्मै-

१. 'च' पुस्तकान्तरे नास्ति. २. 'निचयैर्विविध'. ३ 'उत्सवे मानार्थिषु दान' ४. 'कुण्डीना. ५. 'क्रयविक्रयव्ययावेक्षणम्'. ६. 'धूपताम्बूल'. ७. 'न्यायतश्च'.

**चिदानम् । स्वकर्मसु[1] भृत्यजननियमनमुत्सवेषु चास्य पूजनमित्येकचारिणीवृत्तम् ॥**

न्यायत इति गुणजातिवयोपेक्षया । पूजनं स्वीकरणार्थं परिचयधर्मार्थं च । तत्पारतन्त्र्यं तद्वचनानुष्ठानात् । अनुत्तरवादिता तयोः प्रत्युत्तरं न देयम् । परिमिताप्रचण्डालापकरणमिति तयोरग्रतः स्वल्पं च मृदु च ब्रूयात् । अनुच्चैर्हासस्तत्समीपे । तत्प्रियाप्रियेष्विति तयोरिष्टानिष्टेषु स्वप्रियाप्रियेष्विव वृत्तिर्यथात्मनः प्रियाप्रियौ भवतः । भोगेषु महत्स्वपि सत्स्वनुत्सेको लाघवपरिहारार्थं चित्तविकारो न कर्तव्यः । परिजनलोकस्य सर्वदा दाक्षिण्यमुपसंग्रहार्थम् । अनिवेद्य न कस्मैचिद्दानं सपुत्राया अपि स्वातन्त्र्यपरिहारार्थम् । स्वकर्मस्विति यो यत्र नियुक्तस्तत्र तस्य नियमनं कर्मणां निपातनार्थम् (?) । अस्येति भृत्यजनस्य । पूजनं पानभोजनादिना । एकचारिणीवृत्तं द्वात्रिंशं प्रकरणम् ॥

एकचारिण्याः संनिहिते नायके वृत्तमुक्तम्, प्रोषिते तु तद्वृत्तशेषभूता प्रवासचर्यारभ्यते—

**प्रवासे मङ्गलमात्राभरणा[2] देवतोपवासपरा वार्तायां स्थिता गृहानवेक्षेत[3] ॥**

वार्तायां स्थितेति नायकवार्तान्वेषणपरेत्यर्थः । गृहानवेक्षेतेति तात्स्थ्यात्कर्माण्याह ।

**शय्या च गुरुजनमूले[4] । तदभिमता कार्यनिष्पत्तिः[5] । नायकाभिमतानां चार्थानामर्जने[6] प्रतिसंस्कारे च[7] यत्नः ॥**

गुरुजनमूल इति श्वश्रूजनसमीपे शयनमात्मविशुद्ध्यर्थम् । तदभिमतेति गुरुजनाभिमतस्य कार्यस्यानुष्ठानमानुकूल्यख्यापनार्थम् । अर्जने प्रयत्न इति नायकस्य येऽभिमता न च तेनार्जितास्तेषाम् ।

**नित्यनैमित्तिकेषु कर्मसूचितो व्ययः । तदारब्धानां च कर्मणां समापने मतिः ॥**

---

१. 'सुहृत्परिजन'. २. 'मद्गल्य'. ३. 'ग्रहान्. ४. 'शय्या गुरुसमीपे'. ५. 'प्रतिपत्तिः'. ६. 'उपार्जने'. ७. 'प्रयत्नः'.

नित्यं कर्माशनपानादि । नैमित्तिकं कर्म बालकोत्सवादि । उचितो व्ययो यावता विधिः संपद्यते, नायककल्पितो वा । तदारब्धानामिति नायकारब्धानां देवकुलोद्यानादिकर्मणां समापने मतिः । येन प्रकारेण निष्पद्यते तथा कार्यमित्यर्थः ।

ज्ञा¹तिकुलस्यानभिगमनमन्यत्र व्यसनोत्सवाभ्याम् । तै²त्रापि नायकप³रिजनाधिष्ठिताया नातिकालमवस्थानमपरिवर्तितप्रवासवेषता च ॥

ज्ञातिकुलस्य पितृगृहस्य । अनभिगमनं कारणं विना । तत्रापि व्यसनोत्सवे । नायकपरिजनाधिष्ठिताया गमनमात्मविशुद्ध्यर्थम् । नातिकालमवस्थानमिति नातिचिरकालमवस्थानं श्वशुरकोपभयात् । अपरिवर्तितप्रवासवेषता चेत्युत्सवमधिकृत्येदं वचनम् ।

गुरुजनानुज्ञातानां करणमुपवासानाम् । परिचारकैः शुचिभिरा⁴ज्ञाधिष्ठितैर⁵नुमतेन क्रयविक्रयकर्मणा सारस्या⁶पूरणं तनूकरणं च शक्त्या व्ययानाम् ॥

गुरुजनानुज्ञातानां करणं स्वातन्त्र्यपरिहारार्थम् । क्रयविक्रयकर्मणेति वणिज्याधर्मेण । सारस्यापूरणं द्रव्यस्याभिवर्धनम् । तनूकरणं चेति कृशीकरणम् । शक्त्या व्ययानामिति कार्यवशाद्यदि व्ययस्य महत्ता स्यात्तदा कृशं सारं कुर्यादित्यर्थः ।

आगते च प्रकृतिस्थाया एव प्रथमतो दर्शनं दैवतपूजनमुपहाराणां चाहरणमिति प्रवासचर्या ॥

आगते चेति प्रवासात्प्रत्यागते नायके । प्रकृतिस्थाया इति प्रवासवेषस्थाया एव प्रथमतो दर्शनं स्यात्स्वरूपख्यापनार्थम् । न पुनरागत इत्यात्मानं प्रसाधयेत् । देवतापूजनं सहपरिजनेन । उपहाराणामुपयाचितकानाम् । आहरणं दानं देवताभ्यः । प्रवासचर्या त्रयस्त्रिंशं प्रकरणम् ॥

१. 'ज्ञातिकुलगमन'. २. 'तत्रापि' पुस्तकान्तरे नास्ति. ३. 'परिजनानुयातायाः'. ४. 'आत्मा'. ५. 'अनुमता'. ६. 'आस्थापनम्'.

प्रकरणद्वयोपसंहरणार्थमाह—

भवतश्चात्र श्लोकौ—

सद्वृत्तमनुवर्तेत नायकस्य हितैषिणी।
कुलयोपा पुनर्भूर्वा वेश्या वाप्येकचारिणी ॥
धर्ममर्थं तथा कामं लभन्ते स्थानमेव च।
निःसपत्नं च भर्तारं नार्यः सद्वृत्तमाश्रिताः ॥

इति श्रीवात्स्यायनीये कामसूत्रे भार्याधिकारिके चतुर्थेऽधिकरणे ।
एकचारिणीवृत्तं प्रवासचर्या च प्रथमोऽध्यायः ।

सदिति न कपटेनानुवर्तनमिति दर्शनार्थम् । अस्मिन्वृत्ते नायिकात्रयमधिकृत्याह—कुलयोपेति । अन्यैर्वोढा(अनन्योढा) कुलयोपिदित्युच्यते । वृत्तानुवर्तने फलमाह—धर्ममिति । स्थानं प्रतिष्ठानम् । निःसपत्नं निष्कण्टकम् ।

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां भार्याधिकारिके चतुर्थेऽधिकरणे एकचारिणीवृत्तं प्रवासचर्या च प्रथमोऽध्यायः ।

---

द्वितीयोऽध्यायः ।

सैव यदा सपत्नीभिर्युज्यते तदा कथं वर्तितव्यमिति सपत्नीषु ज्येष्ठावृत्तमुच्यते । तत्र सापत्नककारणमाह—

जाड्यदौःशील्यदौर्भाग्येभ्यः प्रजानुत्पत्तेराभीक्ष्ण्येन दारिकोत्पत्तेर्नायकचापलाद्वा सपत्न्यधिवेदनम् ॥

जाड्यं शाठ्यम् । दौःशील्यं चारित्रखण्डनात् । प्रजानुत्पत्तेर्वन्ध्यत्वात् । अभीक्ष्णेन दारिकोत्पत्तेः ।

तदादित एव भक्तिशीलवैदग्ध्यख्यापनेन परिजिहीर्षेत् । प्रजानुत्पत्तौ च स्वयमेव सापत्नके चोदयेत् ॥

तस्मादादित एवात्मनो भक्तिशीलवैदग्ध्यख्यापनेन यथाक्रमं जाड्या-

---

१. 'प्रकरणद्वयमुप.' २. 'सापत्नकं'.

दित्रयं परिहर्तुमिच्छेत् । नायकचापलं वैदग्ध्यख्यापनेनैव । प्रजानुत्पत्तौ स्वयमेव । अन्यथा तेन कर्तव्यमेव । सापत्नके चोदयेत् कुरु विवाहमिति। दारिकोत्पत्तावप्ययमेव क्रमः । स्त्रीपरिग्रहस्य पुत्रफलकत्वात् ।

अधिविद्यमाना च[1] यावच्छक्तियोगादात्मनोऽधिकत्वेन स्थितिं कारयेत् ॥

अधिविद्यमानेति सापत्ने युज्यमाना न त्वधिविन्ना । यावच्छक्तीति यावती शक्तिस्तदपेक्षयात्मनः स्थितिं कारयेत् । अधिकत्वेनेति सपत्न्याः सकाशादाधिक्येनेत्यर्थः ।

अधिविन्ना तु किं कुर्यादित्याह—

आगतां चैनां भगिनीवदीक्षेत[2] । नायकविदितं च प्रादोषिकं विधिमतीव यत्नादस्याः कारयेत् । सौभाग्यजं वैकृतमुत्सेकं वास्या नाद्रियेत ॥

नायकविदितमिति यथा नायको जानात्यनया कारितमिति । प्रादोषिकं प्रदोषभवं संस्कारम् । अतियत्नादनिच्छन्त्या अपि तस्याः स्नेहख्यापनार्थं परिचारिकया कारयेत् । सौभाग्यजं वैकृतं यदहंकृत्या व्याहृतम् । औत्सुक्यमुत्सेकं चित्तविकारं नाद्रियेत नापेक्षेत । अभिभवभयात् ।

भर्तरि प्रमाद्यन्तीमुपेक्षेत । यत्र मन्येतार्थमियं[3] स्वयमपि प्रतिपत्स्यत इति तत्रैनामादरत एवानुशिष्यात् ॥

भर्तरीति भर्तृविषये प्रमाद्यन्तीं प्रमादं यान्तीमुपेक्षेत । अनेनैव स्खलितदोषेण दौर्भाग्यं स्यादिति । यत्रेति यस्मिन्प्रमादे मन्येत नायकसंभोगार्थमियं कृता सपत्नी स्वयमेव प्रतिपत्स्यते प्रमादो मा भूदिति तत्रैनां स्नेहख्यापनार्थमादरतोऽनुशिष्यात्पुनर्मा कार्षीरिति ।

नायकसंश्रवे च रहसि विशेषानधिकान्दर्शयेत् ॥

नायकसंश्रवे चेति नायकस्य श्रुतिगोचरे सति। रहसि च यत्रान्यो न शृणोति। विशेषानिति कलाविशेषान् अधिकानिति ये नायकस्य न दर्शिताः। तद्दर्शने ह्युभावपि स्निह्यतः ।

---

१. 'तु'. २. 'भगिनिकामिव वीक्षेत्'. ३. 'इम च'.

तदपत्येष्वविशेषः । परिजनवर्गेऽधिकानुकम्पा । मित्रवर्गे प्रीतिः । आत्मज्ञातिषु नात्यादरः । तज्ज्ञातिषु चातिसंभ्रमः ॥

तदपत्येष्वित्यपुत्रया सपुत्राया दर्शितव्यः । परिजनवर्ग इति सपत्न्याः । अधिकानुकम्पा यद्यसौ नायकस्याप्यनभिमतः । मित्रवर्ग इति तस्या अधिको यो मित्रवर्गस्तस्मिन्प्रीतिः स्वीकारार्थम् । आत्मनो ज्ञातिषु नात्यादरो वचनीयतापरिहारार्थम् ।

वह्वीभिस्त्वधिविन्ना अव्यवहितया संसृज्येत ॥

वह्वीभिस्त्वधिविन्ना सपत्नीभिः । अव्यवहितयेत्यनन्तरया कनीयस्या संसृज्येत विदितशीलत्वात् ।

यां तु नायकोऽधिकां चिकीर्षेत्तां भूतपूर्वसुभगया प्रोत्साह्य कलहयेत् ॥

यां तु तासु नायकोऽधिकां चिकीर्षेत्कर्तुमिच्छेत् । भूतपूर्वसुभगयेति नायकस्य प्रज्ञातानुनयया । प्रोत्साह्य तामेव सौभाग्यबीजोपन्यासेन च तयैव कलहयेत् ।

ततश्चानुकम्पेत ॥

तत इत्युत्तरकालमनुकम्पेत कलहितां प्रच्छन्ने समाश्वासयेत्कलहवर्धनार्थम् ।

ताभिरेकत्वेनाधिकां चिकीर्षितां स्वयमविवदमाना दुर्जनीकुर्यात् ॥

ताभिरेकत्वेनेति सपत्नीभिरन्याभिरेकत्त्वेनेत्यैक्येन । सङ्घधर्मस्थिताविव्यर्थः (?) । एकाभावेऽपि सैव सौभाग्यबीजोपन्यासहेतुं नायकस्याग्रतो दुर्जनीकुर्यात् । येन नायकस्य तस्यामगमबुद्धिः स्यात् । दृष्टो हि बहुभिः सकलश्चाह्रियमाणः । तत्रापि स्वयमविवदमाना मध्यस्था सती । न तत्प्रयोग इति ख्यापनार्थम् ।

नायकेन तु कलहितामेनां पक्षपातावलम्बनोपबृंहितामाश्वासयेत् ॥

---

१. 'अधिकालो मित्र'. २. 'वचनीयतया'. ३. 'च'. ४. 'अव्यवहिताया'. ५. 'यां तु तासु'. ६. 'ताभिर्वह्वीभिरेव'. ७. 'अविवदमानां'. ८. 'तस्यागम'. ९. 'दौर्जन्योपन्यासेन पक्षपातावलम्बनेन'.

नायकेन तु कलहितामेनां दौर्जन्योपन्यासेन । पक्षपातावलम्बनोपबृंहितामिति तद्गुणोपबृंहितां दापितप्रत्युत्तरामाश्वासयेत् ।

**कलहं च वर्धयेत् ॥**

नायकेन सह । यत्नस्य तदर्थत्वात् ।

**मन्दं वा कलहमुपलभ्य स्वयमेव संधुक्षयेत् ॥**

छिद्यमानं तूपलभ्य कलहं संधुक्षयेद्यथा न मन्दीभवति ।

**यदि नायकोऽस्यामद्यापि सानुनय इति मन्येत तदा स्वयमेव संधौ प्रयतेतेति ज्येष्ठावृत्तम् ॥**

स्वयं वा संधौ प्रयतेत । यद्ययमेकान्तेनास्यां निरनुनयस्तदा तिष्ठत्वसद्विधैव मैनामवमन्यध्वमिति प्रसादयेत् । इति ज्येष्ठावृत्तं चतुस्त्रिंशं प्रकरणम् ।

कनिष्ठापि भार्या कथं वर्तेतेति कनिष्ठावृत्तमुच्यते—

**कनिष्ठा तु मातृवत्सपत्नीं पश्येत् ॥**

मातृवन्मातरमिव ज्येष्ठाम् ।

**ज्ञातिदायमपि तस्या अविदितं नोपयुञ्जीत ॥**

अङ्गार्पणोपाय एषः ।

**आत्मवृत्तान्तांस्तदधिष्ठितान्कुर्यात् ॥**

आत्मवृत्तान्तानित्यात्मनि प्रतिषिद्धत्वाद्व्यवहारान् । तदधिष्ठितान् ।

**अनुज्ञाता पतिमधिशयीत ॥**

अनुज्ञाता ज्येष्ठया धर्मप्राप्तेऽधिशयने पतिमधिशयीत ।

**न वा तस्या वचनमन्यस्याः कथयेत् ॥**

तस्या वचनं ज्येष्ठावचनं सदसद्वान्यस्या अग्रे न कथयेत् । कलहपरिहारार्थम् ।

**तदपत्यानि स्वेभ्योऽधिकानि पश्येत् ॥**

तदपत्यानि ज्येष्ठान्यज्येष्ठानि च ।

---

१. 'स्वय मन्येत'. २. 'सतोपयेदिति'. ३. 'आत्मवृत्तांश्च तदनधिष्टितान्'. ४. 'अनुज्ञाता ज्येष्टया'. ५. 'न चास्या'.

रहसि पतिमधिकमुपचरेत् ॥

रहसि शयने। अधिकमुपचरेद्येनायमन्याभ्यस्तस्यामनुरज्येत।

आत्मनश्च सपत्नीविकारजं दुःखं नाचक्षीत ॥

सपत्नीविकारजं सपत्नीपरिभवजम्। नात्मना परस्याचक्षीत। स्वयं कथ्यमानं नायको न प्रतीयात्। अन्येन तु कथयेत्।

पत्युश्च सविशेषकं गूढं मानं लिप्सेत् ॥

पत्युः सविशेषकमित्यन्यतरभार्याभ्यो वैशेषिकीं पूजां पत्युः सकाशादप्रकटं लब्धुमिच्छेत्।

अनेन खलु पथ्यदानेन जीवामीति ब्रूयात् ॥

अनेनेति सविशेषेण मानेन। पथ्यदानेन शम्बलभूतेन जीवामि।

तत्तु श्लाघया रागेण वा बहिर्नाचक्षीत ॥

तन्मानम्। श्लाघया विकत्थनेन। रागेण चेति सपत्नीक्रोधेन। बहिः सामान्यजनस्य नाचक्षीत।

दोषमाह—

भिन्नरहस्या हि भर्तुरवज्ञां लभते ॥

अवज्ञा तिरस्कारः।

ज्येष्ठाभयाच्च निगूढसंमानार्थिनी स्यादिति गोनर्दीयः ॥

अन्यथा सविशेषं मानं पश्यन्ती कुप्येदनर्थं वा चिन्तयेत्। गोनर्दीयमतमनुमतम्। अप्रतिषिद्धत्वात्।

दुर्भगामनपत्यां च ज्येष्ठामनुकम्पेत नायकेन चानुकम्पयेत् ॥

अनुकम्पयेत्संभाषणं क्रियतामिति। आत्मसाधुत्वख्यापनार्थम्।

प्रसह्य त्वेनामेकचारिणीवृत्तमनुतिष्ठेदिति कनिष्ठावृत्तम् ॥

एनामिति दुर्भगामनपत्यां ज्येष्ठाम्। ज्येष्ठाकनिष्ठयोर्मध्यवर्तिनीनां पूर्वापरापेक्षया ज्येष्ठाकनिष्ठावृत्तं योज्यम् ॥ इति कनिष्ठावृत्तं पञ्चत्रिंशं प्रकरणम् ॥

---

१. 'क्रमज्येष्ठा'.

यथा कन्याभार्या तथा पुनर्भूरिति पुनर्भूवृत्तमुच्यते । पुनर्भूर्द्विविधा—क्षतयोनिरक्षतयोनिश्च । तत्रान्त्या संस्कारार्हत्वात्कन्यायामेवान्तर्भूता । यथोक्तम्—'पुनरक्षतयोनित्वादूह्यते या यथाविधि' इति । द्वितीयाया न संस्कारः । स्वीकार एव केवलम् । सा च लोकेऽपरुद्धिकेत्युच्यते । सा चैवंविधा शास्त्रेऽनुज्ञातैव । यथाह वसिष्ठः—'मनोदत्ता वचोदत्ता या च मङ्गच्छयाचिका(?)। उदकस्पर्शिका चैव या च पाणिगृहीतका ॥ अग्निं परिगता चैव पुनर्भूः प्रसवा च या ॥' इति । अत्र पूर्वाः षडक्षतयोनयः । प्रसवेति क्षतयोनिरित्यर्थः । तामेवाधिकृत्य वृत्तमाह—

**विधवा त्विन्द्रियदौर्बल्यादातुरा भोगिनं[1] गुणसंपन्नं च या पुनर्विन्देत्सा पुनर्भूः ॥**

विधवेति मृतभर्तृका । इन्द्रियदौर्बल्यादितीन्द्रियाणि नियन्तुमसमर्थत्वात् । आतुरा कामेन बाध्यमाना । भोगिनमित्युपभोगसंपन्नम् । गुणसंपन्नमिति नायकगुणैर्युक्तम् । या पुनर्विन्देत द्वितीयं लभेत सा पुनर्भूर्भार्यात्वेन पुनर्भवतीति कृत्वा । भोगिनं गुणसंपन्नमिति गोनर्दीयमतमेतद्भविष्यति ।

**यतस्तु स्वेच्छया पुनरपि निष्क्रमणं[2] निर्गुणोऽयमिति तदान्यं काङ्क्षेदिति बाभ्रवीयाः ॥**

यतस्त्विति भर्तृगृहान्तरात् । स्वेच्छया निष्क्रान्ता पुनरपि यतः पुरुषात्स्वेच्छया निष्क्रमणं स्यात् । निर्गुणोऽयमिति निष्क्रमणोपायः ।

**सौख्यार्थिनी सा किलान्यं पुनर्विन्देत ॥**

सौख्यार्थिनी विषयपरिभोगार्थिनी । किलेति वितर्के ।

**गुणेषु सोपभोगेषु सुखसाकल्यं तस्मात्ततो विशेष इति गोनर्दीयः ॥**

सुखसाकल्यमिति गुणसुरतपरिभोगसुखयोः समवायात् । तत्किमिति निष्क्रामति । यतश्चैवं तस्मात्ततो निर्गुणभोगिनो विशिष्यते गुणवान्भोगी । या तु पुनः पुनर्निष्क्रामत्यसौ वेश्याविशेषेऽन्तर्भवति ।

---

१. 'भोगिनी'. २. 'निष्क्रमणं स्यात्'.

**आत्मनश्चित्तानुकूल्यादिति वात्स्यायनः ॥**

आत्मनश्चित्तानुकूल्यादिति । सत्यपि गुणवति भोगिनि चित्तं चेन्नानुकूलं तथापि न सुखसाकल्यं तस्मादयमपरो विशेषः । तेनोक्तलक्षणादगम्योऽन्यो दर्शयति ।

**सा बान्धवैर्नायकादापानकोद्यानश्रद्धादानमित्रपूजनादि व्ययसहिष्णु कर्म लिप्सेत ॥**

सेति विधवा । बान्धवैः स्वैः । नायकाद्यत्कर्मणा लब्धुमिच्छेत्तत्रापानकं मद्यगोष्ठी । उद्यानं पुष्पफलौपयिकम् । श्रद्धादानं यच्छ्रद्धया दीयते । मित्रपूजनादीत्यादिशब्दात्स्वजनं च वस्त्रादिना । एतेषु कर्तव्येषु यद्ययं सहते कर्म । न तु ग्रासाच्छादनमात्रमिति । इयमुत्तमप्रकृतेर्लिप्सा ।

**आत्मनः सारेण वालंकारं तदीयमात्मीयं वा बिभृयात् ॥**

आत्मनः सारेण वेति मध्यमाधमा सावधानीभूय धारयेदित्यर्थः ।

**प्रीतिदायेष्वनियमः ॥**

प्रीतिदायेष्विति प्रीत्या दत्तेष्वनियमो धारणं प्रति ।

**स्वेच्छया च गृहान्निर्गच्छन्ती प्रीतिदायादन्यन्नायकदत्तं जीयेत । निष्कास्यमाना तु न किंचिद्दद्यात् ॥**

स्वेच्छया चेति (न तु) नायकदोषात्तेन गृहान्निर्गच्छन्तीति प्रीतिदायादन्यन्नायकदत्तं लोहक्षुरं (?) जीयेत दाप्येत ।

**सा प्रभुविष्णुरिव तस्य भवनमाप्नुयात् ॥**

सेति जिगमिषुः । प्रभविष्णुरिव स्वामिनीव नायकगृहं स्वीकुर्यात् । अनन्तमपि कालं निजासु किं कुर्यादित्याह—

**कुलजासु तु प्रीत्या वर्तेत ॥**

कुलजास्विति धर्मोढासु । प्रीत्या स्नेहेन ।

**दाक्षिण्येन परिजने सर्वत्र सपरिहासा मित्रेषु प्रतिपत्तिः । कलासु कौशलमधिकस्य च ज्ञानम् ॥**

१. 'आपानकोत्सवव्यसनोद्यान'. २. 'मध्यमाधमसाव'. ३. 'दापयेत्'. ४. 'जीर्येत'. ५. 'प्रेष्यवत्'. ६. 'सपरिहासं'.

परिजने सर्वत्र कुलजानां नायकस्य दाक्षिण्येन वर्तेत। सपरिहासा सविकारा। कलासु कौशलं दर्शनीयमधिकस्य नायकाविदितस्य ज्ञानं दर्शयितव्यम्।

**कलहस्थानेषु च नायकं स्वयमुपालभेत॥**

कलहस्थानेष्विति उपचितच्छेदः स्वैरिणीसंसर्गो द्विरात्रागमनं वासकान्निष्क्रमणं चेत्यस्याः कलहस्थानानि। तेषु स्वयमुपालभेत।

**रहसि च कलया चतुःषष्ट्यानुवर्तेत। सपत्नीनां च स्वयमुपकुर्यात्। तासामपत्येष्वाभरणदानम्। तेषु स्वामिवदुपचारः। मण्डनकानि वेषानादरेण कुर्वीत। परिजने मित्रवर्गे चाधिकं विश्राणनम्। समाजापानकोद्यानयात्राविहारशीलता चेति पुनर्भूवृत्तम्॥**

रहसि चेति नायकं शयनागतम्। कलयेत्यालिङ्गनादिभिः पुरुषोपसृप्तान्तैः। सपत्नीनां कुलजानाम्। उपकुर्यादुत्पन्ने प्रयोजने। आभरणं मण्डनकादि। स्वामिवदुपचारस्तेषां कुलसंततिहेतुत्वात्। मण्डनकानि पुष्पानुलेपनादीनि। परिजन इत्यात्मीये। विश्राणनमिति दानम्। समाजेति गोष्ठीशीलता आपानशीलता उद्यानविहारशीलता चेति पुनर्भूवृत्तं षट्त्रिंशं प्रकरणम्॥

आसां भार्याणां दुर्भगापि काचित्संभवति तया कथं वर्तितव्यमिति दुर्भगावृत्तमुच्यते—

**दुर्भगा तु सापत्नकपीडिता या तासामधिकमिव पत्यावुपचरेत्तामाश्रयेत्। प्रकाश्यानि च कलाविज्ञानानि दर्शयेत्। दौर्भाग्याद्रहस्यानामभावः॥**

दुर्भगा त्विति। सापत्नकपीडितेति दौर्भाग्यफलम्। तासामिति सपत्नीनां मध्ये या पत्यौ [उप]चरेत्। अधिकमिवेति नायकेनाधिकृतेन या त्वधिका सपत्न्युपचिता तां सुतरामेवाश्रयेत्। तामाश्रित्य प्रकाश्यानि क-

१. 'सपरिहासाः सविकाराः'. २. 'स्वरं'. ३. 'स्वर' ४. 'मृदु रहसि'. ५. 'स्वय सपत्नीनामुपकुर्यात्। तदपत्यानि स्वामिवदुपचरेत्। मण्डनकान्यादरेण कुर्वीत।—विस्रम्भणं विश्राणनं च'. ६. 'अपि'. ७. 'सापत्न्य'. ८. दौर्भाग्येत्यादिटीकापाठ इति भाति. ९. 'सा पत्युप'.

लाविज्ञानानि पत्रच्छेद्यादिकौशलानि दर्शयेत् । वैदग्ध्यख्यापनं हि दौर्भाग्यनिवृत्तिकारणम् ।

**नायकापत्यानां धात्रेयिकानि कुर्यात् ॥**

धात्रेयिकान्यभ्यञ्जनोद्वर्तनस्नपनादीनि ।

**तन्मित्राणि चोपगृह्य तैर्भक्तिमात्मनः प्रकाशयेत् ॥**

तन्मित्राणि चेति नायकमित्राणि । चोपगृह्य प्रियहिताभ्याम् । तैरित्युपगृहीतैर्भक्तिमात्मनः श्रावयेदशाठ्यख्यापनार्थम् ।

**धर्मकृत्येषु च पुरश्चारिणी स्याद्व्रतोपवासयोश्च ॥**

धर्मकृत्येषु श्राद्धादिषु पुरश्चारिणी प्रारम्भिका स्यात् । व्रतोपवासयोश्च नायकेन क्रियमाणयोः पुरश्चारिणी ।

**परिजने दाक्षिण्यम् । न चाधिकमात्मानं पश्येत् ॥**

परिजने नायकस्य दाक्षिण्यमानुकूल्यं दर्शयितव्यम् । न चाधिकमात्मानं पश्येत्सपत्नीभ्यः परिजनेभ्यश्च । दौर्भाग्यहेतुत्वादिति । बाह्यमेतद्वृत्तम् । आभ्यन्तरमाह—

**शयने तत्सात्म्येनात्मनोऽनुरागप्रत्यानयनम् ॥**

तत्सात्म्येनेति नायकानुकूल्येन । यथैव नायकोऽभियुङ्क्ते तथैवानिच्छन्त्यप्यात्मनोऽनुरागमात्रामपि प्रत्यानयेत् ।

**न चोपालभेत वामतां च न दर्शयेत् ॥**

न चोपालभेतेति तवाहमप्रियेति । वामतां प्रातिकूल्यमङ्गगूहनेन न दर्शयेत् ।

**यया च कलहितः स्यात्कामं तामावर्तयेत् ॥**

यया हि पत्न्या कलहितः स्यात्तामावर्तयेदभिमुखीकुर्यात् । काममित्यभ्युपगमे । अनेनापि प्रकारेण ममाभिमुखः स्यात् ।

**यां च प्रच्छन्नां कामयेत्तामनेन सह संगमयेद्गोपयेच्च ॥**

---

१. 'धार्म्यकर्माणि'. २. 'तद्भक्तिमात्मनस्तैः'. ३. 'असाट्य'. ४. 'कार्येषु'. ५. 'शयनात्तत्सामान्येन'. ६. 'स्यात्तामस्योपावर्तयेत्'. ७. 'अनेन संगमयेन्मर्माणि चास्याप्रयुक्तेन गोपयेच्च'.

यां प्रच्छन्नां परस्त्रियं कामयेदनेन दूतीकर्मणा तां संगमयेत् । काममित्येव गोपयेच्चेतरस्मै नाचक्षीत ।

**यथा च पतिव्रतात्वमशाठ्यं नायको मन्येत तथा प्रतिविदध्यादिति दुर्भगावृत्तम् ॥**

प्रतिविदध्यादनुतिष्ठेत् । जाड्यदौःशील्ययोः प्रायेण दौर्भाग्यहेतुत्वात् ।
इति दुर्भगावृत्तं सप्तत्रिंशं प्रकरणम् ॥

यथा भार्याधिकारस्तथा भार्यायां नायकस्यापीति सप्तमीसमासोऽपि द्रष्टव्यः । अन्यथा नायकेन संगताप्यनुवर्तिता न संप्रयुज्येत । तत्र नायको द्विविधः—राजन्यको जानपदश्च । तत्र पूर्वमधिकृत्यान्तःपुरिकमुच्यते । अन्तःपुरे भवं वृत्तमान्तःपुरिकम् । 'रोपधेतोः प्राचाम्' इति वुञ् । ननु च यथा राज्ञो वृत्तं तथान्तःपुरिकाणामपि वक्तव्यमित्याह—

**अन्तःपुराणां च वृत्तमेतेष्वेव प्रकरणेषु लक्षयेत् ॥**

अन्तःपुराणां चेति तत्स्थस्त्रीणामेवाभिधानम् । एतेष्वेव प्रकरणेषु लक्षयेत् । तत्राप्येकचारिणीज्येष्ठादयः सन्तीति पृथङ्नोक्तम् । राज्ञस्तु पृथगुच्यते ।

**माल्यानुलेपनवासांसि चासां कञ्चुकीया महत्तरिका वा राज्ञो निवेदयेयुर्देवीभिः प्रहितमिति । तदादाय राजा निर्माल्यमासां प्रतिप्राभृतकं दद्यात् । अलंकृतश्च स्वलंकृतानि चापराह्णे सर्वाण्यन्तःपुराण्यैकध्येन पश्येत् ॥**

देवीभिः प्रहितमिति तदादायेत्याद्यनुरागख्यापनार्थम् । अलंकृतश्चेति गृहीतनेपथ्यो राजा ऐकध्येनेत्येकधाशब्दाद्भावे ध्यमुञ् ।

**तासां यथाकालं यथार्हं च स्थानमानानुवृत्तिः सपरिहासाश्च कथाः कुर्यात् ॥**

यथार्हं चेति यद्यस्याः कुलवयोपेक्षया स्थानं नियोगो मानः पूजा आभ्यामनुवृत्तिः कार्या । सपरिहासाः सर्वाकाराः कथाः । परिणीतास्विदं वृत्तम् ।

---

१. 'प्रकारेषु'. २. 'राजा' इति पुस्तकान्तरे नास्ति.

तदनन्तरं पुनर्भुवस्तथैव पश्येत् ॥

तदनन्तरमिति परिणीतादर्शनानन्तरम् । पुनर्भुवस्तथैव पश्येदैकध्येन तथा स्थानमानानुवृत्तिभिश्च ।

ततो वेश्या आभ्यन्तरिका नाटकीयाश्च ॥

आभ्यन्तरिका अन्तःपुरिका । नाटकीयाश्च नाटकहिताः । तथैव पश्येदेव ।

तासां यथोक्तकक्षाणि स्थानानि ॥

तासामिति पुनर्भ्वादीनाम् । यथोक्तकक्षाणीति मध्ये देवीनां स्थानम् । ततो बहिःकक्षे पुनर्भुवाम् । ततो बहिर्वेश्यानाम् । ततोऽपि नाटकीयानामिति ।

वासकपाल्यस्तु यस्या वासको यस्याश्चातीतो यस्याश्च ऋतुस्तत्परिचारिकानुगता दिवा शय्योत्थितस्य राज्ञस्ताभ्यां महितमङ्गुलीयकाङ्कमनुलेपनमृतुं वासकं च निवेदयेयुः ।

[अतीतो व्यस]नोत्सवाभ्यामन्तरितः । ऋतुश्च यस्याः प्रत्युपस्थितः । तत्परिचारिकानुगता इति तिसृणामपि देवी(व्यादी)नां याः परिचारिकास्ताभिरनुगता वासकपाल्यो दिवाशयोत्थितस्य भुक्त्वा शयितोत्थितस्य ताभ्यामिति यस्या [वासको] अतीतो यस्याश्च ऋतुः । अङ्गुलीयकाङ्कमिति मुद्रितम् । अनुलेपनं संबन्धिनः ख्यापनार्थम् । वासकं क्रमप्राप्तमतीतं वा । ऋतुं च प्रत्युपस्थितम् ।

तत्र राजा यद्गृह्णीयात्तस्या वासकमाज्ञापयेत् ॥

तत्रेति निवेदिते । यद्गृह्णीयादिति यदीयमङ्गुलीयकम् ।

उत्सवेषु च सर्वासामनुरूपेण पूजापानकं च । संगीतदर्शनेषु च ॥

अनुरूपेण पूजेति कुलवयोनुरूपा । आपानकं च ताभिः सह ।

अन्तःपुरचारिणीनां बहिरनिष्क्रमो बाह्यानां चाप्रवेशः । अन्यत्र विदितशौचाभ्यः । अपरिक्लिष्टश्च कर्मयोग इत्यान्तःपुरिकम् ॥

---

१. 'च'. २. 'ताभिः'. ३. 'अङ्गुलीयकं कुङ्कुमानुलेपनं ऋतुवासकं च'. ४. 'आनुरूप्येण'. ५. 'अन्तश्चारिणीनां बहिरनिष्कासः'. ६. 'स्वधर्माथं योगः'.

अप्रवेश (अन्यत्र) इति । ता ह्युपघाशुद्धत्वान्नान्यत्प्रयोजयन्ति । अपरिक्लिष्टश्च कर्मयोग इति रतोपचारोऽकदर्थितः स्यात् । इत्यान्तःपुरिकमष्टत्रिंशं प्रकरणम् ॥

यथा राज्ञो बह्व्यः स्त्रियस्तथा जनपदस्यापि भवन्तीति पुरुषस्य बह्वीषु प्रतिपत्तिरुच्यते । तत्र सामान्यमाह—

भवन्ति चात्र श्लोकाः—

पुरुषस्तु बहून्दारान्समाहृत्य समो भवेत् ।
न चावज्ञां चरेदासु व्यलीकान्न सहेत च ॥

समो भवेदिति नैकत्र स्नेहेन वर्तेत । न चावज्ञां चरेदिति गुणरूपरहितास्वपि तिरस्कारं न कुर्वीत । व्यलीकानपराधान्न सहेत । अन्यथा क्षान्तेषु पुनः कुर्युः ।

एकस्यां या रतिक्रीडा वैकृतं वा शरीरजम् ।
विस्रम्भाद्वाप्युपालम्भस्तमन्यासु न कीर्तयेत् ॥

'युक्तं वासकशय्यया(सज्जया)' इति पाठान्तरम् । अन्यासु न कीर्तयेदिति स्त्रीणां वैराग्यहेतुत्वात् ।

न दद्यात्प्रसरं स्त्रीणां सपत्न्याः कारणे क्वचित् ।
तथोपालभमानां च दोषैस्तामेव योजयेत् ॥

प्रसरं न दद्यात्कलहपरिहारार्थम् । सपत्न्याः कारणे इति सापत्न्यसंबन्धिनि सत्यपि निमित्ते । तथा तेनैव प्रकारेण निःसर(सार ?)तयोपालभमानां युक्तमेवोपेक्षितमिति । दोषैस्तामेव योजयेत्तवैव दोषो न तस्या इति ।

प्रत्येकं प्रतिपत्तिमाह—

अन्यां रहसि विस्रम्भैरन्यां प्रत्यक्षपूजनैः ।
बहुमानैस्तथा चान्यामित्येवं रञ्जयेत्स्त्रियः ॥

रहसि विश्वासैर्या लज्जावती । प्रत्यक्षपूजनैर्या सपत्नीषु पङ्क्तिमिच्छति । बहुमानैर्या मनस्विनी ।

---

१. 'अथ'. २. 'समवन्ति'. ३. 'आशु व्यलीकानि सहेत वा'. ४. 'विकृत'. ५. 'सापत्न्यकारणे', 'सापत्नकरणे'. ६. 'सापत्नकारणमिति'.

उद्यानगमनैर्भोगैर्दानैस्तज्ज्ञातिपूजनैः ।
रहस्यैः प्रीतियोगैश्चेत्येकैकामनुरञ्जयेत् ॥

उद्यानगमनैर्या तच्छीला । भोगैर्या परिभोगलालसा । तज्ज्ञातिपूजनैर्या ज्ञातिषु कर्तव्यबुद्धिः । रहस्यै रहसि भवैः प्रीतियोगैर्या रतिप्रिया ।

अधिकरणार्थानुष्ठाने फलमाह—

युवतिश्च जितक्रोधा यथाशास्त्रप्रवर्तिनी ।
करोति वश्यं भर्तारं सपत्नीश्चाधितिष्ठति ॥

इति श्रीवात्स्यायनीये कामसूत्रे भार्याधिकारिके चतुर्थेऽधिकरणे सपत्नीषु ज्येष्ठावृत्तं कनिष्ठावृत्तं पुनर्भूवृत्तं दुर्भगावृत्त-मान्तःपुरिकं पुरुषस्य बह्वीषु प्रतिपत्तिर्द्वितीयोऽध्यायः ।

जितक्रोधेति शास्त्रानुष्ठाने कारणम् । यथाशास्त्रप्रवर्तिनीति यद्यस्याः शास्त्रमेकचारिणीज्येष्ठादिवृत्तम् । सपत्नीरधितिष्ठतीति 'अधिशीङ्स्थासां–' इति कर्मसंज्ञा । इति पुरुषस्य बह्वीषु प्रतिपत्तिरेकोनचत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां भार्याधिकारिके चतुर्थेऽधि-करणे सपत्नीषु ज्येष्ठावृत्तं कनिष्ठावृत्तं पुनर्भूवृत्त दुर्भगावृत्तमान्तःपुरिक पुरु-षस्य बह्वीषु प्रतिपत्तिर्द्वितीयोऽध्यायः ।

---

समाप्तं चेदं भार्याधिकारिकं चतुर्थमधिकरणम् ।

---

१. 'सर्वाः समनुरञ्जयेत्'. २. 'तथा'. ३. 'इत्सपरार्जुनभुजबलमल्लराजनारायणमहा-राजाधिराजचौलुक्यचूडामणिश्रीमद्वीसलदेवस्य भाण्डागारे श्रीवात्स्यायनीयकामसूत्र-टीकायां—'.

# पारदारिकं नाम पञ्चममधिकरणम् ।

प्रथमोऽध्यायः ।

कन्यापुनर्भूनायकयोः समागमोपायः सविशेष उक्तः । तत्र वेश्यायाः काम एव परदारेभ्योऽर्थकामाविति तत्समागमोपायदर्शनार्थं वैशिकात्प्राक्पारदारिकमुच्यते । तत्र स्त्रीपुंसयोः शीलमनवस्थाप्योत्तरव्यापारासंभवात्पुरुषशीलावस्थापनमुच्यते । परपरिगृहीतासु कामः प्रतिषिद्ध इति चेदाह—

**व्याख्यातकारणाः परपरिग्रहोपगमाः ॥**

व्याख्यातकारणा इति परपरिग्रहगमनस्य सुखपुत्रव्यतिरेकेण कारणानि विशुद्धपूर्वकाणि नायिकाविमर्शे व्याख्यातानीति स्मारयति ।

**तेषु साध्यत्वमनत्ययं गम्यत्वमायतिं वृत्तिं चादित एव परीक्षेत॥**

तेष्विति परपरिग्रहेषु । सत्स्वपि कारणेष्विदमादित एव परीक्षेतेत्याह । साध्यत्वमिति साधयितुं शक्येति । अनत्ययमत्ययाभावात् । गम्यत्वं कुष्ठिन्युन्मत्ताद्यभावात् । आयतिं प्रभावं (?) तत्संयोगात् । वृत्तिमात्मनो वृत्त्यभिधानात् ।

सुख(ख्य)मपि गमनकारणं यदा शरीरोपघातं पश्येदित्याह—

**यदा तु स्थानात्स्थानान्तरं कामं प्रतिपद्यमानं पश्येत्तदात्मशरीरोपघातत्राणार्थं परपरिग्रहानभ्युपगच्छेत् ॥**

यदा त्विति कांचित्स्त्रियं दृष्ट्वा संप्रयोगेच्छालक्षणः काम उत्पन्नस्तं यदा प्रथमात्स्थानात्स्थानान्तरमवस्थान्तरं प्रतिपद्यमानं गच्छन्तं पश्येदनुभवेन्न च प्रतिसंख्या(स्थाप)ने निवर्तयितुमीशः स्यात् ।

तस्य कति स्थानानीत्याह—

**दश तु कामस्य स्थानानि ॥**

कामो ह्युन्मादात्प्रभृति विषयप्राप्तावनुकूलप्रत्ययवशात्प्रतिक्षणमुपवर्धमान

---

१. 'परिगृहीतोप'. २. 'अगम्यत्वं'. ३. 'उन्मत्ताद्यत्वभावात्'. ४. 'भृत्यभि'. ५. 'यत्र वा'. ६. 'तत्र शरीर'. ७. 'कामावस्थाः'.

आ प्राणत्यागं वर्तते। तस्यासाधारणकार्योत्पत्त्या व्यवहारार्थं दश स्थानानि पूर्वाचार्यैरुक्तानि। तानि क्रमेणाह—

**चक्षुःप्रीतिर्मनःसङ्गः संकल्पोत्पत्तिर्निद्राच्छेदस्तनुता विषयेभ्यो व्यावृत्तिर्लज्जाप्रणाश उन्मादो मूर्छा मरणमिति तेषां लिङ्गानि ॥**

स्त्रियं दृष्टवतः संयोगेच्छालक्षणात्कामादनन्तरं दृशौ स्निग्धे भवतः। ततो विषयाप्राप्तौ मनःसङ्गस्तत्र मनसः सक्तिः। तस्मिन्सक्ते संकल्पोत्पत्तिः कथं प्राप्स्यामि प्राप्य चैवमनुष्ठातव्यमिति। ततः संकल्पयतो निद्राच्छेदः। ततो निद्रामलभमानस्य तनुता शरीरकार्श्यम्। ततो विषयेभ्यो व्यावृत्तिः। सर्वथा तद्गतचित्तत्वादन्यविषयाज्ज्वलदनलप्रख्यानोपयाति। तेभ्यश्च व्यावर्तमानस्य लज्जाप्रणाशनम्। गुरुभ्योऽपि निर्लज्जत्वान्न बिभेति। विप्रणष्टलज्जस्य निर्भयस्य चोन्मादः प्रवर्तते। ततो मूर्छा भवत्यस्वास्थ्यसंज्ञिका। ततो मरणं प्राणत्यागः। तेषामिति कामस्थानानां प्रतिपत्त्यर्थमेते चक्षुःप्रीत्यादयो लिङ्गानि। तत्कार्यत्वात्।

**तत्राकृतितो लक्षणतश्च युवत्याः शीलं सत्यं शौचं साध्यतां चण्डवेगतां च लक्षयेदित्याचार्याः ॥**

तत्रेति तस्मिन्रागवशादभिगमने शीलादिकमेव प्राधान्येन लक्षयेत्। आकृतित इति शरीरस्थाने। लक्षणतः शरीरस्थानचिह्नेन। शीलं वक्ष्यमाणकम्। सत्यं यथार्थवादिताम्। शौचं चारित्रविशुद्धिम्।

**व्यभिचारादाकृतिलक्षणयोगानामिङ्गिताकाराभ्यामेव प्रवृत्तिर्बोद्धव्या योषित इति वात्स्यायनः ॥**

सत्यप्याकृतियोगे लक्षणयोगेनावश्यं शीलसत्यशौचानि गम्यन्ते। साध्यासाध्यतां चण्डमृदुवेगतां पुनर्गमयन्त्येव। कथं तर्हि लक्षयेदित्याह— इङ्गिताकाराभ्यामिति। बोद्धव्या शीलादियुक्तेत्यर्थः। तत्रेङ्गिताकारौ कन्यासंप्रयुक्तकेऽभिहितौ। प्रवर्तनं प्रवृत्तिः। इङ्गितव्यतिरेकेण तत्र त्रिभिरेव सत्यशीलशौचानि विशेषाणि प्रवृत्त्या स्त्रीपुंसयोः।

१. 'तास्तु चक्षुः'. २. 'तासां'. ३. 'विषये प्राप्तौ'. ४. 'काराभ्यां प्रवृत्तिश्च'. ५. 'साध्यासाध्यमाध्यमाध्यतां'.

कस्याः किं शीलमित्याह—

**यं कंचिदुज्ज्वलं पुरुषं दृष्ट्वा स्त्री कामयते । तथा पुरुषोऽपि योषितम् । अपेक्षया तु न प्रवर्तत इति गोणिकापुत्रः ॥**

यं कंचिदिति स्वकीयं परकीयं वा पुरुषम् । उज्ज्वलं वर्णवेषाभ्याम् । कामयते संजातरागा भवति । पुरुषोऽपि योषितमुज्ज्वलां दृष्ट्वा कामयते । अपेक्षया तु कस्यचित्कार्यस्य । प्रवर्तते द्वावपि संप्रयुज्येते । तदुभयोरप्युज्ज्वलकामित्वं कार्यापेक्षित्वं च शीलम् । गोणिकापुत्रग्रहणं प्रावीण्यख्यापनार्थम् ।

**तत्र स्त्रियं प्रति विशेषः ॥**

तत्रेति तयोस्तुल्यशीलत्वेऽपि । विशेषः प्रत्येकं विशेष उच्यते ।

**न स्त्री धर्ममधर्मं चापेक्षते कामयत एव । कार्यापेक्षया तु नाभियुङ्क्ते । स्वभावाच्च पुरुषेणाभियुज्यमाना चिकीर्षन्त्यपि व्यावर्तते । पुनःपुनरभियुक्ता सिद्ध्यति । पुरुषस्तु धर्मस्थितिमार्यसमयं चापेक्ष्य कामयमानोऽपि व्यावर्तते । तथाबुद्धिश्चाभियुज्यमानोऽपि न सिद्ध्यति । निष्कारणमभियुङ्क्ते । अभियुज्यापि पुनर्नाभियुङ्क्ते । सिद्धायां च माध्यस्थ्यं गच्छति । सुलभामवमन्यते । दुर्लभामाकाङ्क्षत इति प्रायोवादः ॥**

न स्त्रीति प्रवृत्तौ धर्मः स्यान्न वेति नापेक्षते । तमोबहुलत्वात्कामयत एवैनम् । कार्यापेक्षया तु नाभियुङ्क्त एवेति तत्रात्मनि च दोषदर्शनात् । इदं दृष्टदोषदर्शित्वं शीलम् । चिकीर्षन्त्यपीति तेन सह योगं कर्तुमिच्छन्त्यपि व्यावर्तते नायकाभियोगात् । कारणापेक्षया यावदभियुक्तकामित्वं कारणापेक्षित्वं च शीलम् । पुनःपुनरभियुक्ता सिद्ध्यतीति भूयोऽभियुक्तकामित्वं शीलम् । धर्मस्थितिमिति श्रुतिस्मृतिविहितमदृष्टार्थम् । आर्यसमयं शिष्टाचारं दृष्टार्थम् । कामयमानोऽपीतीच्छन्नपि व्यावर्तत इति दृष्टादृष्टदो-

१. 'स्त्री नित्य'. २ 'स्त्रियः'. ३. 'वा'. ४. 'परम्'. ५. 'स्त्रिया तथा'. ६. 'माध्यस्थ्यमपि'. ७. 'काङ्क्षतीति'.

पदर्शित्वं शीलम् । तथाबुद्धिश्चेति धर्मस्थित्यपेक्षी आर्यसमयापेक्षी चाभियुज्यमानोऽपि स्त्रिया । न सिध्यति न प्रवर्तते । अस्य पूर्वोक्तमेव शीलम् । कर्तृकर्मभेदाद्भेदः । निष्कारणमिति सुखं कारणान्तरं चानपेक्ष्य । अभियुज्य पुनर्नाभियुङ्क्ते कारणस्यासमीहितत्वात् । इदं शुद्धकामित्वं शीलम् । सिद्धायां च माध्यस्थ्यं गच्छतीत्यभियुङ्क्ते न च संप्रयुज्यते । इति शुद्धकामित्वं शीलम् । सुलभामवमन्यते दुर्लभामाकाङ्क्षत इति वामशीलत्वम् । इति स्त्रीपुरुषशीलावस्थापनमेकोनचत्वारिंशं प्रकरणम् ॥

तत्र व्यावर्तनकारणानि—पत्यावनुरागः । अपत्यापेक्षा । अतिक्रान्तवयस्त्वम् । दुःखाभिभवः । विरहानुपलम्भः । अवज्ञयोपमन्त्रयत इति क्रोधः । अप्रतर्क्य इति संकल्पवर्जनम् । गमिष्यतीत्यनायतिरन्यत्र प्रसक्तमतिरिति च । असंवृताकार इत्युद्वेगः । मित्रेषु निसृष्टभाव इति तेष्वपेक्षा । शुष्काभियोगीत्याशङ्का । तेजस्वीति साध्वसम् । चण्डवेगः समर्थो वेति भयं मृग्याः । नागरकः कलासु विचक्षण इति व्रीडा । सखित्वेनोपचरित इति च । अदेशकालज्ञ इत्यसूया । परिभवस्थानमित्यबहुमानः । आकारितोऽपि नाववुध्यत इत्यवज्ञा । शशो मन्दवेग इति च हस्तिन्याः । मत्तोऽस्य मा भूदनिष्टमित्यनुकम्पा । आत्मनि दोषदर्शनान्निर्वेदः । विदिता सती स्वजनबहिष्कृता भविष्यामीति भयम् । पलित इत्यनादरः । पत्या प्रयुक्तः परीक्षत इति विमर्शः । धर्मापेक्षा चेति ॥

तत्रेति स्त्रीपुरुषशीलावस्थापने यानि व्यावर्तनानि तानि व्यावर्तनकारणानि प्रकरणान्तर इ(मि)त्युच्यते । पत्यावनुरागो व्यावृत्तिकारणं प्रत्यन्यायामपीप्सायाम् । अपत्यापेक्षेति स्तनंधयं ममापत्यमिति । अतिक्रान्तवयस्त्वमिति परिणतवया लज्जते बलात्परपुरुषाणामङ्गार्पणेनेति । इष्टमरणादि दुःखाभिभूता जातेच्छापि व्यावर्तते । विरहानुपलम्भो भर्तुः सदा संनिहितत्वाद्वियोगं न पश्यति येन संप्रयुज्यते । अवज्ञयोपमन्त्रयतेऽनाद-

1. 'त्रिय'. 2. 'या'. 3. 'न बुध्यति'. 4. 'प्रयुक्तो मा' 5. 'संप्रयुङ्क्ते'.

रेणाभियुङ्क्त इति भयात्क्रोधो व्यावृत्तिकारणम् । अप्रतर्क्यो दुःखग्राहचित्त इति तस्मिन्ब(न्नब)हुमानात्संकल्पवर्जनम् । मनो न संकल्प्यत इत्यर्थः । गमिष्यतीति न चिरकालमनेन संप्रयोग इत्यनायतिर्भविष्यत्कालाभावः कारणम् । अन्यत्र प्रसक्तमतिरिति वानायतिस्तात्कालिकत्वात् । असंवृताकार आकारसंवरणमकुर्वंल्लोके मद्वीतिकां करोतीति परिभवादुद्वेगः । मित्रेषु निःसृष्टभावस्ते (तानि) च यदाहुस्तत्करोतीति च तेष्वपेक्षा मयि त्ववज्ञा । शुष्काभियोगी निष्कारणमभियुङ्क्त इत्याशङ्का । तेजस्वीति साध्वसं प्रमादावस्खलितेऽनर्थं करिष्यतीति । मृग्या इति मन्दवेगायाः । मृग्याश्चण्डवेगः समर्थो वेत्यश्च इति भयम् । नागरक इति यो नागरकवृत्तावधिकृतः । कलासु च विचक्षणो नागरकादन्यः । व्रीडा ग्राम्याया अविदग्धायाश्च । सखित्वेनेति मित्रत्वेन मयायमुपचरितः कथं पुनरेवं कुर्यामिति च व्रीडा । अदेशकालज्ञ इति चासूया देशकालयोर्नाभियुङ्क्त इति । परिभवस्थानं नीचत्वात् ततश्च सखीजनोऽन्यो वा मां परिभविष्यतीत्यसंयतेति तस्मिन्नबहुमानकारणम् । अभिप्रायं दर्शितो नावबुध्यत इत्यवज्ञा न विदग्ध इति । हस्तिन्या इति चण्डवेगायाः । हस्तिन्याः शशो मन्दवेग इति चावज्ञा । मत्तोऽस्येति मन्निमित्तेन मामधिगच्छतो मा भूदनिष्टं शरीरतोऽर्थतो वेत्यनुकम्पा । आत्मनि दोषदर्शनादिति शरीरे रोगादिकं वैगन्ध्यादिकं पश्यन्त्या निर्वेदः । विदिता स्वजनस्य विप्रतिपन्नेति तस्माद्बहिष्कृता भविष्यामीति भयम् । पलितो वृद्ध इत्यनादरः । पत्या प्रयुक्त इति किं पतिव्रता नेति ज्ञातुं नियुक्तः परीक्षत इति विमर्शः । धर्मापेक्षा च कारणम् । अस्त्येव हि काचित्स्त्री या धर्माधर्मावपेक्षते ।

प्रतिविधानमाह—

तेषु यदात्मनि लक्षयेत्तदादित एव परिच्छिन्द्यात् ॥

तेष्विति व्यावर्तनकारणेषु यदात्मनि कारणं लक्षयेन्ममेदं भवितेति तदादित एव परिच्छिन्द्यात्परित्यजेद्यथा न भवति ।

---

१. 'विसृष्टि'. २. 'स्थानाना च सत्वात्.'

उत्पन्नानि चात्मनि स्त्रियां वा परिच्छिन्द्यादुपायैरित्याह—

आर्यत्वयुक्तानि रागवर्धनात् । अशक्तिजान्युपायप्रदर्शनात् । बहुमानकृतान्यतिपरिचयात् । परिभवकृतान्यतिशौण्डीर्याद्वैचक्षण्याच्च । तत्परिभवजानि प्रणत्या । भययुक्तान्याश्वासनादिति ॥

आर्यत्वयुक्तानीति पत्यावनुरागोऽपत्यापेक्षातिक्रान्तवयस्त्वं दुःखाभिभवो धर्मापेक्षा चेत्येतानि स्त्रीगतान्यार्यत्वयुक्तानि रागवर्धनात्परिच्छिन्द्याद्यथा तस्या रागो वर्धेत तथा प्रतिविधेयम् । विरहानुपलम्भोऽस्य मा भूदनिष्टमात्मनि दोषैर्दर्शनादप्रतर्क्यो नागरकः कलासु विचक्षणः सखित्वेनोपचरितः पत्या प्रयुक्तः परीक्षत इत्यात्मगतानि बहुमानकृतान्यतिपरिचयात् । कृतेऽतिपरिचये तस्योपरि मानो विगलति । शुष्काभियोगी अदेशकालज्ञः परिभवस्थानमाकारितो नाववुध्यते पलित इत्यात्मगतानि नायिकापरिभवकृतान्यतिशौण्डीर्यादिति परिभवप्रक्षालनात् । वैचक्षण्याच्चेति शास्त्रकलाप्रकाशनात् । अवज्ञयोपमन्त्रयते असंवृताकारो मित्रेषु निसृष्टभाव इत्यात्मगतानि । तत्परिभवजानि नायिकापरिभवजानि । प्रणत्येति तत्रैकान्तप्रसृतया । तेजस्वी चण्डवेगः समर्थो भवति शशो मन्दवेगो विदिता सती स्वजनबहिष्कृता भविष्यामीत्यात्मगतानि भययुक्तान्याश्वासनादिति यथा न भयं तथा प्रतिविधानेनेति । इति व्यावर्तनकारणानि चत्वारिंशं प्रकरणम् ॥

एवं शीलमवधार्यात्मनः सिद्धतां पश्येत् । अन्यथाभियोगासंभवादिति स्त्रीषु सिद्धाः पुरुषा उच्यन्ते—

पुरुषास्त्वमी प्रायेण सिद्धाः—कामसूत्रज्ञः कथाख्यानकुशलो बाल्यात्प्रभृति संसृष्टः प्रवृद्धयौवनः क्रीडनकर्मादिनागतविश्वासः प्रेषणस्य कर्तोचितसंभाषणः प्रियस्य कर्तान्यस्य भूतपूर्वो दूतो मर्मज्ञ उत्तमया प्रार्थितः सख्या प्रच्छन्नं संसृष्टः सुभगाभिख्यातः सह संवृद्धः प्रातिवेश्यः कामशीलस्तथाभूतश्च परिचारको धात्रेयि-

१. 'परिच्छिन्द्यादुपायैः परिच्छिन्द्यादुपायैः'. २. 'उपाय'. ३. 'परिभाग'; 'परिभोग'. ४. 'तेजस्वं'. ५. 'स्त्रीषु पुरुषाः'. ६. 'तस्या मर्मज्ञ..'

**कापरिग्रहो नववरकः प्रेक्षोद्यानत्यागशीलो वृष इति सिद्धप्रतापः साहसिकः शूरो विद्यारूपगुणोपभोगैः पत्युरतिशयिता महार्हवेषोपचारश्चेति ॥**

अमी वक्ष्यमाणाः। प्रायेण बाहुल्येन। कामसूत्रज्ञः कथाख्यानकुशल इति द्वावपि कामशीलत्वात्स्त्रीषु सिद्ध्यतः। बाल्यात्प्रभृतीति योऽन्यसाद्गृहादागतो बाल्यात्प्रभृति स प्रवृद्धस्नेहत्वादस्याः सिद्धः। प्रवृद्धयौवन इति स हि वयःसामर्थ्यात्स्त्रीषु सिद्धः। क्रीडनकर्मादिनेति क्रीडनव्यापारेण। आदिशब्दात्पत्रच्छेद्यादिना यस्या आगतविश्वासः स तस्याः सिद्धः। प्रेषणस्य कर्ता यस्या वचनकरस्तस्याः सिद्धः। उचितसंभाषणोऽनियन्त्रणात्सिद्धः। प्रियस्य कर्ता यस्या य इष्टं संपादयति स तस्याः सिद्धः। अन्यस्य भूतपूर्वो दूतः पूर्वसंस्तुतत्वादस्याः सिद्ध इति योज्यम्। उत्तमयेत्यधिकया यः प्रार्थितः स पूर्वायाः सिद्ध्यति। सख्या प्रच्छन्नं संसृष्टः प्रच्छन्नं कामितस्तत्परिचयान्नायिकायाः (सिद्धः)। सुभगाभिख्यातः सौभाग्यख्यातिमहापयन्स्त्रीषु सिद्धः। सहसंवृद्धो यया एकस्मिन्प्रिये (?) स तस्याः सिद्धः। प्रातिवेश्यः कामशीलः सोऽस्या वचनमात्रसाध्यः। तथाभूतश्च परिचारकः कामशीलः सोऽस्याः सिद्धः। धात्रेयिकापरिग्रहो धात्रेयिकया पतित्वेन यो गृहीतस्तत्परिचयादस्याः सिद्धः। नववरक इति यस्मिन्गृहे नवो जामाता तत्रत्यासु स्त्रीषु सिद्धः। प्रेक्षोद्यानत्यागशील इति नटादिप्रेक्षणशील उद्यानक्रीडाशीलस्त्यागशीलस्त्रयोऽपि कामशीलत्वात्स्त्रीषु सिद्धाः। वृष इति सिद्धप्रतापो व्यवायीति यो लब्धप्रतापः स स्त्रीषु सिद्ध एवास्ति। साहसिक इति नावमृष्य सहसा यः प्रवर्तते स स्त्रीणां वचनमात्रमपेक्षते। शूर इत्यकुतोभयत्वात्परस्त्रियमपेक्षमाण एव तिष्ठति। पत्युरतिशयितेति यस्या भर्तारं विद्यादिभिरतिशेते स तस्याः सिद्धः। महार्हौ वेषोपचारौ यस्य स कामशीलत्वात्स्त्रीषु सिद्धः। इति स्त्रीषु सिद्धाः पुरुषा एकचत्वारिंशं प्रकरणम् ॥

---

१. 'प्रेक्षणकोद्यान'. २. 'वेषाचार'. ३. 'आगत्य'. ४. 'संभावयति'.

यथात्मनः सिद्धतां पश्येदेवं योषितोऽपि ॥

अयत्नसाध्या योषितस्त्विमाः—अभियोगमात्रसाध्याः। द्वारदेशावस्थायिनी। प्रासादाद्राजमार्गावलोकिनी। तरुणप्रातिवेश्यगृहे गोष्ठीयोजिनी। सततप्रेक्षिणी। प्रेक्षिता पार्श्वविलोकिनी। निष्कारणं सपत्न्याधिविन्ना। भर्तृद्वेषिणी विद्विष्टा च। परिहारहीना। निरपत्या। ज्ञातिकुलनित्या। विपन्नापत्या। गोष्ठीयोजिनी। प्रीतियोजिनी। कुशीलवभार्या। मृतपतिका बाला। दरिद्रा बहूपभोगा। ज्येष्ठभार्या बहुदेवरका। बहुमानिनी न्यूनभर्तृका। कौशलाभिमानिनी भर्तुमौर्ख्येणोद्विग्ना। अविशेषतया लोभेन। कन्याकाले यत्नेन वरिता कथंचिदलब्धाभियुक्ता च सा तदानीं समानबुद्धिशीलमेधाप्रतिपत्तिसात्म्या। प्रकृत्या पक्षपातिनी। अनपराधे विमानिता। तुल्यरूपाभिश्चाधः कृता। प्रोषितपतिकेति। ईर्ष्यालुपूतिचोक्षक्लीवदीर्घसूत्रकापुरुषकुब्जवामनविरूपमणिकारग्राम्यदुर्गन्धिरोगिवृद्धभार्याश्चेति ॥

अयत्नसाध्या योषितस्त्विति वक्ष्यमाणाः। अभियोगमात्रसाध्या इति या अभियोगमात्रमपेक्षन्ते नाधिकं ता अयत्नसाध्या इत्युच्यन्ते। द्वारदेशावस्थायिनीति पुरुषदिदृक्षया द्वारदेशेऽवस्थातुं शीलं यस्याः सा चपलाभियोगमात्रसाध्या। प्रासादादिति प्रासादमारुह्य राजमार्गावलोकिनी। राजमार्गे हि पुरुषाणां संनिधानात्। सतरुणेति सतरुणाः पुमांसो यत्रेति प्रातिवेश्यगृहे तत्रत्याभिः स्त्रीभिर्गोष्ठीयोजिनी सा चापल्यं द्योतयति। सततप्रेक्षिणी चेति या सततं प्रेक्षते सा तस्य साध्या। प्रेक्षितेति नायकेन पार्श्वविलोकिनी या पार्श्वमवलोकयति किमन्येन दृष्टासीति सापि चापल्यं कथयति। निष्कारणमिति या तु दौःशील्यादिकं विनेति सपत्न्याधिविन्ना युक्तामर्षात्परपुरुषमिच्छति। भर्तृद्वेषिणीगुणवन्तमपि भर्तारमनिच्छन्ती विद्विष्टा चेति भर्ता यां द्वेष्टि द्वे अपि चञ्चले। परिहारहीना निष्परिहारा

१. 'अप्रयत्न'. २. 'पार्श्वावलोकिनी'. ३. 'अविशेषनतया'. ४. 'चोष्प'. ५. 'अत्रेति'.

परिहार्येषु सा स्वभावत एव व्यभिचारिणी । निरपत्या भर्तुरपत्यमपश्यन्ती परानुपैति । ज्ञातिकुलनित्या ज्ञातिगृहे सदावस्थिता स्वातन्त्र्याद्भिन्नवृत्तिः । विपन्नापत्या भर्तुर्यद्यदपत्यं तत्तद्विपद्यत इति परपुरुषापेक्षापत्याभावाद्वा । गोष्ठीयोजिनी स्वगृहे सखीगृहे वा चापल्यं सूचयति । प्रीतियोजिनी येन सह प्रीतिं योजयति तस्य साध्या । कुशीलवभार्या नटनर्तकादीनां भार्या वेश्याप्रायाः । मृतपतिका बालेति बाला च या विधवा सा तारुण्ये निषद्यमाना शीलं खण्डयति । दरिद्रा बहूपभोगान्वितं दातारमभिगच्छति । ज्येष्ठभार्या बहुदेवरका प्रायशो देवरैरेव व्युत्पादिता । बहुमानिनी न्यूनभर्तृकेत्यात्मनि बहुमानो यस्याः । न्यूनश्च भर्ता सा न तत्र रमते । कौशलाभिमानिनी कलानां परिज्ञानाभिमानो यस्याः सा भर्तुर्मौर्ख्येण मूर्खत्वेनोद्विग्ना नियतं तत्कुशलमन्विष्यति । अविशेषतया भर्तुरुद्विग्ना विशेषज्ञा लोभेन भर्तुरुद्विग्ना स्वयमलुब्धा न तत्र रमते । कन्याकाल इति कन्यावस्थायां यत्नान्नायकेन वृता कथंचिद्दैवयोगात्तु न लब्धा सत्यन्येनोढेत्यभियुक्ता तदानीं यदा तस्येच्छा सा तस्य साध्या । पूर्वानुरागात् । समानबुद्धिरिति नायकेन तुल्या बुद्ध्यादयो यस्याः सा तस्य साध्या । तत्र बुद्धिर्बोध्येषु । शीलं स्वभावः । मेधा विद्याकलासु ग्रहणशक्तिः । प्रतिपत्तिरनुष्ठानम् । सात्म्यं देशसात्म्यं प्रकृतिसात्म्यं च । प्रकृत्येति स्वभावेन यं प्रति पक्षपातो यस्याः सा तस्य साध्या । अनपराध इति दोषं विना भर्त्रावमानिता परिभूता न तत्र सज्जते । अन्यमिच्छति । तुल्यरूपाभिश्चाधः कृतेति समानप्रतिपत्तिभिः सपत्नीभिर्न्यकृता विरागादन्यमिच्छति । प्रोषितभर्तृका ब्रह्मचर्येण भग्ना कथंचिन्मन्यान्नेच्छेत् । यो निष्कारणमीर्ष्यते तस्य भार्या विटैश्चिरमपहृतैव । पूतिः शरीरसंस्काररहितस्तस्य भार्या कश्मलत्वाद्विमुखीभवति । चोक्षो जातिविशेषस्तद्भार्या वेश्याप्राया । क्लीबो नपुंसकः । दीर्घसूत्रः कार्यमवमृश्य तदात्वे नारभते । कापुरुषः पौरुषहीनः । द्वयोरपि भार्या परस्यैव । कुब्जवामनयोर्विरूपयोरप्युपादानं वैरूप्यभेदप्रकर्षणार्थम् । द्वयोरपि भार्या खण्डितशीला । मणिकारो मणीनां संस्कर्ता । तद्भार्या सदैव हट्टचारिणी

१. 'अन्यस्थितिं'. २. 'निवृत्ता'. ३. 'अन्यात्र इच्छेत्'.

खण्डितशीला । ग्राम्यभार्या नागरकस्यायत्नसाध्या स्यात् । दुर्गन्धिः शरीरे यस्य दुष्टो गन्धः स उद्वेगकरः । रोगी यो दीर्घरोगयुक्तः । वृद्धो व्यवायाक्षमः । एषां भार्या व्यभिचारिण्यः ।

प्रकरणत्रयार्थमुपसंहरन्नाह—

श्लोकावत्र भवतः—

इच्छा स्वभावतो जाता क्रियया परिबृंहिता ।
बुद्धया संशोधितोद्वेगा[1] स्थिरा स्यादनपायिनी ॥
सिद्धतामात्मनो ज्ञात्वा लिङ्गान्युन्नीय योषिताम् ।
व्यावृत्तिकारणोच्छेदी नरो योषित्सु सिध्यति ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे स्त्रीपुरुषशीलावस्थापनं व्यावर्तनकारणानि स्त्रीषु सिद्धाः पुरुषा अयत्नसाध्या योषितः प्रथमोऽध्यायः ।

इच्छेति स्वभावतो यं कंचिदुज्ज्वलं दृष्ट्वा कामयत इति । क्रिययेति परिचयाभियोगलक्षणया परिबृंहिता वर्धिता । बुद्ध्येति प्रज्ञया संशोधितोद्वेगेति संप्रयोगोपायमपश्यन्ती उद्वेगयुक्तापि स्यात् । तदुपायदर्शनेनापनीतोद्वेगा । सा चैवंविधा स्थिरा स्यात् । अनपायिनीत्वात् । सिद्धतामिति ज्ञात्वा किमहमस्याः सिद्ध इति । लिङ्गानीच्छासूचकानि । इङ्गिताकारानित्यर्थः । उन्नीयेति ज्ञात्वा । व्यावृत्तिकारणोच्छेदी रागवर्धनादिभिः । योषित्सु सिध्यत्यभियुञ्जानः फलं लभत इत्यर्थः । इत्ययत्नसाध्या योषितो द्वाचत्वारिंशं प्रकरणम् ॥

-इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां पारदारिके पञ्चमेऽधिकरणे स्त्रीपुरुषशीलावस्थापनं व्यावर्तनकारणानि स्त्रीषु सिद्धाः पुरुषा अयत्नसाध्या योषितः प्रथमोऽध्यायः ॥

---

१. 'च संधितोद्वेगा'.

द्वितीयोऽध्यायः।

क्रियया परिबृंहितेत्युक्तं तां क्रियां दर्शयितुमाह—

**यथाकन्या स्वयमभियोगसाध्या न तथा दूत्या। परस्त्रियस्तु सूक्ष्मभावा दूतीसाध्या न तथात्मनेत्याचार्याः॥**

द्वे नायिके कन्या परयोषिच्च। अभियोगो द्विविध आत्मना दूत्या च। अत्राचार्याणां मतं यथाकन्येति। कन्यानामसंप्रयुक्तत्वात्तासु प्रायेण युक्त्याभियोगाः। तांश्च नायक एव प्रयोक्तुं शक्नोति। न दूती। एवं च तास्वेकपुरुषाभियोगा उक्ताः। सूक्ष्मभावा इति प्रवृत्तसंयोगात्परपुरुषः संभवति (?)। किंतु तस्मिन्भावप्रदर्शनं प्रकाशनं दूत्यामुभयं संभवति। तस्माद्दूत्यैव साध्या इति।

**सर्वत्र शक्तिविषये स्वयं साधनमुपपन्नतरकं दुरुपपादत्वात्तस्य दूतीप्रयोग इति वात्स्यायनः॥**

सर्वत्रेति कन्यासु परस्त्रीषु चेति। शक्तिविषय इति यत्र स्वयमभियोक्तुं शक्नोति। उपपन्नतरकं दूतीसाधनात्। तस्येति स्वयमभियोगस्य। दुरुपपादकत्वादिति यत्र दुःखेनोपपाद्यते तत्र दूतीप्रयोगः।

तत्र प्रायोवादेन दर्शयन्नाह—

**प्रथमसाहसा अनियन्त्रणसंभाषाश्च स्वयं प्रतार्याः। तद्विपरीताश्च दूत्येति प्रायोवादः॥**

प्रथमं साहसं चारित्रखण्डनं यासां तासु नायक एव समर्थो न दूती। अनियन्त्रणमनिषिद्धं संभाषणं यासां नायकेन सह यास्वपि किं दूत्येति। स्वयं प्रतार्या इति स्वयमुपपन्नतरकत्वं प्रदर्शयति। दुरुपपादत्वमाह तद्विपरीता इति बहुशः खण्डितचारित्रा नियन्त्रणसंभाषिण्यः।

ननु प्रथमसाहसायां गमनं प्रतिषिद्धम्। विषयस्याशुद्धत्वात्। शरीरोपघातत्राणार्थमप्ययुक्तम्। स्वयमभियोगस्य(स्तु) न परिचयं विनेति परिचयकारणान्युच्यन्ते। यदाह—

**स्वयमभियोक्ष्यमाणस्त्वादावेव परिचयं कुर्यात्॥**

---

१. 'ताश्च नायकेन प्रयोक्तुं शक्यन्ते न दूत्या'. २. 'अभियुज्यमान.'..

अभियोक्ष्यमाणोऽभियोगं करिष्यन् । परिचयं संदर्शनं दूतीपूर्वकम् ।

संदर्शनं च द्विविधमित्याह—

**तस्याः स्वाभाविकं दर्शनं प्रायत्निकं च । स्वाभाविकमात्मनो भवनसंनिकर्षे प्रायत्निकं मित्रज्ञातिमहामात्रवैद्यभवनसंनिकर्षे विवाहयज्ञोत्सवव्यसनोद्यानगमनादिषु ॥**

भवनसंनिकर्ष इति गृहसमीपे क्वचिदागताया दर्शनं स्वाभाविकं न प्रयत्नकृतम् । मित्रादीनां यद्गृहं तत्समीपे यद्दर्शनं विवाहादिषु च । तत्प्रायत्निकम् । प्रयत्नसाध्यत्वात् ।

तत्र च द्विविधे संदर्शने परिचयकारणं द्विविधं बाह्यमाभ्यन्तरं च । तत्र पूर्वमधिकृत्याह—

**दर्शने चास्याः सततं साकारं प्रेक्षणं केशसंयमनं नखाच्छुरणमाभरणप्रह्लादनमधरौष्ठविमर्दनं तास्ताश्च लीला वयस्यैः सह प्रेक्षमाणायास्तत्संबद्धाः परापदेशिन्यश्च कथास्त्यागोपभोगप्रकाशनं सख्युरुत्सङ्गनिषण्णस्य साङ्गभङ्गं जृम्भणमेकभ्रूक्षेपणं मन्दवाक्यता तद्वाक्यश्रवणं तामुद्दिश्य बालेनान्यजनेन वा सहान्योपदिष्टा द्व्यर्था कथा तस्यां स्वयं मनोरथावेदनमन्यापदेशेन तामेवोद्दिश्य बालचुम्बनमालिङ्गनं च जिह्वया चास्य ताम्बूलदानं प्रदेशिन्या हनुदेशघट्टनं तत्तद्यथायोगं यथावकाशं च प्रयोक्तव्यम् । तस्याश्चाङ्कगतस्य बालस्य लालनं बालक्रीडनकानां चास्य दानं ग्रहणं तेन संनिकृष्टत्वात्कथायोजनं तत्संभाषणक्षमेण जनेन च प्रीतिमासाद्य कार्यं तदनुबन्धं च गमनागमनस्य योजनं संश्रये चास्यास्तामपश्यतो नाम कामसूत्रसंकथा ॥**

साकारमिति भावसूचकेन मुखनयनगतेनाकारेण सह प्रकृते प्रेक्षणं क-

---

१. 'प्राथमिक'. २. 'गमनाचारेषु'. ३. 'वयस्यैः सार्धं लीला'. ४. 'क्षेपः'. ५. 'कथाः'. ६. 'उद्दिश्य भूमिविलेखनं बालस्य'. ७. 'तच्च तच्च यथावकाशं'. ८. 'लालनं क्रीडनकानां'. ९. 'ग्रहणं वा'. १०. 'च जनेन सह'. ११. 'आसज्य कार्ययोगः'.

र्तव्यम्। केशसंयमनं केशानवमुच्य बन्धनम्। नखाच्छुरणं स्वाङ्गेष्वाच्छुरितकम्। आभरणप्रह्लादनं शब्दनम्। अधरोष्ठविमर्दनमङ्गुष्ठसंपुटेन परिघर्षणम्। तास्ताश्चेति गुणसंवर्धनप्रधानाः कथाः। वयस्यैर्मित्रैः। प्रेक्षमाणाया इति नायिकायाः पश्यन्त्याः। तत्संबद्धा इति नायिकासंबद्धाः। परापदेशिन्य इति नायिकापदेशिन्यः। त्यागोपभोगप्रकाशनं दातृत्वभोगित्वख्यापनार्थम्। सख्युरिति मित्रस्योत्सङ्गे निषण्णस्य। साङ्गभङ्गमिति साङ्गस्फोटनं जृम्भणं विजृम्भिका स्यात्। एकभ्रूक्षेपणं निषण्णस्यैव। मन्दवाक्यता गद्गदवचनता किमु मां किंचिद्ब्रवीति। तामिति नायिकाम्। बालेनेति तत्पार्श्ववर्तिना गर्भरूपेण। जनेन चान्येन। अन्योपदिष्टेति तत्सुहृदा कृता न स्वयम्। द्व्यर्था कथेत्येको बालेन संबद्धोऽर्थो द्वितीयो नायिकया। तस्यामिति कथायां क्रियमाणायां स्वयमात्मना मनोरथावेदनम्। अन्यापदेशेनेत्यस्मिन्मित्रस्या(?)मिति दुर्घटो मनोरथः स किं भविष्यति न भविष्यतीति न जाने। तामेवेति नायिकाम्। बालस्य चुम्बनमालिङ्गनं संक्रान्तकम्। जिह्वया च प्रसारितया। प्रदेशिन्या तर्जन्या। हनुदेशघट्टनं कपोलयोरधस्ताच्चलनम्। तामुद्दिश्येति सर्वत्र योज्यम्। तत्तदित्यन्यदप्येवंविधम्। यथायोगमिति यद्यस्य युज्यते स्पर्शनं ताडनं वा। यथावकाशमिति यथाप्रदेशं कक्षयोरुरसि पृष्ठे वा बालस्य विधेयम्। तस्याश्चेति नायिकायाः। अङ्कगतस्य क्रोडस्थस्य लालनं मृदुता च सा (?) बालक्रीडनकानां यानुष्टु (?) गुटिकादीनाम्। तेनेति दानग्रहणसंबन्धेन संनिकृष्टत्वात्कथायोजनं कार्यम्। तेन सह प्रीतिमासाद्य संयोज्य कार्यं प्रयोक्तव्यमिति शेषः। तदनुबन्धं चेति कार्यानुबन्धम्। गमनागमनस्य योजनं येन लोकोऽनेन कार्येणास्य गमनागमनं नान्येनेति मन्यते। संश्रवे चास्या इति यत्र सा शृणोति तत्र कामसूत्रसंकथा विज्ञत्वख्यापनार्थम्। तत्रापि तामपश्यतो नामेति न किलाहमेनां पश्यामीति। अन्यथा तां पश्यतः कथयतो दुर्विदग्धता स्यात्।

---

१. 'इति तानि'. २. 'प्रकाशनस्य'. ३. 'स्पर्शनसमताडन'.

आभ्यन्तरमधिकृत्याह—

प्रसृते तु परिचये तस्या हस्ते न्यासं निक्षेपं च निदध्यात्। तत्प्रतिदिनं प्रतिक्षणं चैकदेशतो गृह्णीयात्। सौगन्धिकं[1] पूगफलानि च। तामात्मनो दारैः सह विस्रम्भगोष्ठ्यां विविक्तासने च योजयेत् नित्यदर्शनार्थं विश्वासनार्थं च। सुवर्णकारमणिकारवैकटिकनीलीकुसुम्भरञ्जकादिषु[2] च कामार्थिन्यां[3] सहात्मनो वश्यैश्चैषां तत्संपादने[4] स्वयं प्रयतेत। तदनुष्ठाननिरतस्य[5] लोकविदितो दीर्घकालं संदर्शनयोगः। तस्मिंश्चान्येषामपि कर्मणामनुसंधानम्। येन कर्मणा द्रव्येण कौशलेन चार्थिनी स्यात्तस्य प्रयोगमुत्पत्तिमागममुपायं विज्ञानं चात्मायत्तं दर्शयेत्। पूर्वप्रवृत्तेषु लोकचरितेषु द्रव्यगुणपरीक्षासु च तया तत्परिजनेन च सह विवादः। तत्र निर्दिष्टानि पणितानि तेष्वेनां प्राश्निकत्वेन योजयेत्। तया तु विवदमानोऽत्यन्ताद्भुतमिति[6] ब्रूयादिति परिचयकारणानि॥

प्रसृते तु सर्वथोत्पन्ने परिचये। न्यासाः संस्थाप्याश्चिरकालग्राह्याः। निक्षेपं यदल्पकालग्राह्यम्। प्रतिदिनं न्यासः प्रतिदिनं निक्षेपकम्। तदेकदेशं स्तोकस्तोकेन गृह्णीयात्। तदेव यथाक्रमं दर्शयति—सौगन्धिकं सुगन्धिद्रव्याणां समूहः। तद्द्वारेण प्रतिदिनं न्यासं निक्षेपं च यदल्पकालग्राह्यं प्रतिक्षणं च दृश्यते। विस्रम्भगोष्ठ्यां विविक्तासने चेति तामुपनिमन्त्र्यास्माभिः प्रच्छेन्न समुपविश्य पानगोष्ठी कर्तव्येत्यभिधाय स्वदारैः सह तत्र योजयेत्। नित्यदर्शनार्थं विश्वासनार्थं चेति प्रतिक्षणं दर्शनार्थं स्वयं प्रयतेतेति वक्ष्यमाणेन संबन्धः। वैकटिको रत्नानां परिशोधकः। नीलीरञ्जककुसुम्भरञ्जकौ प्रतीतौ। आदिशब्दात्त्वष्टृकांस्यकारादयः। तेषां कामार्थिन्यां सत्यामात्मवश्यैर्विधेयैः सुवर्णकारादिभिस्तत्संपादने सुवर्णादिकर्मसंपादने तदनुष्ठानं निरस्य[7] सुवर्णादिकर्म स्वयमधिष्ठाय कारयेत्। संदर्शनयोगो न प्रच्छन्न-

१. 'यत्तत्सौगन्धिक'. २. 'रजकादिषु'. ३. 'कामार्थिन्यामात्मनश्च वश्यैरेषां'. ४. 'संपादने च योजयेत्स्वयं प्रयतेत'. ५. 'रतस्य च लोके'. ६. 'अन्यत्तद्भक्तमिति कुर्यात्'. ७. 'निरस्येति'.

योगः स्यात् । अपि तु दीर्घकालं लोकस्य विदितः । अन्यथा लोकस्तं दृष्ट्वा सहसा विकल्पयति । तस्मिन्निति कर्मण्यनुष्ठीयमानेऽसमाप्त एवान्येषां कर्मणामनुसंधानं कर्तव्यं मा भूद्दर्शनविच्छेद इति । येनेति कर्मणां पुष्कलेन । इति परिचयकारणानि त्रयश्चत्वारिंशं प्रकरणम् ॥

**कृतपरिचयां दर्शितेङ्गिताकारां कन्यामिवोपायतोऽभियुञ्जीतेति । प्रायेण तत्र सूक्ष्मा अभियोगाः । कन्यानामसंप्रयुक्तत्वात् । इतरासु तानेव स्फुटमुपदध्यात् । संप्रयुक्तत्वात् । संदर्शिताकारायां निर्भिन्नसद्भावायां समुपभोगव्यतिकरे तदीयान्युपयुञ्जीत । तत्र महार्हगन्धमुत्तरीयं कुसुमं चात्मीयं स्यादङ्गुलीयकं च । तद्धस्ताद्गृहीतताम्बूलया गोष्ठीगमनोद्यतस्य केशहस्तपुष्पयाचनम् । तत्र महार्हगन्धं स्पृहणीयं स्वनखदशनपदचिह्नितं साकारं दद्यात् । अधिकैरधिकैश्चाभियोगैः साध्वसविच्छेदनम् ॥**

........तेङ्गिताकारायाम् । निर्भिन्नसद्भावायामिति प्रकटितसंभृतभावायां सत्याम् । समुपभोगव्यतिकरे तदीयानीति नायिकावस्तूनि स्वयमुपयुञ्ज्यात्स्वानि च तामुपभोजयेत् । तत्रेति परिवर्तमाने । महार्हगन्धमत्यन्तसुरभि । उत्तरीयं कुसुमं चात्मीयं स्यात्स्वीकुर्यादित्यर्थः । अङ्गुलीयकं च महार्हं स्यात् । तद्धस्तान्नायकहस्ताद्यदि तया ताम्बूलं गृहीतम् । गोष्ठीगमनोद्यतस्येति कर्तरि षष्ठी । केशहस्तः केशकलापः । तत्रत्यपुष्पयाचनम् । सिद्धकरमेतदिति । स्वयं तु ददन्नायको यन्महार्हगन्धं स्पृहणीयं लोकस्य तदन्यहस्तेन यदा दद्यात्तदा स्वनखदशनपदचिह्नितम् । यदा स्वहस्तेन तदा साकारम् । क्रियाविशेषणमेतत् । एवं प्रकारद्वयेऽपि भावः सूचितो भवति । अधिकैरधिकैः पूर्वपूर्वेभ्यः साध्वसविच्छेदनम् । प्रायेण परयोषित्परपुरुषेषु ससाध्वसा भवति ।

---

१. 'तद्द्रव्याणि गोष्ठीगमनोपभोगव्यतिकरेष्वानीयोपयुञ्जीत'. २. 'तत्र महार्हगन्धमात्मीयं स्यात्तद्धस्ताच्च ताम्बूलग्रहणम् । गोष्ठीगमनोद्यतस्य तत्केशहस्त'. ३ 'सूचितोऽयं'.

आन्तरानधिकृत्याह—

क्रमेण च विविक्तदेशे गमनमालिङ्गनं चुम्बनं ताम्बूलस्य ग्राहणं दानान्ते द्रव्याणां परिवर्तनं गुह्यदेशाभिमर्शनं चेत्यभियोगाः ॥

क्रमेण चेति यदैकान्तेन गतसाध्वसा तदा विविक्तदेशगमनं यस्मिन्प्रच्छन्ने देशे तिष्ठति । तत्र चालिङ्गनादयः प्रयोक्तव्याः । गुह्यदेशाभिमर्शनं कक्षोरुमूलविमर्दनम् । जघने उत्क्षिप्तकेन ।

अभियोगस्याविषयमाह—

यत्र चैकाभियुक्ता न तत्रापरामभियुञ्जीत । तत्र या वृद्धानुभूतविषया प्रियोपग्रहैश्च तामुपगृह्णीयात् ॥

यत्र चेति गृहे । अपरामिति द्वितीयां नाभियुञ्जीत । प्रियोपग्रहैश्चेति प्रियं यदा स्वसुखकारणं तदेवोपग्रहः । उपगृह्यतेऽनेनेति । उपगृह्य स्वीकृत्योपन्यस्यात् ।

श्लोकावत्र भवतः—

अन्यत्र दृष्टसंचारस्तद्भर्ता यत्र नायकः ।
न तत्र योषितं कांचित्सुप्रापामपि लङ्घयेत् ॥
शङ्कितां रक्षितां भीतां सश्वश्रूकां च योषितम् ॥
न तर्कयेत मेधावी जानन्प्रत्ययमात्मनः ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
परिचयकारणान्यभियोगा द्वितीयोऽध्यायः ।

---

यत्रेति यस्मिन्गृहे नायिकाया भर्ता अन्यस्यां योषिति दृष्टसंचारो दृष्टाभिगमो न तत्र गृहे सुप्रापामपि सुलभामपि लङ्घयेदधिगच्छेदित्यर्थः । शङ्किताममियोक्तरि जाताशङ्काम् । रक्षितां रक्षिभिः । भीतां पत्युः ।

---

१. 'दाने पुष्पाणां च'. २. 'युक्ता स्यात्'. ३. 'विशेषा'. ४. 'यावत्', 'रक्षन्'.

स श्वश्रूकां श्वश्र्वधिष्ठितां न तर्कयेत । जानन्प्रत्ययमित्यहमत्राशक्त इति निश्चयमगच्छन् । इत्यभियोगाश्चतुश्चत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरह-
कातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्याया पारदा-
रिके पञ्चमेऽधिकरणे परिचयकारणान्यभियोगा
द्वितीयोऽध्यायः ॥

---

तृतीयोऽध्यायः ।

सत्यप्यभियोगे धीराः प्रगल्भपरीक्षिण्यो याः स्त्रियस्ता न निर्भिन्नसद्भावास्ततश्च न तासु विशेषाभियोग इति भावपरीक्षोच्यते—

अभियुञ्जानो योषितः प्रवृत्तिं परीक्षेत । तेया भावः परीक्षितो भवति । अभियोगांश्च प्रतिगृह्णीयात् ॥

प्रवृत्तिं चेष्टां परीक्षेत । अनया हि परीक्षितया भावः परीक्षितो भवति । तत्कार्यत्वात् ।

कथं साधयेत्याह—

मन्त्रमवृण्वानां दूत्या साधयेत् ॥

मन्त्रमवृण्वानामिति सांप्रयोगिकं भावमप्रकाशयन्तीं दूत्या साधयेत् । प्रगल्भत्वात् ।

अप्रतिगृह्याभियोगं पुनरपि संसृज्यमानां द्विधाभूतमानसां विद्यात् । तां क्रमेण साधयेत् ॥

अप्रतिगृह्याभियोगं नायकेन क्रियमाणं प्रत्याख्याय पुनरपि कियन्तो दिवसान्स्थित्वा संसृज्यमानां नायकेन संसर्गं यातां द्विधाभूतमानसां विद्यात् । परीक्षणीयत्वात्किं कुर्यामहं न वेति तां क्रमेण साधयेत् ।

अत्र विशेषमाह—

अप्रतिगृह्याभियोगं सविशेषमलंकृता च पुनर्दृश्येत तथैव तमभिगच्छेच्च विविक्ते बलाद्ग्रहणीयां विद्यात् ॥

---

१. 'यावत्'. २. 'तया भावः परीक्षितो भवति' इति पुस्तकान्तरे टीकान्तः पातितम्. ३. 'अभियोगांश्च प्रतिगृह्णीयात्' पुस्तकान्तरे नास्ति. ४. 'चेत्'.

सविशेषमिति यथा पूर्वमलंक्रियमाणा अतः सविशेषमलंकृता पुनर्नायकेन दृश्येत तथैवाभिगच्छेत् [च]। नायिकां विविक्ते स्थितां बलाद्गृह्णीयाद्धठाद्गृह्यां विद्यात् ॥

बहूनपि विषहतेऽभियोगान्न च चिरेणापि प्रयच्छत्यात्मानं सा शुष्कप्रतिग्राहिणी परिचयविघटनसाध्या ॥

धीरत्वाद्बहूनपि विषहते ये ये क्रियन्ते । न च चिरेणापीति बहुभिरपि दिवसैः। शुष्कप्रतिग्राहिणीत्यर्थशून्यानभियोगान्प्रतिग्रहीतुं शीलमस्याः। [1]अतिपरीक्षणीयत्वात् । परिचयविघटनसाध्येति परिचयापनयनसाध्या ।

कथं तदपनयनात्सिध्यतीत्याह—

मनुष्यजातेश्चि[2]त्तानित्यत्वात् ॥

मनुष्यजातेरिति तच्चि[3]त्ताभिधानम् । चित्तानित्यत्वादिति मनसश्चलत्वात् । यतो विच्छिन्ने परिचये पुनः स्वयं संधत्ते ।

[4]अभियुक्तापि परिहरति । न च संसृज्यते । न च प्रत्याचष्टे । तस्मिन्नात्मनि च[5] गौरवाभिमानात् । सातिपरिचयात्कृच्छ्रसाध्या । मर्मज्ञया दूत्या तां साधयेत् ॥

अभियुक्तापि परिहरति । अभियोगं परिहृत्यापि काचित्संसर्गं यातापीत्याह । न च संसृज्यते इति तस्या आत्मन्यभिमानात् । न च प्रत्याचष्टे नायिका(यक)मेकान्तेन । तस्मिन्नायके च गौरवाभिमानात् । सातिपरिचयात्कृच्छ्रसाध्या तस्या ह्यतिधीराया अतिपरिचयेन गौरवाभिमानौ कृच्छ्रयन्स्फुटयति । मर्मज्ञया दूत्या साध्या । तद्वशत्वात् ।

तत्र विशेषमाह—

सा चेदभियुज्यमाना पारुष्येण [6]प्रत्यादिशत्युपेक्ष्या ॥

पारुष्येण प्रत्यादिशति निष्ठुरवाक्येण प्रत्याचष्टे । उपेक्षिताभियुञ्जीत ।

अत्रापि विशेषमाह—

परुषयित्वापि तु प्रीतियोजिनीं साधयेत् ॥

---

१. 'अतिपरीक्षणीयत्वात्' पुस्तकान्तरे नास्ति. २. 'चेतो'. ३. 'तद्वित्ता'. ४. 'नाभियुक्तापि'. ५. 'वा'. ६. 'प्रत्यादिशेदुपेक्ष्य'.

परुषमुक्त्वापि प्रीतियोजिनीं प्रीतियोजनशीलां साधयेत्पुनरभियुञ्जीत । तस्या जातविप्रतीसारत्वात् ।

**कारणात्संस्पर्शनं सहते नावबुध्यते नाम द्विधाभूतमानसा सातत्येन क्षान्त्या वा साध्या ।**

कारणादिति कुतश्चिन्निमित्तात्संस्पर्शनमभियोगं सहते । न शुष्कप्रतिग्राहिणीत्यर्थः । नावबुध्यते नामेति नायकाभिप्रायमजानतीव संस्पर्शनं सहते सैवंभूता द्विधाभूतमानसा परीक्षणीयत्वात्सातत्येन क्षान्त्या साध्येति । अविच्छेदेन संस्पर्शस्य क्षमणं कार्यमित्यर्थः ।

**समीपे शयानायाः सुप्तो नाम करमुपरि विन्यसेत् । सापि सुप्तेवोपेक्षते । जाग्रती त्वपनुदेद्भूयोऽभियोगाकाङ्क्षिणी ॥**

समीपे शयानाया आन्तराभियोगेन प्रवृत्तिं परीक्षेत । सुप्ता नामेति कृतकमपदिश्यापनयति । किमर्थमित्याह—भूयोऽभियोगाकाङ्क्षिणीति । अन्यथा किं सुप्तेनैव न्यस्तः किं वाभियोगार्थं कृतकसुप्तेनेति संदेहः ।

**एतेन पादस्योपरि पादन्यासो व्याख्यातः ॥**

एतेन हस्तन्यासेन ।

**तस्मिन्प्रसृते भूयः सुप्तसंश्लेषणमुपक्रमेत् । तदसहमानामुत्थितां द्वितीयेऽहनि प्रकृतिवर्तिनीमभियोगार्थिनीं विद्यात् । अदृश्यमानां तु दूतीसाध्याम् ॥**

तस्मिन्निति हस्तन्यासे पादन्यासे च । प्रसृते निबन्धनत्वेन प्रवृत्ते । सुप्तसंश्लेषणमिति कृतकसुप्ताया आलिङ्गनमेवोपक्रमेण(त) चुम्बनादिकम् । तदिति संश्लेषणम् । उत्थितां शयनात् । प्रकृतिवर्तिनीमकुपिताम् । अभियोगार्थिनीं विद्यात् । दृश्यमाना पुनरभियुञ्जीतेत्यर्थः । अस्या अप्रगल्भत्वात् । अदृश्यमानां तु प्रकृतिवर्तिनी दूतीसाध्यां [विद्यात्] तद्विषयत्वात् ।

---

१. 'करचरणसस्पर्शन'.　२. 'सश्लेषणनियमोपक्रमेत्'.

**चिरमदृष्टापि प्रकृतिस्थैव संसृज्यते कृतलक्षणां तां दर्शिताकारामुपक्रमेत् ॥**

यदा तु तदसहमानोत्थिता चिरं बहून्दिवसान्दृष्टा सती पुनरपि प्रकृतिस्थैवाकुपिता संसृज्यते संसर्गं करोतीति यद्यप्येवं तथापि कृतलक्षणां तामिति जातावसरां दर्शिताकारामुपक्रमेताभियुञ्जीत । तस्या अतिशयेनाप्रगल्भत्वात् ।

**अनभियुक्ताप्याकारयति । विविक्ते चात्मानं दर्शयति । सवेपथुगद्गदं वदति । स्विन्नकरचरणाङ्गुलिः स्विन्नमुखी च भवति । शिरःपीडने संवाहने चोर्वोरात्मानं नायके नियोजयति । आतुरा संवाहिका चैकेन हस्तेन संवाहयन्ती द्वितीयेन बाहुना स्पर्शमावेदयति श्लेषयति च । विस्मितभावा । निद्रान्धा वा परिस्पृश्योरुभ्यां बाहुभ्यामपि तिष्ठति । अलिकैकदेशमूर्वोरुपरि पातयति । ऊरुमूलसंवाहने नियुक्ता न प्रतिलोमयति । तत्रैव हस्तमेकमविचलं न्यस्यति । अङ्गसंदंशेन च पीडितं चिरादपनयति । प्रतिगृह्यैवं नायकाभियोगान्पुनर्द्वितीयेऽहनि संवाहनायोपगच्छति । नात्यर्थं संसृज्यते । न च परिहरति । विविक्ते भावं दर्शयति निष्कारणं चागूढमन्यत्र प्रच्छन्नप्रदेशात् । संनिकृष्टपरिचारकोपभोग्या सा चेदाकारितापि तथैव स्यात् सा मर्मज्ञया दूत्या साध्या । व्यावर्तमाना तु तर्कणीयेति भावपरीक्षा ॥**

अभियुक्तेति । अभियुक्ता तावद्भावसूचकमाकारं दर्शयत्येव । तत्र च यदि वदति सवेपथु सगद्गदम् । स्विन्नकरचरणाङ्गुलिः स्विन्नमुखी च भवत्येकान्तेनाहितभावत्वात् । आतुरेति । आतुरामेकान्तेन प्रगल्भयेत् । एवमवस्थापि विविक्ते नायकं दूतादभियुङ्क्ते । संवाहिका चेति कदाचिदप्रगल्भा संवाहनद्वारेण प्रवृत्तिं दर्शयति । स्पर्शमावेदयतीत्यात्मीयं नायकं

१. 'संसृज्येत'. २. 'खिन्नमुखी'. ३. 'शिर.पीडनसंवाहनयोश्चात्मानं नियोजयति'. ४. 'आतुरसंवाहिका'. ५. 'नियुक्ता न विसंवादं गच्छति'. ६. 'अप्रतिगृह्य वा'.

ज्ञापयति । विस्मितभावेति विस्मिताख्यो भावो यस्याः । स्पर्शं निर्वेदयमाना[1] तावत्स्पर्शं विना जातविस्मया सती तेनैव द्वितीयबाहुना श्लेषयति श्लेषं करोति । वाशब्दो भिन्नक्रमे । उभाभ्यां बाहुभ्यां कृतकनिद्रा परिस्पृश्यापि ऊरुभ्यां तिष्ठति । अलिकैकदेशमग्रभागं पातयति । संवाहयन्ती न प्रतिलोमयति । तत्संवाहनं स्यात् । तत्रैवेत्यूरुमूले । अविचलनं न्यस्यति तन्नज्ञाप्या (?) न व्यापारयति । मा भूज्जघनपार्श्वसंस्पर्श इति । अङ्गसंदंशेन चेत्यूरुद्वयसंदंशेन नायकेन पीडितं चिरादपनयति । मा भूदिच्छाविघातोऽस्येति । नायकाभियोगानिति । तस्यामवस्थायामन्यदा वा नायकाभियोगान्दृष्ट्वा तदीयं भावं प्रतिगृह्य पुनःसंवाहनायोपगच्छति कार्यस्यानिष्पन्नत्वात् । नात्यर्थमिति । कदाचिदतिधैर्याद्दृढभावेव प्रवृत्तिं दर्शयति स्वयं नात्यन्तं संसृज्यते । न च परिहरत्यमुम् । विविक्ते भावं दर्शयति मान्यो ज्ञास्यति । अन्यत्र च्छन्नप्रदेशाज्जनसंबाधे गूढं भावं दर्शयति । कथमसौ गूढ इति[2] ........................................................................ । इति भावपरीक्षा पञ्चचत्वारिंशं प्रकरणम् ॥

भवन्ति चात्र श्लोकाः—

'आदौ परिचयं कुर्यात्ततश्च परिभाषणम् ।
परिभाषणसंमिश्रं मिथश्चाकारवेदनम् ॥
प्रत्युत्तरेण पश्येच्चेदाकारस्य परिग्रहम् ।
ततोऽभियुञ्जीत नरः स्त्रियं विगतसाध्वसः ॥
आकारेणात्मनो भावं या नारी प्राक्प्रयोजयेत् ।
क्षिप्रमेवाभियोज्या सा प्रथमे त्वेव दर्शने ॥
श्लक्ष्णमाकारिता या तु दर्शयेत्स्फुटमुत्तरम् ।
सापि तत्क्षणसिद्धेति विज्ञेया रतिलालसा ॥

---

१. 'हि वेदयमाना'. २. इतः प्रभृत्यध्यायान्त यावट्टीका सर्वेष्वस्मदीयपुस्तकेषु त्रुटितास्ति.

धीरायामप्रगल्भायां परीक्षिण्यां च योषिति ।
एष सूक्ष्मो विधिः प्रोक्तः सिद्धा एव स्फुटं स्त्रियः ॥

इति वात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
भावपरीक्षा तृतीयोऽध्यायः ।

---

.................................................................................

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरह-कातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां पारदारिके पञ्चमेऽधिकरणे भावपरीक्षा
तृतीयोऽध्यायः ।

---

चतुर्थोऽध्यायः ।

................ योगासंभवस्तत्र दूतीप्रयोग इति दूतीकर्माण्युच्यन्ते[1] ।

दर्शितेङ्गिताकारां तु प्रविरलदर्शनामपूर्वां च दूत्योपसर्पयेत्[2] ॥

इङ्गिताकारौ दर्शयित्वा काचिदात्मानं न दर्शयति च कार्ययोगात्ताम्पूर्वां चापरिचिताम् । न दर्शिताकारामित्यर्थः । दूत्योपसर्पयेदात्मसमीपं ढौकयेत् ।

मूलभूतास्तिस्रो दूत्यः—निसृष्टार्था[3] परिमितार्था पत्रहारी चेति । [तासां] सामान्येन कर्माण्याह—

सैनां शीलतोऽनुप्रविश्याख्यानकपटैः[4] सुभगंकरणयोगैर्लोकवृत्तान्तैः कविकथाभिः पारदारिककथाभिश्च तस्याश्च रूपविज्ञानदाक्षिण्यशीलानुप्रशंसाभिश्च तां रञ्जयेत्[5] । कथमेवंविधायास्तवायमित्थंभूतः पतिरिति चानुशयं ग्राहयेत् । न तव सुभगे दास्यमपि कर्तुं युक्त इति ब्रूयात् । मन्दवेगतामीर्ष्यालुतां शठतामकृतज्ञतां चासंभोगशीलतां कदर्यतां चपलतामन्यानि च यानि तस्मिन्गुप्तान्यस्या अभ्याशे सति सद्भावेऽतिशयेन भाषेत । येन च दोषेणोद्विग्नां

---

१. 'उच्यन्ते यदाह'. २. 'दूत्यैवोपसर्पयेत्'. ३. 'विसृष्टार्था'. ४. 'कपटपाठैः'.
५. 'तां रञ्जयेत्' पुस्तकान्तरे नास्ति.

**लक्षयेत्तेनैवानुप्रविशेत् । यदासौ मृगी तदा नैव शशतादोषः । एतेनैव वडवाहस्तिनीविषयश्चोक्तः ॥**

शीलत इति शीलेनादावनुप्रविश्य विश्वासार्थं शीलवती स्यात् । आख्यानकपटैरिति यमुपदिश्याख्यानकानि चित्रलिखितानि । सुभगंकरणैर्योगैर्वक्ष्यमाणैः । लोकवृत्तान्तैः पुराणनिबन्धनैः । कविकथाभिरिति कविभिर्निबद्धाभिर्बिन्दुमतीप्रभृतिभिः । पारदारिककथाभिर्गोतमबृहस्पत्यादिदाराणामिन्द्रचन्द्रादिभिरपहरणकथाभिः । अनुप्रविश्य किं कुर्यादित्याह— तस्या इति नायिकाया रूपं वर्णं संस्थानं च । [विज्ञानदाक्षिण्यं] शास्त्रकलासु दाक्षिण्यमानुकूल्यम् । शीलं सुस्वभावता । तेषां प्रशंसाभिः । कथमेवंविधाया यथोक्तगुणाया इत्थंभूतो वैरूप्यादिप्रकारमापन्नः । अनुशयं विप्रतीसारं ग्राहयेत् [न] भद्रकमापतितं यदहमनेनोढेति । सुभग इत्यामन्त्रणं जनसौभाग्यख्यापनार्थम् । दास्यमपि किमु तव पतित्वम् । मन्दवेगतां च [1]भाषेत यदि सा चण्डवेगा । उपलक्षणं चैतत् । शीघ्रवेगतां च यदि चिरवेगा । असंभोगशीलतामिति विषयान्भोक्तुमशीलताम् । कदर्यतामहीनकामताम् । अन्यानि चेति पारुष्यनैर्घृण्यदाम्भिकत्वादीनि । तस्मिन्पत्यौ । अस्या अभ्याश इति नायिकायाः समीपे यथान्यो न शृणोति । सति सद्भाव इति वि[2]दग्धत्वे सति । अतिशयेन भाषेत येन सा तथैव प्रतिपद्यते । येन चेति प्रत्यक्षीकृतेन तद्दोषेण तेनैवैनामनुप्रविशेत् । कथितमेव मया यथायं दोषबहुल इति । नैव शशतादोषः किं त्वश्वत्वदोषो वाच्यः । एतेनैवेत्यनन्तरोक्तेन स्वजातीयन्यायेन । वडवाहस्तिनीविषययोगे न दोषो वृषत्वमश्वत्वं च । किं तु शशत्वं दोषः ।

दूत्योपसर्पयेदिति सामान्येनोक्तमत्र गोणिकापुत्रदर्शनमाह—

**नायिकाया एव तु विश्वास्यतामुपलभ्य दूतीत्वेनोपसर्पयेत्प्रथमसाहसायां सूक्ष्मभावायां चेति गोणिकापुत्रः ॥**

विश्वास्यतामुपलभ्य दूतीत्वेनोपसर्पयेत्कस्मिन्विषय इत्याह—प्रथमसाह-

---

१. 'भीषयेत्.' २. 'विदग्धा सैव सती.'

सायामिति । या प्रथमं चारित्रं खण्डयति । सूक्ष्मभावायामस्फुटभावायाम् । एतदनुमतमप्रतिषिद्धत्वात् ।

सा नायकस्य चरितमनुलोमतां कामितानि च कथयेत् । प्रसृतसद्भावायां च युक्त्या कार्यशरीरमित्थं वदेत् । शृणु विचित्रमिदं सुभगे, त्वां किल दृष्ट्वामुत्रासावित्थं गोत्रपुत्रो नायकश्चित्तोन्मादमनुभवति । प्रकृत्या सुकुमारः कदाचिदन्यत्रापरिक्लिष्टपूर्वस्तपस्वी । ततोऽधुना शक्यमनेन मरणमप्यनुभवितुमिति वर्णयेत् । तत्र सिद्धा द्वितीयेऽहनि वाचि वक्त्रे दृष्ट्यां च प्रसादमुपलक्ष्य पुनरपि कथां प्रवर्तयेत् । शृण्वत्यां चाहल्याविमारकशाकुन्तलादीन्यन्यान्यपि लौकिकानि च कथयेत्तद्युक्तानि । वृषतां चतुःषष्टिविज्ञतां सौभाग्यं च नायकस्य । श्लाघनीयतां(या) चास्य प्रच्छन्नं संप्रयोगं भूतमभूतपूर्वं वा वर्णयेत् । आकारं चास्या लक्षयेत् ॥

चरितमनुलोमतामानुलोम्यं कामितानि चेति त्रिविधं कामितं रतस्यारम्भे मध्येऽवसाने च । प्रसृतसद्भावायां नायिकायां सत्याम् । अन्यथोक्ते दोषकरणमपि स्यात् । युक्त्या न यथाकथंचित् । यदर्थं दूतीकल्पस्तत्कार्यशरीरम् । इत्थमिति वक्ष्यमाणप्रकारम् । विचित्रमिदं यदन्याभिः काम्यमानोऽपि त्वां दृष्ट्वापि चित्तोन्मादमनुभवति । एवं च सुभग इत्यामन्त्रणमर्थवद्भवति । किलेति त्वं दृष्टासीति परोक्षं ममेत्याह । इत्थं गोत्रपुत्रो न यस्य कस्यचित्पुत्रः । कार्यस्य बलीयस्त्वं दर्शयन्नाह—प्रकृत्येति । अन्यत्रेत्यन्यस्याम् । अपरिक्लिष्टपूर्वस्तद्वचन[कर]त्वात्स्त्रीणाम् । तपस्वीत्यनुकम्पायाम् । शक्यमनेन मरणमप्यनुभवितुं विनश्य(श्च)तीत्यर्थः । तत्रेति तस्मिन्नभिधीयमाने सिद्धा न प्रत्याख्याता । वाचि वक्त्रे दृष्ट्यां च त्रिष्वपि प्रसादं प्रसन्नताम् । कथां प्रवर्तयेत्सामान्याम् । शृण्वत्यां स्वकथाम् । अहल्या गोतमभार्या तयोत्कण्ठितया देवराजः कामितः । अग्निहोत्रकेना(णा)ग्निपरिचरणे वधूर्नियुक्ता । सा च कुण्डादुत्थितेन मूर्तिमताग्निना कामिता ।

१. 'खण्डयित्वा.' २. 'सिद्धां.' ३. 'अन्यानि च तद्वृत्तानि कथयेत्.' ४ 'तद्वृत्तानि.' ५. 'सद्रूपतां.' ६. 'दास्या श्लाघनीयतां.' ७. 'संप्रयोगमभूत वा.'

जातगर्भा च तां श्वशुरः कुलदोषभयादटव्यां तत्याज । प्रसूता च सह सुतेन (सा सुतम् । तं) शबरसेनातिरपत्यबुद्ध्या संवर्धितवान् । तत्पुत्रश्चाजाविकसमूहेन बालवयस्त्वात्क्रीडमानः परिश्रमन्क्षीरपानान्महाबलोऽभूत् । येन शिशुरेव हस्तग्रहणादजाविकं जघान । सेनापतिरप्यन्वर्थमस्य नाम चक्रेऽविमारक इति । ततः प्रवृद्धयौवनः कदाचिद्राज्ञोऽटव्यां समावासितस्य दुहितरं हस्तिना व्यापाद्यमानां तं हत्वा ररक्ष । ततो जातोत्कण्ठा [सा] स्वयमेव पाणिं ग्राहितवती । तद्युक्तानि पारदारिकयुक्तानि । वृषतां व्यवाय(यि)ताम् । चतुःषष्टिविज्ञतामिति गीतादिकायां पाञ्चालिकायां विज्ञताम् । सौभाग्यं पुरुषेणाप्यभिलषत (?) इति । श्लाघनी[य]येति यां स्त्रियं श्लाघते । प्रच्छन्नं लोकस्याविदितम् । एवं चाभूतमपि भूतामिव जातम् । आहि(क्षि)यते गृह्यते भावो येनेति वाक्कायव्यापारोऽत्र गृह्यते ।

तदेव दर्शयन्नाह—

**सविहसितं दृष्ट्वा संभाषते । आसने चोपनिमन्त्रयते । क्वासितं क्व शयितं क्व भुक्तं क्व चेष्टितं किं वा कृतमिति पृच्छति । विविक्ते दर्शयत्यात्मानम् । आख्यानकानि नियुङ्क्ते । चिन्तयन्ती निःश्वसिति विजृम्भते च । प्रीतिदायं च ददाति । इष्टेषूत्सवेषु च स्मरति । पुनर्दर्शनानुबन्धं विसृजाति । साधुवादिनी सती किमिदमशोभनमभिधत्स इति कथामनुबध्नाति । नायकस्य शाठ्यचापल्यसंबद्धान्दोषान्ददाति । पूर्वप्रवृत्तं च तत्संदर्शनं कथाभियोगं च स्वयमकथयन्ती तयोच्यमानमाकाङ्क्षति । नायकमनोरथेषु च कथ्यमानेषु सपरिभवं नाम हसति । न च निर्वदतीति ॥**

सविहसितमिति संभाषणक्रियाविशेषणमेतत् । उपनिमन्त्रयते इदमासनमास्यतामिति । चेष्टितं भ्रान्तम् । कृतमवश्यकर्तव्यमिति पृच्छति । तेन द्वारेण नायकसंबद्धं किंचिदभिधास्यतीति । विविक्ते दर्शयत्यात्मानं रहस्यं

१. 'अयाचितं'. २. 'रक्षतस्ततो.' ३. 'अभिलषितः'. ४. 'श्लाघ्यते'. ५. 'सापि हसित कृत्वा सभाषते'. ६. 'क्व स्थितं शयितं भुक्तं विचेष्टित'. ७. 'अनुयुङ्क्ते चिन्तयति विजृम्भते श्वसिति च'. ८. 'च ता'. ९. 'अकथनीयं'.

किंचिद्वक्ष्यतीति । आख्यानकानि नियुङ्क्तेऽधृतिकथनार्थं नायककथां वा करिष्यतीति । चिन्तयन्तीत्यभ्युद्गत(तद्गत)मानसा निःश्वसिति । विजृम्भते मदनलालसा । प्रीतिदायमिति यत्प्रीत्या दीयते कटकमुत्तरीयं वा तदस्यै ददाति । इष्टेषु कार्येषूत्सवेषु च स्मरति कथमद्य नायातेति । पुनर्दर्शनानुबन्धमिति पुनर्मया द्रष्टव्यासीति प्रेषयति । साधुवादिनीति त्वद्दर्शनं नामश्रवणमपि तं सुखयतीति दूत्या कथायां प्रावर्तितायामाह—साधुवादिनी सती किमिदमशोभनमयुक्तमभिधत्से इत्यभिधाय कथामनुबध्नाति प्रवर्तयति । दोषान्ददातीति शठोऽसौ न निर्व्याजं व्यवहरति लोके । चपलश्च नैकस्यां रमत इति । तत्संदर्शनमिति नायकदर्शनं यत्तस्याः पूर्वप्रवृत्तं यत्र [यत्र] यदा यथा । कथाभियोगं च पुनः पुनः कथायोगं पूर्ववृत्तं स्वयमकथयन्ती लज्जया तयोच्यमानं दूत्या कथ्यमानं काङ्क्षति तेनापि सुखं स्थीयत इति । नायकमनोरथेष्विति स दिवसो भविष्यति यत्र पादपतनैः प्रसादिताया अधरं पास्यामीत्येवमादिषु दूत्या कथ्यमानेषु सपरिभवमिव हसति दूरात् (दुराशा) शठस्य धूर्तस्येति । न च निर्वदति निश्चयेनाभिधत्ते सिध्यत्येव तस्य मनोरथ इति ।

विषये(शेषे)ण नायिकाया आकारे लक्षिते किं फलमित्याह—

**दूत्येनां दर्शिताकारां नायकाभिज्ञानैरुपबृंहयेत् । असंस्तुतां तु गुणकथनैरनुरागकथाभिश्चावर्जयेत् ॥**

नायकाभिज्ञानैरिति नायकस्य तया सह पूर्वं व्यावृत्तानि तैरुपबृंहयेदत्यन्तमनुरक्तां कुर्यात् । असंस्तुतामित्यपरिचिताम् । अभिज्ञानासंभवात् । नायकस्य गुणकथनैरनुरागकथाभिश्चावर्जयेत् ।

अत्राचार्याणां मतभेदमाह—

**नासंस्तुतादृष्टाकारयोर्दूत्यमस्तीत्यौद्दालकिः । असंस्तुतयोरपि संसृष्टाकारयोरस्तीति बाभ्रवीयाः । संस्तुतयोरप्यसंसृष्टाकारयोर-**

१. 'तत्'. २. 'अयुक्तियुक्तं'. ३. 'निश्चय न'. ४. 'नासंस्तुतासंसृष्टाकारयो.; 'नासंसृष्टाकारयोरसंस्तुतयोः'.

**स्तीति गोणिकापुत्रः । असंस्तुतयोरदृष्टाकारयोरपि दूतीप्रत्ययादिति वात्स्यायनः ॥**

नासंस्तुतादृष्टाकारयोरिति ययोर्न परिचयो न चाकारदर्शनं च तस्मिन्विषये न दूत्या कर्म विषयो वास्ति । यत्रेदमुक्तम्—'कृतपरिचयां दर्शितेङ्गिताकारां कन्यामिवोपायतोऽभियुञ्जीत' । संसृष्टाकारयोस्तयोरसंस्तुतयोरप्यवस्थाकारस्यैव दूत्यं मिश्रत्वात् । यथोक्तम्—'आकारेणात्मनो भावं या नारी प्राक्प्रदर्शयेत् । क्षिप्रमेवाभियोज्या सा प्रथमे चैव दर्शने ॥' असंसृष्टाकारयोरिति व्यामिश्रभावत्वात्तदाकारोऽपि संसृष्टशुद्धो भवति । ततश्च तयोरपि । यत्रेदमुक्तम्—'धीरायामप्रगल्भायां' इत्यादि । दूतीप्रत्ययादिति दूतीसामर्थ्यादसंस्तुतयोरपि । अस्मिन्पक्षे त्रितयाभावेऽपि दूत्यमस्ति । यत्रेदं वक्ष्यति—'कौतुकाच्चानुरूपौ युक्ताविमौ परस्परस्य' इति ।

**तासां मनोहराण्युपायनानि ताम्बूलमनुलेपनं स्रजमङ्गुलीयकं वासो वा तेन प्रहितं[1] दर्शयेत् । तेषु[2] नायकस्य यथार्थं नखदशनपदानि तानि तानि च चिह्नानि स्युः । वाससि च कुङ्कुमाङ्कमञ्जलिं निदध्यात् । पत्रच्छेद्यानि नानाभिप्रायाकृतीनि दर्शयेत् । लेखपत्रगर्भाणि कर्णपत्राण्यापीडांश्च । तेषु स्वमनोरथाख्यापनम् । प्रतिप्राभृतदाने चैनां नियोजयेत् । एवं कृतपरस्परपरिग्रहयोश्च दूतीप्रत्ययः समागमः ॥**

तासामित्यसंस्तुतानाम् । मनोहराण्युपायनानि कोशलिकास्ताम्बूला[दी]नि । तेष्वित्युपायनेषु । यथार्थमिति यथाप्रयोजनं[3] च संप्रयोगसूचकमेव चिह्नं स्यात् । कुङ्कुमाङ्कमञ्जलिमिति कुङ्कुमेनाङ्कितमञ्जलिं निदध्याद्यथा प्रतिबिम्बमुत्पद्यते । तत्त्वदाराधनपरोऽयं जन इति ख्यापनार्थम् । नानाभिप्रायाकृतीनीति नानाभिप्राया रतिशोकक्रोधविस्मयादिभावसूचना आकृतिः संस्थानं येषाम् । लेखपत्रगर्भाणि मध्ये लेखपत्रं प्रक्षिप्य वेष्टितानि । आपीडांश्च लेखपत्रगर्भान् । मनोरथाख्यापनमिति[4] लिखित्वा च लेखा(खैः)

---

१. 'प्रहितं च'. २. 'तेषु तु यथार्थं नायकस्य'. ३. 'यथाप्रयोग'. ४. 'ख्यापनानि लिखित्वा च प्रतिप्राभृतं'.

आचक्षीत। प्रतिप्राभृतं प्रतिकोशलिका। कृतपरस्परपरिग्रहयोरिति कृतान्योन्यस्वीकारयोः। दूतीप्रत्ययः (समागमः) तयैव तदानीं निर्दिश्यमानत्वात्।

स तु देवताभिगमने यात्रायामुद्यानक्रीडायां जलावतरणे विवाहे यज्ञव्यसनोत्सवेष्वग्न्युत्पाते चौरविभ्रमे जनपदस्य चक्रारोहणे प्रेक्षाव्यापारेषु तेषु तेषु च कार्येष्विति बाभ्रवीयाः। सखीभिक्षुकीक्षपणिकातापसीभवनेषु सुखोपाय इति गोणिकापुत्रः। तस्या एव तु गेहे विदितनिष्क्रमप्रवेशे चिन्तितात्ययप्रतीकारे प्रवेशनमुपपन्नं निष्क्रमणमविज्ञातकालं च तन्नित्यं सुखोपायं चेति वात्स्यायनः॥

देवताभिगमने देवतामभिपूजयितुं यद्गमनं तत्र। यात्रायां कस्याश्चिद्देवतायाः। जलावतरण इति यदा स्नातुं जनसमूहो जलमवतरति न चालक्ष्यते स्थानात्स्थानान्तरगमनम्। अग्न्युत्पाते दह्यमानात्प्रातिवेश्यगृहाद्गृहान्तरगमनं संभवति। चौरविभ्रमे चौराः किल पतन्तीति। अत्र सिध्यति(?)। चक्रारोपणे जनपदं निवेशयितुं स्वीकारारोपणे(?)। तदाह्यनुस्थापितप्रकारत्वात्स्त्रीजनो न सुखी भवति। तेषु तेषु च कार्येष्विति येषु येषु जनानां संमर्दः शून्यता वा। सुखोपाय इति यदैवेच्छति तदैव भवति। तस्या एवेति नायिकायाः। निष्क्रम्यते प्रविश्यते च येन मार्गेण तदुभयं विदितं वीक्षितं यत्र गेह इति। तदप्यविज्ञातकालमनियतकालं प्रवेशनं निष्क्रमणं चोपपन्नं युक्तमनुपलक्ष्यमाणत्वाद्भवति। प्रवेशनं निष्क्रमणं चानित्यं तस्याः सदासंनिहितत्वात्। न सख्यादिगृहेषु। सुखोपायं च विदितमार्गत्वात्प्रतिविहितदोषत्वाच्च।

सामान्येन कर्माण्युक्त्वा दूतीभेदं प्रदर्शयन्नाह—

निसृष्टार्था परिमितार्था पत्रहारी स्वयंदूती मूढदूती भार्यादूती मूकदूती वातदूती चेति दूतीविशेषाः॥

नायकस्य नायिकायाश्च यथामनीषितमर्थमुपलभ्य स्वबुद्ध्या कार्यसंपादिनी निसृष्टार्था॥

---

१. 'उपपन्नतरकं'. २. 'अविज्ञातकालं तथा निष्क्रमणं च'.

यथामनीषितमिति यथेप्सितम् । ईयमेवाकृतपरस्परपरिग्रहौ (यथा संप्रयुज्येतेति त्रिविधं कार्यं संपादयति ।) यथा तावनुरज्येते यथा कृतपरस्परपरिग्रहौ संप्रयुज्येते तत्रिविधं कार्यं संपादयति । दूती निसृष्टार्थेति इदं करणीयमित्येतावतोऽर्थस्य निसृष्टत्वात् ।

अस्या विषयमाह—

**सा प्रायेण [3]संस्तुतसंभाषणयोः । नायिकया प्रयुक्ता असंस्तुतसंभाषणयोरपि । कौतु[4]काच्चानुरूपौ युक्ताविमौ परस्परस्येत्यसंस्तुतयोरपि ॥**

संभाष्यत इति संभाषा संभाषणम् । 'कृत्यल्युटो बहुलम्' इति ल्युट् । संस्तुतौ च तौ संभाषणौ च । यदि वा संस्तुतं च संभाषणं च ययोरस्तीति मत्वर्थीयोऽकारः । तयोः प्रायेण दृश्यते । अन्यतरप्रयुक्ता विषयशुद्धिगोचरत्वात् नायिकया च प्रयुक्तया प्रायेण संस्तुतभाषणयोरपि परिचितावेव केवलं न तु संभाषणमनयोरस्ति । यत इदमुक्तम्—'आदौ परिचयं कुर्यात्ततश्च परिभाषणम्' इति । तथा संभाषमाणोऽपि नायकः संस्तवत्वात्सुसाधन इति प्रायेण दृश्यते । न तु नायिकेति । प्रायेण युक्ताविमौ समानशीलवयस्त्वात्परस्परसंयोजने युक्ताविति निसृष्टार्थाया यदा कौतुकमुत्पद्यते तस्माच्चासंस्तुतयोरपि द्रष्टव्या न तु प्रायेण । तथाविधार्थस्य कादाचित्कत्वात् ।

**कार्यैकदेशमभियोगैकदेशं चोपलभ्य शेषं संपादयतीति परिमितार्था ॥**

कार्यस्याभियोगस्यैकदेशमसमापितमन्यतरस्मादुपलभ्य शेषमसमापितं सं[5]पादयतीति परिमितार्था । परिमितः परिच्छिन्नोऽर्थोऽस्या इति ।

विषयमाह—

**सा दृष्टपरस्पराकारयोः प्रविरलदर्शनयोः ॥**

---

१. 'अयं'. २. 'निसृष्टार्थत्वात्', 'विस्पष्टार्थत्वात्'. ३. 'संस्तुतपरिभाषणयोः'. ४. 'कौतूहलात्'. ५. 'समापयति'.

दृष्टपरस्पराकारयोरित्याकारग्रहणेन दृष्टं परस्परं (?) नान्यत्किंचित्तयोः कार्यशेषं संभाषणम्। प्रविरलदर्शनयोरभियोगशेषम्।

**संदेशमात्रं प्रापयतीति पत्रहारी ॥**

संदेशमात्रमिति कार्यस्य स्थिरत्वात्तन्मात्रं पत्रेण वचसा [वा] प्रापयतीति पत्रहारीत्यर्थः।

कस्मिन्विषय इत्याह—

**सा प्रगाढसद्भावयोः संसृष्टयोश्च देशकालसंबोधनार्थम् ॥**

प्रगाढसद्भावयोः। संप्रयोगं प्रत्यभिमुखत्वात्। संसृष्टयोश्च कृतसंसर्गयोश्च द्रष्टव्या। किमर्थमित्याह—देशकालेति। अस्मिन्काले स्थाने वानयोः समागम इति प्रबोधनार्थमन्यतरेण युज्यते सा।

स्वयंदूती (विश्लिष्टार्था) द्विविधा। तत्रैका परार्था या परेण प्रयुज्यते। द्वितीयात्मार्था सा स्वयंदूतीति द्वितीयं नाम लभते। तस्या विधिमाह—

**दौत्येन प्रहितान्यया स्वयमेव नायकमभिगच्छेदजानती नाम तेन सहोपभोगं स्वप्ने वा कथयेत्। गोत्रस्खलितं भार्यां चास्य निन्देत्। तद्व्यपदेशेन स्वयमीर्ष्यां दर्शयेत्। नखदशनचिह्नितं वा किंचिद्दद्यात्। भवतेऽहमादौ दातुं संकल्पितेति चाभिदधीत। मम भार्याया का रमणीयेति विविक्ते पर्यनुयुञ्जीत सा स्वयंदूती। तस्या विविक्ते दर्शनं प्रतिग्रहश्च। प्रतिग्रहच्छलेनान्यामभिसंधायास्याः संदेशश्रावणद्वारेण नायकं साधयेत् तां चोपहन्यात्सापि स्वयंदूती। एतया नायकोऽप्यन्यदूतश्च व्याख्यातः ॥**

दौत्येनेति दूतक्रियया अन्यया नायिकया प्रहिता या स्वयमेव नायकमभिगच्छेत्कामयेत्सा स्वयंदूतीति संबन्धः। अभिगमोपायोपदेशमाह—अजानती नामेति। अद्य स्वप्ने त्वयाहं किलोपभुक्तेति। गोत्रस्खलितं निन्देत् ईदृशं तदस्मदीयं नाम भूतं येन त्वया भार्याहूयत इति। भार्यां चास्य निन्देत् युक्तमाह्वयितुं यदेयं रूपवती स्यात्। तद्व्यपदेशेनेति गोत्रस्खलितम-

१. 'संसृष्टयोश्च तत्संसर्गयोः'. २. 'प्रहिता या'. ३. 'तेन सहोपभोगस्वप्नं कथयेद्गोत्रस्खलितं वा'. ४. 'तद्व्यपदेशेन किंचिद्ददेत्'. ५. 'स्वामीर्ष्यां'. ६. 'मम वा त्वद्भार्याया वा आकाररमणीयतेति'. ७. 'दूतत्वच्छलेन'. ७. 'तस्याः'. ८. 'यदायं रूपवती वा'.

पदिश्य स्वयमीर्ष्यां दर्शयति । नखादिचिह्नितं भावसूचनार्थम् । किंचिदिति ताम्बूलावसरे रागादिकम् (?) । ददतीति चानुरागख्यापनार्थमिदं ब्रूयादित्याह—भवतेति । का रमणीयेति । (अथ) को ज्ञास्यतीति ।

**नायकभार्यां मुग्धां विश्वास्यायन्त्रणयानुप्रविश्य नायकस्य चेष्टितानि [1]पृच्छेत् । योगाञ्शिक्षयेत् । साकारं मण्डयेत् । कोपमेनां ग्राहयेत् । एवं च प्रतिपद्यस्वेति श्रावयेत् । स्वयं चास्यां नखदशनपदानि निर्वर्तयेत् । तेन द्वारेण नायकमाकारयेत्सा मूढदूती ॥**

[2]साकारं मण्डयेत् स्वाभिप्रायसूचनार्थम् । कोपमस्मिन्ग्राहयेत् [3]आत्मनोऽपीर्ष्यां दर्शयितुम् । चपलोऽयमन्यस्यां सक्तः [4]किमस्ति येन न कुप्यसीति । एवं च प्रतिपद्यस्व यथाहमाचक्ष इति तां श्रावयेत् । तत्प्रतिकूलां मामनुकूलां ज्ञास्यतीति । स्वयं चास्यां भार्यायां नखदशनपदानि [5]विदधीत संप्रयोगाभिलाषख्यापनार्थम् । तेनेति क्लेशपथोक्तेन (?) द्वारेण । नायकम[6]आकारयेदाकारं ग्राहयेत् येनासौ संप्रयोगार्थिनीति विद्यात् । सेति भार्या । मूढदूती दूत्यर्थापरिज्ञानादियं परीक्षा द्रष्टव्या ।

**[7]तस्यास्तयैव प्रत्युत्तराणि योजयेत् ॥**

तस्या इति नायिकायाः । तयैवेति मूढदूत्या । प्रत्युत्तराणि प्रत्यभियोगान् ।

[8]यदि नायिका 'नायकोऽप्यन्यदूतश्च व्याख्यातः' इत्युक्तं च तत्र गोचरे लज्जायां वा यदि स्वयं दौत्यं न प्रतिपद्येत तदा स्वभार्यया तामाकारयेदित्याह—

**स्वभार्यां वा [9]मूढां प्रयोज्य तया सह विश्वासेन योजयित्वा तयैवाकारयेत् । आत्मनश्च वैचक्षण्यं प्रकाशयेत् । सा भार्या दूती । तस्यास्तयैवाकारग्रहणम् ॥**

मूढामज्ञाम् । विज्ञा हि विकल्पयति मामनया योजयतीति । विश्वासेन हेतुना योजयित्वा तयैवाकारयेत्स्वभार्यया आकारं ग्राहयेत् । वैचक्षण्यं

---

१. 'पृच्छति–शिक्षयति–मण्डयति–ग्राहयति–श्रावयति–निर्वर्तयति'. २ 'स्वाकार'. ३. 'आत्मना'. ४. 'किमस्मि'. ५. 'न्यवधीत'. ६. 'आकारयति'. ७. 'तस्या'. ८. 'यदि नायिकामिष्टनायकोऽप्येतस्य दूतो व्याख्यातः'. ९. 'गूढ'.

कलाकौशलं तथैव प्रकाशयेत् । सा भार्यादूती पत्रहारीप्रकारा । तथैव भार्यादूत्या तस्या नायिकाया आकारग्रहणं प्रत्युत्तरं प्रथममित्यर्थः ।

यदि स्वभार्याया न गोचरस्तदा किं प्रतिपद्येतेत्याह—

**बालां वा परिचारिकामदोषज्ञामदुष्टेनोपायेन प्रहिणुयात् । तत्र स्रजि कर्णपत्रे वा गूढलेखनिधानं नखदशनपदं वा सा मूकदूती । तस्यास्तथैव प्रत्युत्तरप्रार्थनम् ॥**

बालां वा परिचारिकां नायकोचिताम् । अदोषज्ञामधूर्ताम् । अदुष्टेनेति बालक्रीडनकाद्युपायेण । नायिकागृहं प्रतिदिनं प्रहिणुयात् । तत्रेति तस्यां जातपरिचयायां गूढलेखविधानं च वाचयित्वा मां नायकोऽप्याकारयतीति सा प्रतिपद्यते । नखदशनपदानि च स्रजि कर्णपत्रे वा निदध्यादिति योज्यम् । सा मूकदूती । अर्थानभिभावनात् । इयं पत्रहारीप्रकारा । तस्या नायिकायास्तथैव प्रत्युत्तरप्रार्थनम् । यदि तया कर्णपत्रात्पत्रं[1] गृहीतं किमत्र मृगयसीति ।

यत्र बालाया अप्यगोचरस्तत्र किं प्रतिपद्येतेत्याह—

**पूर्वप्रस्तुतार्थलिङ्गसंबद्धमन्यजनाग्रहणीयं[2] लौकिकार्थं द्व्यर्थं वा वचनमुदासीना या श्रावयेत्सा वातदूती । तस्या अपि तथैव प्रत्युत्तरप्रार्थनमिति तासां[3] विशेषाः ॥**

पूर्वप्रस्तुतेति नायिकानायकयोर्यत्पूर्वप्रस्तुतं वृत्तं तस्य चिह्नं तेनाभिज्ञानार्थं संबद्धं वचनम् । अन्यजनाग्रहणीयम् । तस्यामेव तदर्थस्य ग्रहणात् । अत्र म्लेच्छितकविकल्पकला द्रष्टव्या । लौकिकार्थं च लोकविदितार्थम् । द्व्यर्थमप्रस्तुतार्थस्यापि वाचकत्वात् । उदासीना या न क्वचित्प्रतिप्राययाए(श्रावयेत्) सा वातदूतीत्युच्यते । पत्रहारीप्रकारैव चेति । तथैव प्रत्युत्तरप्रार्थनं तस्य हि प्रश्नस्य प्रतिप्रश्नं याचेदित्यर्थः । तासां विशेषा निसृष्टार्थादीनां स्वयंदूत्यादयो विशेषाः । एवमन्येऽपि यथासंभवमत्रैव द्रष्टव्याः । यथाहुर्बाभ्रवीयाः—'पुत्रिका चित्ररूपाणि पशवः शुकसारिकाः । सर्वेषां गूढभावानां दूतकर्माणि कुर्वते ॥' इति ।

---

१. कर्णपत्रान्तरपत्रं'. २. 'स्वजनाग्रहणीयार्थं'. ३. 'दूतीं'.

यास्तिस्रो दूत्य उक्तास्ताः का इत्याह—

भवन्ति चात्र श्लोकाः—

विधवेक्षणिका दासी भिक्षुकी शिल्पकारिका ।
प्रविशत्याशु विश्वासं दूतीकार्यं च विन्दति ॥

प्रविशति । गृहमिति शेषः । विश्वासं दूतीकार्यं च विन्दति लभते ।

संक्षेपेण दूतीकर्माण्याह—

विद्वेषं ग्राहयेत्पत्यौ रमणीयानि वर्णयेत् ।
चित्रान्सुरतसंभोगानन्यासामपि दर्शयेत् ॥[1]
नायकस्यानुरागं च पुनश्च रतिकौशलम् ।
प्रार्थनां चाधिकस्त्रीभिरवष्टम्भं च वर्णयेत् ॥

विद्वेषं ग्राहयेदिति तस्य रूपादिप्रशंसाभिः 'अनुशयं ग्राहयेत्' इत्यादिना रमणीयानि वर्णयेत् । 'नायकस्य चरितमनुलोमतां कामितानि च कथयेत्' इत्यनेन । चित्रान्सुरतसंभोगान्दर्शयेत् (इत्यादिना) 'वृषतां चतुःषष्टिविज्ञतां संवर्णयेत्' इत्यनेन । अन्यासामपि तत्सखीनामग्रतो न केवलं नायिकायाः । यतस्तास्तस्यै कथयन्ति । नायकस्यानुरागं वर्णयेत् 'शृणु विचित्रं' इत्यादिना । पुनश्च रतिकौशलं वर्णयेत्प्रधानत्वादस्य । प्रार्थनां चाधिकस्त्रीभिः 'श्लाघनीयया चास्य प्रच्छन्नं संयोगं भूतमभूतपूर्वं वा वर्णयेत्' इत्यनेन । अवष्टम्भं नायिकाविषयं निश्चयं तदङ्कशयनं श्मशानशयनं वा । यदुक्तम्—'शक्यमनेन मरणमप्यनुभवितुम्' इति ।

प्रथमेऽधिकरणे पटुतादयो गुणा उक्ता दूतानां तेषां पटुता प्रधानमिति दर्शनार्थमाह—

असंकल्पितमप्यर्थमुत्सृष्टं दोपकारणात् ।
पुनरावर्तयत्येव दूती वचनकौशलात् ॥

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
दूतीकर्माणि चतुर्थोऽध्यायः ।

---

१. 'विचित्रान्रतिसंयोगाननेकानपि दर्शयेत्'.

दोपकारणादिति व्यावृत्तिकारणात् । नापानकयोग्य इत्यर्थः परित्यक्तः (?) । सरवकस्थितीनविचिन्तितः (?) । दूती पुनस्तमावर्तयत्यभिमुखीकरोति । वचनकौशलात्पटुतायोगात् । इति दूतीकर्माणि षट्त्रिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां पारदारिके पञ्चमेऽधिकरणे दूतीकर्माणि चतुर्थोऽध्यायः ।

---

पञ्चमोऽध्यायः ।

ईश्वराणां परगृहप्रवेशाभावात्कामितं न संभवति प्रायशस्तत्र कथम[1]धिक्रियत इति तदनन्तरमीश्वरकामितमुच्यते । यदाह—

**न राज्ञां महामात्राणां वा परभवनप्रवेशो विद्यते । महाजनेन हि चरितमेपां दृश्यतेऽनुविधीयते च ॥**

जनसमूहेनैतेषां चरितं दृश्यते सर्वदा तदनुगतत्वात् । यदि दृष्टं तदा को दोप इत्याह—अनुविधीयते चेति । 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः' इति ।

तदेव दृष्टान्तेन दर्शयति—

**सवितारमुद्यन्तं त्रयो लोकाः पश्यन्ति अनूद्यन्ते[2] च । गच्छन्तमपि पश्यन्त्यनुप्रतिष्ठन्ते[3] च ॥**

सविता लोकेपु श्रेष्ठः । तमुद्यन्तं पश्यन्तीति चरितदर्शनम् । अनूद्यन्ते च तस्मिंस्तूद्गते सुप्ताः प्रबुध्यन्त इति चरितानुविधानम् । गच्छन्तमपि देशान्तरे पश्यन्तीति चरितदर्शनम् । अनुप्रतिष्ठन्ते च यथास्वं क्रियासु प्रवर्तन्त इति चरितानुविधानम् ।

**तस्मादशक्यत्वाद्गर्हणीयत्वाच्चेति[4] न ते वृथा किंचिदाचरेयुः ॥**

परगृहं प्रविश्य यद्यत्त(यदन्य)दाराभिगमनं तदशक्यम् । महाजनेन दृश्यमानत्वात् गर्हणीयत्वाच्चेति इतरोऽपि जनोऽनुविदध्यादिति शिष्टानां

---

१. 'कथा'. २. 'अनुद्यन्त'. ३. 'प्रतिष्ठन्तं'. ४. 'इति' पुस्तकान्तरे नास्ति.

कुत्सनीयं तस्मात्तदर्थं न ते किंचिदनुष्ठानमाचरेयुः । निष्फलत्वात्स्वपरिग्रहेष्वपि सुखसंभवात् ।

**अवश्यं त्वाचरितव्ये योगान्प्रयुञ्जीरन् ॥**

अन्यकारणवशात्स्थानान्तरयायिनो वा रागवशादाचरितव्ये । योगानिति प्रयोगान् । ते द्विविधाः—प्रच्छन्नाः प्रकाशाश्च । ईश्वरा अपि द्विविधाः—क्षुद्रा मुख्याश्च । तत्र क्षुद्रानधिकृत्य प्रच्छन्नमाह—

**ग्रामाधिपतेरायुक्तकस्य हलोत्थवृत्तिपुत्रस्य यूनो ग्रामीणयोषितो वचनमात्रसाध्याः । ताश्चर्षण्य इत्याचक्षते विटाः ॥**

ग्रामभुक्त्या युक्तस्याधिकृतस्य । हलोत्थवृत्तिर्ग्रामकूटः । तस्य ग्रामीणैः कर्षणहलिका दीयन्ते । तस्य पुत्रस्य । यून इति प्रत्येकं योज्यम् । यत्तेषामीश्वरत्वाद्वचनमात्रसाध्या नाभियोगमपेक्षन्ते । किं सर्वा एवेत्याह—ताश्चर्षण्य इति संज्ञा इत्यर्थः ।

**ताभिः सह विष्टिकर्मसु कोष्ठागारप्रवेशे द्रव्याणां निष्क्रमणप्रवेशनयोर्भवनप्रतिसंस्कारे क्षेत्रकर्मणि कर्पासोर्णातसीशणवल्कलादाने[1] सूत्रप्रतिग्रहे द्रव्याणां क्रयविक्रयविनिमयेषु तेषु तेषु च कर्मसु संप्रयोगः[2] ॥**

ताभिरिति चर्षणीभिः सह संप्रयोग इति वक्ष्यमाणेन संबन्धः । अत्रोपायमाह—विष्टिकर्मस्विति । सक्तमात्रेण (?) विना यानि पेषणकुट्टनरन्धनादीनि कार्याणि तानि विष्टिकर्माणि । कोष्ठागारप्रवेशे तत्रत्यं कर्म कर्तुं प्रविष्टाभिः द्रव्याणां धान्यादीनां कोष्ठागारान्निष्क्रामणे तत्र च प्रवेशे तत्र कर्म कर्तुं प्रविष्टाभिः । क्रियमाणे भवनप्रतिसंस्कारे गृहमण्डने । क्षेत्रकर्मणि बीजानां रक्षणोत्पाटनगदी····(?)। कर्पासस्योर्णाया अतसीशणवल्कलस्य च भाण्डागारात्सूत्रकर्तनाय दाने । सूत्रस्य च कर्तितस्य प्रतिग्रहे स्वीकारे कर्तनिकाभिः । द्रव्याणामिति धान्यादीनाम्। क्रयविक्रयविनिमयेष्विति क्रेतुं विक्रेतुं वा प्रविष्टाभिः । तेषु तेषु चेति राजकुलप्रवेशहेतुषु ।

---

१. 'कर्पासातसीशणोर्णा'. २. 'संप्रयोगा'.

**तथा व्रजयोषिद्भिः सह गवाध्यक्षस्य ॥**

गोपीभिर्गवाध्यक्षस्य दधिमथनादिकर्मसु ।

**विधवानाथा प्रव्रजिताभिः सह सूत्राध्यक्षस्य ॥**

स ह्यधिष्ठाय राजकीयसूत्राणि विधवादिभिः कर्तनिकाभिः कर्तयति ।

**[1]मर्मज्ञत्वाद्रात्रावटने चाटन्तीभिर्नागरस्य ॥**

नगरे नियुक्तस्य दाण्डपाशिकस्य स्त्रीमर्मज्ञत्वाद्रात्रावटने चाटन्तीभिः ।

**क्रयविक्रये पण्याध्यक्षस्य ॥**

राजकीयपण्यानि क्रयितुं विक्रयितुं च नियुक्तस्य क्रेतृविक्रेतृस्त्रीभिः । संप्रयोग इति सर्वत्र योज्यम् ।

मुख्यानधिकृत्य प्रच्छन्नमाह—

**अष्टमीच[2]न्द्रकौमुदीसुवसन्तकादिषु पत्तननगरखर्[3]वटयोषितामीश्वरभवने सहान्तःपुरिकाभिः प्रायेण क्रीडा ॥**

कौमुदी कोजागरः । नागरकर्विटौ (नगरखर्वटौ) व्याख्यातौ । पत्तनादिकमुपलक्षणार्थम् । द्रोणमुखश्च । ईश्वरभवन इति यस्य नगरादि [न] विद्यते तस्य भवने । अन्तःपुरिका अन्तःपुरस्त्रियः ।

**तत्र [4]चापानकान्ते नगरस्त्रि[5]यो यथापरिचयमन्तःपुरिकाणां पृथक्पृथग्भोगावासकान्प्रविश्य कथाभिरासित्वा पूजिताः प्रपीताश्चोपप्रदोषं निष्क्रामयेयुः ॥**

तत्रेति क्रीडायाम् । आपानकान्त इति अन्तःपुरिकाभिः सर्वाभिः सह पेयं पीत्वा । तदन्ते विशेषविधिमाह—नगरस्त्रिय इति । अत्रापि नगरख[6]र्वटद्रोणमुखस्त्रियश्च । भोगावासकानिति परिभोगप्रदेशान् । कथाभिरासित्वेत्यन्तःपुरिकाभिः सह कथाभिः स्थित्वा । पूजिता अन्तःपुरिकाभिः । प्रपीता इति प्रपीतमासां विद्यत इति मत्वर्थेऽकारः । उपप्रदोषं प्रदोषसमीपे निष्क्रामन्ति दिनं राजभवनेऽतिवाह्य ।

**तत्र प्रणिहिता राजदासी [7]प्रयोज्यायाः पूर्वसंसृष्टा तां तत्र सं-**

---

१. 'मर्मज्ञभावाद्रात्रावटतः कुल्टायोपाभिर्वणिग्योपाभिर्नागरिकस्य'. २. 'चन्द्रक'. ३. 'कर्वट'. ४. 'च' पुस्तकान्तरे नास्ति. ५. 'योषितः'. ६. 'कर्वट'. ७. 'प्रयोज्यया'.

भाषेत । रामणीयकदर्शनेन योजयेत् । प्रागेव स्वभवनस्थां ब्रूयात् । अमुष्यां क्रीडायां तव राजभवनस्थानानि रामणीयकानि दर्शयिष्यामीति काले च योजयेत् । बहिः प्रवालकुट्टिमं ते दर्शयिष्यामि । मणिभूमिकां वृक्षवाटिकां मृद्वीकामण्डपं समुद्रगृहं[1]प्रासादान्गूढभित्तिसंचारांश्चित्र[2]कर्माणि क्रीडामृगान्यन्त्राणि शकुनान्व्याघ्रसिंहपञ्जरादीनि च यानि पुरस्ताद्वर्णितानि स्युः । एकान्ते च तद्गतमीश्वरानुरागं श्रावयेत् । संप्रयोगे[3] चातुर्यं चाभिवर्णयेत् । अमन्त्रश्रावं[4] च प्रतिपन्नां योजयेत् ॥

तत्रेत्यष्टमीचन्द्रादिषु । प्रणिहिता राज्ञा प्रयुक्ता । प्रयोज्याया इति यामभिगन्तुमिच्छेत् । पूर्वसंसृष्टेति पूर्वमेव ग्रहयित्वा (?) संसर्गं कृतवती । तामिति प्रयोज्यां राजभवने प्रविष्टां भाषयेत्कुशलपूर्वकम् । रामणीयकदर्शनेन चित्तहरणार्थम् । प्रागेवेति राजभवनप्रवेशात् स्वभवनस्थां ब्रूयादौत्सुक्यकारणार्थम् । अमुष्यामिति काले च प्रज्ञाते योजयेत् । रामणीयकरोचनान्याह—बहिरिति । प्रवालकुट्टिमं मणिभूमिकां स्फटिकाद्याकारकृतं कुट्टिमं भूमिम् । वृक्षवाटिकां पुष्पफलसमृद्धाम् । मृद्वीकामण्डपं द्राक्षामण्डपम् । समुद्रगृहप्रासादानिति गूढभित्तिमध्यगतत्वात् जलसंचारा येषु समुद्रगृहेषु प्रासादेष्वपि निष्कासनप्रवेशनलक्षणसंचारानिति योज्यम् । यन्त्राणि सजीवानि निर्जीवानि घटितान्यन्यानि च यानि कौतुकानि । क्रीडार्था ये मृगाः । शकुनकान्हंसादीन् । व्याघ्रपञ्जरान्व्याघ्राधिष्ठितान् । कस्याश्चिदेव कचित्कौतुकमुत्पद्यत इत्यनेकोपदर्शनम् । एकान्त इति । अनुपग्रहोचितत्वादेव[5] प्रवेशोऽपि[6] तस्या उचित इति ।

अप्रतिपद्यमानां स्वयमेवेश्वर[7] आगत्योपचारैः सान्त्वितां रञ्जयित्वा संभूय च सानुरागं विसृजेत् । प्रयोज्यायाश्च पत्युरनुग्रहोचितस्य दारान्नित्यमन्तःपुरमौचित्यात्प्रवेशयेत्[8] । तत्र प्रणिहिता

१. 'गृहं प्रासादांश्च'. २. 'च प्रतिभवनं चित्रकर्माणि'. ३. 'संप्रयोगं चाभि—'; 'संप्रयोगे चार्यतिं चाभि—'. ४. 'श्राविता'. ५. 'अनुग्रहोचित'. ६. 'प्रदेशोऽपि'. ७. 'च स्वयमीश्वर आर्योपचारैः सान्त्वनैः'. ८. 'प्रवेशयेयुः'.

राजदासीति समानं पूर्वेण । अन्तःपुरिका वा प्रयोज्यया सह स्वचेटिकासंप्रेषणेन प्रीतिं कुर्यात् । प्रसृतप्रीतिं च सापदेशं दर्शने नियोजयेत् । प्रविष्टां पूजितां पीतवतीं प्रणिहिता राजदासीति समानं पूर्वेण । यस्मिन्वा विज्ञाने प्रयोज्या विख्याता स्यात्तद्दर्शनार्थमन्तःपुरिका सोपचारं तामाह्वयेत् । प्रविष्टां प्रणिहिता राजदासीति समानं पूर्वेण । उद्भूतानर्थस्य भीतस्य वा भार्यां भिक्षुकी ब्रूयात् असावन्तःपुरिका राजनि सिद्धा गृहीतवाक्या मम वचनं शृणोति । स्वभावतश्च कृपाशीला तामनेनोपायेनाधिगमिष्यामि । अहमेव ते प्रवेशं कारयिष्यामि । सा च ते भर्तुर्महान्तमनर्थं निवर्तयिष्यतीति प्रतिपन्नां द्विस्त्रिरिति प्रवेशयेत् । अन्तःपुरिका चास्या अभयं दद्यात् । अभयश्रवणाच्च संप्रहृष्टां प्रणिहिता राजदासीति समानं पूर्वेण । एतया वृत्त्यर्थिनां महामात्राभितप्तानां बलाद्विगृहीतानां व्यवहारे दुर्बलानां स्वभोगेनासंतुष्टानां राजनि प्रीतिकामानां राज्यजनेषु पङ्क्तिं(व्यक्तिं)मिच्छतां सजातैर्बाध्यमानानां सजातान्बाधितुकामानां सूचकानामन्येषां कार्यवशिनां जाया व्याख्याताः ॥

तत्रेति प्रविष्टायां प्रयोज्यायां प्रणिहिता राजदासीत्यनेन पूर्वोक्तेन समानम् । प्रयोगद्वयेऽप्यत्र प्रयोज्यानुप्रवेशस्य सुकरत्वात् । दास्येव प्रयुक्ता । चेटिका त्वीश्वरप्रयुक्तान्तःपुरिका । संप्रेषणेन प्रीतिं कुर्यादात्मनो विश्वासासंभवात् । प्रसृतप्रीतिं प्रयोज्यां यादृशं (?) सापदेशं च किंचित्कार्यमपदिश्य तथैव चेट्या दर्शनेऽपि नियोजयेत् यथा मां द्रष्टुमागच्छतीति । यस्मिन्वेति गीततन्त्रीविज्ञाने विख्याता प्रवीणा । सोपचारमिति वस्त्रादिदानपूर्वकमाह्वयेत् । अत्र च प्रयोगद्वये प्रवेशस्य संभवात् अन्तःपुरिका द्वितीया प्रयुक्ता । उद्भूतानर्थस्य त्विति । अर्थप्रतिघाति यत्कार्यं तदुत्पन्नं

१. 'अन्तःपुरिकया च'. २. 'प्रीतिवर्ती'. ३. 'तामाकारयेत्.' ४. 'सा ते भर्तुस्तथानर्थं. ५. 'चाभयमस्याः'. ६. 'वाह्यजने व्यक्तिं'. ७. 'सजातीयैः'. ८. 'सजातीयान्'. ९. 'च कार्यार्थिनां व्यसनिनां'.

यस्य । भीतस्य चेति यो राजकुलाद्भीतस्तस्य जायां भिक्षुकी राजप्रणिहिता ब्रूयात् । तस्मिन्प्रयोगे तृतीयापरा प्रयुक्ता । सा ह्येवंविधं कार्यं बुद्ध्वा प्रयोज्यामन्तःपुरिकया योजयति । राजनि सिद्धा प्रसादयितृका (प्रसादयित्तका) । गृहीतवाक्येति सा यदाह तद्राजा करोति मम वचनं शृणोतीत्यात्मनो गृहीतवाक्यतामाह । स्वभावतः कृपाशीलेत्युक्त्या वाभावं (स्वभावं) दर्शयति । तामनेनेति तदानीं बुद्धिविकल्पितेनोपायेन । कथं मम प्रवेश इति चेदाह—अहमेवेति । अनर्थमित्युपलक्षणार्थम् । भयं च निवर्तयिष्यति । द्विस्त्रिरिति प्रवेशयेत्पश्चाज्जातपरिचया स्वयमेव प्रवेक्ष्यति । अभयमस्यै दद्यात् । अभयं निवेदितवत्यै संप्रहृष्टां न तूद्विग्नां संभाषेत । एतयेति उद्भूतानर्थभीतजायया । वृत्त्यर्थिनां जीवनार्थिनाम् । महामात्राभितप्तानां महामात्रैः प्रभवद्भिः पीडितानाम् । बलाद्विगृहीतानां राजवत्त्वात् । व्यवहारे दुर्बलानां न्यायबलाभावात् । स्वभोगेन तावन्मात्रेणासंतुष्टानामधिकमिच्छताम् । राजनि प्रीतिकामानां क्वचित्परिभवं मम मा कार्षीदिति । राज्यजनेषु पङ्क्ति (व्यक्ति) प्रसिद्धिमिच्छतां राज्ञः प्रसाद्योऽयमिति । सजातैर्दायादैः । सूचकानामुद्भाषकाणाम् । कार्यवशिनामिति कार्यार्थिनाम् । जाया व्याख्याताः । अत्रापि भिक्षुकी ब्रूयादिति योज्यम् । एते प्रच्छन्नयोगा अत्याजितस्वकुलासु स्त्रीषु ।

अन्येन वा प्रयोज्यां सह संसृष्टां [1]संग्राह्य दास्यमुपनीतां क्रमेणान्तःपुरं प्रवेशयेत् । प्रणधिना चायतिमस्याः संदूष्य राजनि विद्विष्ट इति कलत्रावं[2]ग्रहोपायेनैनामन्तःपुरं प्रवेशयेदिति प्रच्छन्नयोगाः । एते राजपुत्रेषु प्रायेण ॥

येन केनचित्संसृष्टा कृतसंसर्गा । संग्राह्येति नागरकेण विधिना ग्राहयित्वा । दास्यमुपनीतामिति प्रकाशविनष्टाया वेश्याविशेषत्वात् । तां सामान्यस्त्रियं कारयित्वा क्रमेणान्तःपुरं प्रवेशयेत् । न सहसा निरन्तरमेव । मा भूदेतत्कृतः प्रयोग इति । प्रणधिना चारेण संदूष्य संभूतेनैव दोषेण ।

---

१. 'सगृह्य'. २. 'वग्रहोपायेनान्तःपुरं'.

अन्यथा अदुष्टदूषणमधर्माय भवति। एवं चास्य कलत्रावग्रहो न दोषाय। एतद्योगद्वयं त्याजितस्वकुलासु। एते राजपुत्रेषु प्रायेण न तु राज्ञः। तस्य मण्डले प्रतिष्ठितत्वात्कादाचित्काः स्युः।

ननु परभवनप्रवेशेनापि च्छन्नयोगाः संभवन्ति यदा दूत्या प्रयोज्यां संकेत्य प्रच्छन्नः प्रविशति। न च तदानीं चरितं महाजनेन दृश्यतेऽनुविधीयते चेत्यत्राह—

**न त्वेवं परभवनमीश्वरः प्रविशेत्॥**

प्रविशेत्प्रच्छन्नोऽपीत्यर्थः।

अत्र विवृतं दोषं दर्शयति—

**आभीरं हि कोट्टराजं परभवनगतं भ्रातृप्रयुक्तो रजको जघान। काशिराजं जयसेनमश्वाध्यक्ष इति॥**

गूर्जराते कोट्टं नाम स्थानं तस्य राजानमाभीरनामानं परभवनगतमिति श्रेष्ठिवसुमित्रस्य भार्यामधिगन्तुं तद्भवनगतं जघान।

प्रकाशास्तु योगा राज्ञः प्रायेण द्रष्टव्याः। यदाह—

**प्रकाशकामितानि तु देशप्रवृत्तियोगात्॥**

देशप्रवृत्तियोगादिति यो यस्मिन्देशे समाचारः पूर्वैः स्थापितस्तद्योगादिति। अतो दृश्यमानान्यपि कामितानि महाजनेन नानुविधीयन्ते। राज्ञामेव तत्राधिकारात्।

**प्रत्ता जनपदकन्या दशमेऽहनि किंचिदौपायनिकमुपगृह्य प्रविशन्त्यन्तःपुरमुपभुक्ता एव विसृज्यन्त इत्यान्ध्राणाम्। महामात्रेश्वराणामन्तःपुराणि निशि सेवार्थं राजानमुपगच्छन्ति वात्सगुल्मकानाम्। रूपवतीर्जनपदयोषितः प्रीत्यपदेशेन मासं मासार्धं वातिवासयन्त्यन्तःपुरिका वैदर्भाणाम्। दर्शनीयाः स्वभार्याः प्रीतिदायमेव महामात्रराजभ्यो ददत्यपरान्तकानाम्। राजक्रीडार्थं**

१. 'जयत्सेनं'. २. 'ततः'. ३. 'प्रविश्यान्तःपुरं'. ४. 'चान्तःपुराणि'. ५. 'अर्धमासं वा वासयन्ति'.

**नगरस्त्रियो जनपदस्त्रियश्च सङ्घश एकशश्च राजकुलं प्रविशन्ति सौराष्ट्रकाणामिति ॥**

प्रत्ता इत्यूढा । औपायनिकमुपायप्रयोजनं वस्त्रादि । उपभुक्ता राज्ञा संप्रयुक्ताः । विसृज्यन्ते त्यक्ष्यन्ते इत्यान्ध्राणां प्रवृत्तिः । महामात्राणामीश्वरा मुख्यास्तेषामन्तःपुराणि स्त्रियः । सेवार्थमिति कर्तुं (रन्तुम्) । वात्सगुल्मकानामिति दक्षिणापथे सोदर्यौ राजपुत्रौ वत्सगुल्मौ ताभ्यामध्यासितो देशो वात्सगुल्मक इति प्रतीतः । तत्रभवानामियं प्रवृत्तिः । रूपवतीरिति प्रशंसायां वतिः । प्रीत्यपदेशेनेति प्रीतिस्तत्रापदेशः संप्रयोगस्तु प्रयोजनम् । नगरं यत्र राजधानी तत्र स्त्रियो नगरस्त्रियः । ततो बाह्या जनपदस्त्रियः । सङ्घश इति संभूय । एकश इत्येकैकशश्च सौराष्ट्रकाणामिति ।

उक्तमनुक्तं चोपसंहरन्नाह—

**श्लोकावत्र भवतः—[1]**

**'एते चान्ये च बहवः प्रयोगाः पारदारिकाः ।**
**देशे देशे प्रवर्तन्ते राजभिः संप्रवर्तिताः[2] ॥**
**न त्वेवैतान्प्रयुञ्जीत राजा लोकहिते रतः ।**
**निगृहीतारिषड्वर्गस्तथा विजयते महीम् ॥'**

**इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरण ईश्वरकामितं पञ्चमोऽध्यायः ।**

एते चेति अन्ये चैतत्प्रकाराः । पारदारिकाः परदारप्रयोजना एते देशे देशे प्रवर्तन्ते पूर्वराजभिः संप्रवर्तितत्वात् । स महीपतिर्न विजयते । अनिगृहीतारिषड्वर्गत्वात् । विजयस्य कारणं कामक्रोधलोभमानमदहर्षजय इति । ईश्वरकामितं सप्तचत्वारिंशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्याया पारदारिके पञ्चमेऽधिकरण ईश्वरकामित पञ्चमोऽध्यायः ।

---

१. 'भवतश्चात्र श्लोकौ'. २. 'पूर्वराजप्रवर्तिताः'.

षष्ठोऽध्यायः ।

यथेश्वराणां परभवनप्रवेशो नास्ति तथान्तःपुरिकाणां नागरकाणां चान्तःपुरप्रवेश (इत्यन्तःपुरिकाणां नागरिकाणां) चेत्युभयथाप्यन्तःपुरिकावृत्तमुच्यते । तत्र पूर्वमधिकृत्याह—

**नान्तःपुराणां रक्षणयोगात्पुरुषसंदर्शनं विद्यते पत्युश्चैकत्वादनेकसाधारणत्वाच्चातृप्तिः । तस्मात्तानि प्रयोगत एव परस्परं रञ्जयेयुः ॥**

नान्तःपुराणामिति । तस्मादन्तःपुरिकाणामित्यर्थः । तासां पतिरस्त्येवेति चेदाह—पत्युश्चैकत्वादिति । एकोऽपि तृप्तिं कुर्यादिति चेदाह—अनेकसाधारणत्वाच्चेति । स हि तासां साधारणः कथं तृप्तिं कुर्यात् । प्रयोगत एवेति । प्रयोगतः । परस्परमिति या रतिमन्यस्यां कुर्यात्तस्यामन्येति ।

प्रयोगमाह—

**धात्रेयिकां सखीं दासीं वा पुरुषवदलंकृत्याकृतिसंयुक्तैः कन्दमूलफलावयवैरपद्रव्यैर्वात्माभिप्रायं निवर्तयेयुः ॥**

पुरुषवदलंकृत्येति । तत्र हि पुरुषबुद्ध्यातिमात्रे भावे तृप्तिरतिशयितवती भवति । आकृतिसंयुक्तैरिति पुरुषेन्द्रियसंस्थानवद्भिः । कन्दमूलफलावयवैरिति तत्र कन्दा आलुककदल्यादीनाम् । मूलं तालकेतकीनाम् । फलमलाबुकर्कटिकादीनाम् । एतानि संशोध्य ग्राह्याणीति । अवयवग्रहणे फलं दर्शयति—आत्माभिप्रायमिति । रागभावं निवर्तयेयुः । केवलं श्रद्धाविनो[दनं] न तथाविधः कामः स्यादप्राधान्यात् ।

**पुरुषप्रतिमा अव्यक्तलिङ्गाश्चाधिशयीरन् ॥**

पुरुषप्रतिमाः पुरुषदेहाः । अव्यक्तलिङ्गा अजातश्मश्रुत्वात्स्त्रीरूपाभासा इत्यर्थः ।

एकोऽपि तृप्तिं कुर्याद्यः कामार्तासु कृपाशीलो यथा प्राच्यानामित्याह—

**राजानश्च कृपाशीला विनापि भावयोगादायोजितापद्रव्या या-**

---

१. 'फलं'.

वदर्थमेकया रात्र्या बह्वीभिरपि गच्छन्ति । यस्यां तु प्रीतिर्वासक ऋतुर्वा तत्राभिप्रायतः प्रवर्तन्त इति प्राच्योपचाराः ॥

विनापि भावयोगादित्यजातसंप्रयोगेच्छा अपि । आयोजितापद्रव्या इति कल्प्यामावद्धकृत्रिमसाधनाः । यावदर्थं यावत्तृप्ति बह्वीभिरपि स्त्रीभिः सह गच्छन्ति संप्रयोगमिति । अभिप्रायतो भावेनेत्यर्थः । अयमन्तःपुरविषये योग उक्तः ।

स्त्रीयोगेणैव पुरुषाणामप्यलब्धवृत्तीनां वियोनिषु विजातिषु स्त्रीप्रतिमासु केवलोपमर्दनाच्चाभिप्रायनिवृत्तिर्व्याख्याता ॥

यथा स्त्रीणां क्वचित्पुरुषबुद्धिषु स्वाभिप्रायनिवृत्तिरेवं पुरुषाणामपि केषामित्याह—अलब्धवृत्तीनामिति । ये स्त्रियं न प्राप्नुवन्ति । वियोनिषु चलोरुकरव्यादिषु (?) । विजातिषु एडीवडवादिषु । स्त्रीप्रतिमासु स्त्रीप्रकृतिषु समुत्कीर्णस्त्रीलिङ्गादिषु । केवलमुपमर्दनाच्चेति सिंहाक्रान्तकरेण वा साधनस्य मन्थनादेव केवलात् । यथोक्तम्—'भुवि विन्यस्तहस्ताभ्यामवष्टभ्योत्कटासनः । बाहुमध्ये विमृद्नीयात्सिंहाक्रान्तेष्वयं विधिः ॥' अस्थानेषु शुक्रविसृष्टिर्विधर्म इति चेत् सप्ताभिधाने (?) कथम् । तत्र प्रायश्चित्तविधानादिति चेदिहापि विहितत्वात् ।

बहिर्विषयमाह—

योषावेषांश्च नागरकान्प्रायेणान्तःपुरिकाः परिचारिकाभिः सह प्रवेशयन्ति । तेषामुपावर्तने धात्रेयिकाश्चाभ्यन्तरसंसृष्टा आयतिं दर्शयन्त्यः प्रयतेरन् । सुखप्रवेशितामपसारभूमिं विशालतां वेश्मनः प्रमादं रक्षिणामनित्यतां परिजनस्य वर्णयेयुः । न चासद्भूतेनार्थेन प्रवेशयितुं जनमावर्तयेयुर्दोषात् ॥

परिचारिकाभिरिति । प्रदोषे परिचरितुमन्तःपुरं प्रविशन्तीभिः । तेषामिति नागरकाणामुपावर्तनेऽभिमुखीकरणे प्रयतेरन् । अभ्यन्तरसंसृष्टा

१. 'वानिवेदयति तत्राभिप्रायात्'. २. 'प्राच्योपचार'. ३. 'सिंहाक्रान्तेन हस्तेन'. ४. 'विषययोग'. ५. 'सुप्रवेशता'. ६. 'उपावर्तयेयु'.

इति तासु नागरकाणां यथार्थबुद्धिर्न बाह्यासु । आयतिमित्यागामिफलमेवं भविष्यतीति । अपसारभूमिमपक्रमणमार्गम् । विशालतामिति विस्तीर्णं न ज्ञायते क किं वर्तत इति । प्रमादमसावधानताम् । अनित्यतामिति राजपरिजनो न नित्यं संनिहित इति । असद्भूतेनेति विनाभावेन सुप्रवेशितां विना । जनमिति नागरकम् । आवर्तयेयुरभिमुखीकुर्युः । दोषादिति विनाभावमदुष्टदूषणे आत्मनः सुप्रवेशिताद्यभावे च जनस्यापकारः[1] ।

द्वितीयं वृत्तमधिकृत्याह—

**नागरकस्तु सुप्रापमप्यन्तःपुरमपायभूयिष्ठत्वान्न प्रविशेदिति[2] वात्स्यायनः ॥**

अपायभूयिष्ठत्वादिति बहूनां विनाशकारणानां संनिधानात् ।

अत्र विशेषमाह—

**सापसारं तु प्रमदवनावगाढं[3] विभक्तदीर्घकक्ष्यमल्पप्रमत्तरक्षकं प्रोपितराजकं कारणानि समीक्ष्य बहुश आहूयमानोऽर्थबुद्ध्या कक्ष्याप्रवेशं[4] च दृष्ट्वा ताभिरेव विहितोपायः प्रविशेत् । शक्तिविषये च प्रतिदिनं निष्क्रामेत्[5] ॥**

प्रमदवनं क्रीडावनं तेनावगाढं गहनम् । कक्ष्या प्रकोष्ठकानि । प्रोपितराजकं राज्ञोऽन्यत्र गतत्वात् । कारणान्यभिगमनस्य । बहुश आहूयमानो[6]ऽर्थबुद्ध्या । कक्ष्याप्रवेशं दृष्ट्वा अनेन मार्गेण मया प्रवेष्टव्यमिति । ताभिरिति या उपावर्तन्ते । विहितोपाय इत्येवंवेषोऽस्मिन्काले गृहीत्वा चेदमिति । शक्तिविषये चेति येन प्रवेशेन प्रतिदिनं निष्क्रमितुं शक्तिस्तस्मिन्सति । इदमुपावर्तनस्य वृत्तम् ।

यस्तु स्वयमुपावर्तते तस्य वृत्तमाह—

**बहिश्च रक्षिभिरन्यदेव कारणमपदिश्य संसृज्येत । अन्तश्चारिण्यां च परिचारिकायां विदितार्थायां सक्तमात्मानं रूपयेत्[7] । तदलाभाच्च शोकमन्तःप्रवेशिनीभिश्च दूतीकल्पं सकलमाचरेत् ।**

---

१. 'जनस्योपकारः'. २. 'इति वात्स्यायनः' पुस्तकान्तरे नास्ति. ३. 'वगूढं'. ४. 'प्रदेशं'. ५. 'निष्क्रमेत्'. ६. 'आहूयमान अर्थिना वुध्वा'. ७. 'निरूपयेत्'.

राजप्रणिधींश्च बुध्येत[1] । दूत्यास्त्वसंचारे यत्र गृहीताकारायाः प्रयोज्याया दर्शनयोगस्तत्रावस्थानम् । तस्मिन्नपि तु रक्षिपु परिचारिकाव्यपदेशः[2] । चक्षुरनुबध्नत्यामिङ्गिताकारनिवेदनम्[3] । यत्र संपातोऽस्यास्तत्र[4] चित्रकर्मणस्तद्युक्तस्य श्लेषार्थानां गीतवस्तुकानां क्रीडनकानां कृतचिह्नानामापीनकाना(कस्य)मङ्गुलीयकस्य च निधानम्[5] । प्रत्युत्तरं[6] तयाँ[7] दत्तं प्रपश्येत् । ततः प्रवेशने यतेत ॥

बाह्या ये रक्षिणः । अन्यदेवेत्यमुकसंबन्धेन मम त्वं भ्राता भगिनीपतिर्वेति । संसृज्येत प्रीतिं कुर्यात् । येन तेषां तन्निवारणे शैथिल्यं स्यात् । विदितार्थायामिति मय्यनुरक्त इति विदितार्थायां शक्ति (सक्तं) रूपयेत्प्रकाशयेदाकारसंवरणार्थम् । एवं च दार्ढ्यार्थमाह—तदलाभादिति । परिचारिकाया अप्राप्तेः शोकं प्ररूपयेदित्यर्थः । अन्तःप्रवेशिनीभिश्चेति । बाह्याभिरन्तःपुरप्रवेशनशीलाभिः स्त्रीभिः करणभूताभिः । दूतीकल्पं दूतीविधिं यथोक्तम् । राजप्रणिधींश्चेति । राजचरान् बुध्येतात्मसंरक्षणार्थम् । यत्र यस्मिन्प्रदेशे दूरस्थाया एव दर्शनयोगः । गृहीताकाराया इति । अन्यथा सत्यपि दर्शनयोगेऽवस्थानं निष्फलमेव स्यात् । तस्मिन्नपि तु प्रदेशे स्थितेन रक्षिषु परिचारिकाव्यपदेशः कार्यः । यस्यामात्मनः सक्तोऽतिनिरूपितः (?) । चक्षुरनुबध्नन्त्यामिति पुनः पुनः पश्यन्त्यां प्रयोज्यायाम् । इङ्गिताकारनिवेदनं भावसूचनार्थम् । संपात इति यत्रोद्देशे सम्यग्जननम् । तद्युक्तस्येति प्रयोज्यायुक्तस्य । सानुरागमात्मानं फलके भित्तौ (वा) विलिख्य निदध्यात्[9] । द्व्यर्थानामिति यानि प्रयोज्याविषयमनुरागं सूचयन्ति । गीतवस्तूनां खण्डगाथावर्णादीनाम् । क्रीडनकानां पुत्रिकाकन्दुकादीनां कृतचिह्नानाम् । आपीनकस्य (?) नखदशनपदाङ्कितस्य । अङ्गुलीयकस्य नामाङ्कितस्य । प्रत्युत्तरं चेति तयान्यया वा दत्तं प्रकर्षेण पश्येत् । तत इति ल्यब्लोपे पञ्चमी । त्यक्तं क्रमणम् (?) ।

---

१. 'अवबुध्येत'. २. 'परिचारिकापदेशः'. ३. 'प्रयोज्यायां चक्षुः'. ४. 'संपातः स्यात्'. ५. 'श्लोकानां द्व्यर्थानां गीतवस्तुकाना क्रीडितकाना कृतचिह्नानामङ्गुलीयस्य निधानम्'. ६. 'प्रत्युत्तरं च'. ७. 'तयापि'. ८. 'शक्तः'. ९. 'फलकेऽभिलिख्य'.

यत्र चास्या नियतं गमनमिति विद्यात्तत्र प्रच्छन्नस्य प्रागेवावस्थानम् । रक्षि(त)पुरुषरूपो वा तदनुज्ञातवेलायां प्रविशेत् । आस्तरणप्रावरणवेष्टितस्य वा प्रवेशनिर्हारौ । पुटापुटयोगैर्वा नष्टच्छायारूपः । तत्रायं प्रयोगः—नकुलहृदयं चोरकतुम्बीफलानि सर्पाक्षीणि चान्तर्धूमेन पचेत् । ततोऽञ्जनेन समभागेन पेपयेत् । अनेनाभ्यक्तनयनो नष्टच्छायारूपश्चरति । (अन्यैश्च जलब्रह्मक्षेमशिरःप्रणीतैर्वाह्यपानकैर्वा) रात्रिकौमुदीषु च दीपिकासंवाधे सुरङ्गया वा ॥

पुटापुटैरिति मञ्जूषायां सपिधानायां प्रक्षिप्तस्य योगैराम्नायागतैः । नष्टच्छायारूपस्येति । कश्चिद्रूपमेव तिरस्करोति न च्छायाम् । यो रूपमपि न पश्यते । रात्रिकौमुदीषु चेति सुखरात्रिकासु वा । दीपिकासंवाधे गृहीतदीपिकानां समूहे । तद्वेषधारिणः । सुरङ्गया वा अन्तःपुरोद्भिन्नया । प्रवेशनिर्हारौ सर्वत्र योज्यौ ।

तत्रैतद्भवति—

'द्रव्याणामपि निर्हारे पानकानां प्रवेशने ।
आपानकोत्सवार्थेऽपि चेटिकानां च संभ्रमे ॥
व्यत्यासे वेश्मनां चैव रक्षिणां च विपर्यये ।
उद्यानयात्रागमने यात्रातश्च प्रवेशने ॥
दीर्घकालोदयां यात्रां प्रोषिते चापि राजनि ।
प्रवेशनं भवेत्प्रायो यूनां निष्क्रमणं तथा ॥
परस्परस्य कार्याणि ज्ञात्वा चान्तःपुरालयाः ।
एककार्यास्ततः कुर्युः शेषाणामपि भेदनम् ॥
दूषयित्वा ततोऽन्योन्यमेककार्यार्पणे स्थिरः ।
अभेद्यतां गतः सद्यो यथेष्टं फलमश्नुते ॥

१. 'तदनुज्ञातोऽतिवेलाया'. २. 'निर्हरणप्रवेशौ'. ३. 'योगः'. ४. 'रोचकः'. ५. 'अन्तर्धूमं'. ६. 'समभगिनोदकेनाभ्यक्त'. ७. 'चेटिकासंबाधे'. ८. 'तत्रैतद्भवति भवन्ति चात्र श्लोकाः'. ९. 'द्रव्याणाममि'. १० 'उत्सवार्थाना.' 'उत्सवार्थेषु'. ११. 'चैव'.

तत्रेति प्रवेशननिर्हारयोरेतद्वक्ष्यमाणमुपान्तरं भवति। द्रव्याणामिति सारदार्वापानकानां युग्मादीनां करैर्निहारे प्रवेशने च तन्मध्यवर्तिनोऽपि प्रवेशनं निष्क्रमणं चेति सर्वत्र योज्यम्। आपानकमुत्सवः। चार्थेऽपिः। चेटिकानां च संभ्रमे इतस्ततो गमने। तद्वेशमव्यत्यास इति चकारादुद्यानतश्च। दीर्घकालोदयामिति दीर्घकाल उदयः फलं यस्यां न पात्रसाध्यं स तु न भवतीत्यर्थः। ननु या नैवंविधा अन्तःपुरिकास्ताभिर्मन्त्रो भिद्येतेत्याह—परस्परस्येति। कार्याणि रहस्यानि। अन्तःपुरालया अन्तःपुरिकाः। एककार्या इति। एकस्या यत्कार्यं तत्संभूयास्ताभिर्निष्पाद्यमिति। शेषाणां भेदनं कुर्युर्यथा ता अपि समानधर्मिण्यः स्युः। किं फलमिति चेदाह—दूषयित्वेति। एककार्यार्पण इति। एकं चारित्रखण्डनाख्यं कार्यं परस्परस्यार्पयति योऽन्तःपुरिकासङ्घः। अभेद्यतां गतो मन्त्रभेदाभावादेव स्थितिः (स्थिरः)। इदमन्तःपुरिकावृत्तं प्रच्छन्नमुक्तम्। प्रकाशं तु देशप्रवृत्त्या। यदाह—

तत्र राजकुलचारिण्य एव लक्षण्यान्पुरुषानन्तःपुरं प्रवेशयन्ति नातिसुरक्षत्वादापरान्तिकानाम्। क्षत्रियसंज्ञकैरन्तःपुररक्षिभिरेवार्थं साधयन्त्याभीरकाणाम्। प्रेष्याभिः सह तद्वेषान्नागरकपुत्रान्प्रवेशयन्ति वात्सगुल्मकानाम्। स्वैरेव पुत्रैरन्तःपुराणि कामचारैर्जननीवर्जमुपयुज्यन्ते वैदर्भकाणाम्। तथा प्रवेशिभिरेव ज्ञातिसंबन्धिभिर्नान्यैरुपयुज्यन्ते स्त्रैराजकानाम्। ब्राह्मणैर्मित्रैर्भृत्यैर्दासचेटैश्च गौडानाम्। परिस्पन्दाः कर्मकराश्चान्तःपुरेष्वनिषिद्धा अन्येऽपि तद्रूपाश्च सैन्धवानाम्। अर्थेन रक्षिणमुपगृह्य साहसिकाः संहताः प्रविशन्ति हैमवतानाम्। पुष्पदाननियोगान्नगरब्राह्मणा राजविदितमन्तःपुराणि गच्छन्ति। पटान्तरितश्चैषामालापः। तेन प्रसङ्गेन व्यतिकरो भवति वङ्गाङ्गकलिङ्गकानाम्। संहत्य नवदशेत्येकैकं यु-

---

१. 'आह'. २. 'यानपात्रसाध्य'. ३. 'विचक्षणात्'. ४. नागरकान् तद्रूपाभिवेशयन्ति'. ५. 'उपभुज्यन्ते'. ६. 'प्रवेशितैः'. ७. 'मित्रै.'. ८. 'परिस्कन्दा'.

**यानं प्रच्छादयन्ति प्राच्यानामिति । एवं परस्त्रियः प्रकुर्वीत । इत्यन्तःपुरिकावृत्तम् ॥**

तत्रेति । राजकुलचारिण्यो या राजकुले चरन्ति स्त्रियः । लक्षण्यानिति । वैरन्त्र्यादि (?) लक्षणैः साधवः तवः तत्ता (?) इत्यर्थः । नातिसुरक्षत्वादिति नात्यन्तं स्वा राजकीया तत्र रक्षास्ति । क्षत्रियसंज्ञकैरिति नान्यै(व) रक्षिभिः । तेषां तत्राभ्यन्तरप्रवेशात् । अर्थमिति संप्रयोगं साधयन्ति राजकुलचारिण्य एव । प्रेष्याभिरिति दासीभिः । तद्वेषान्दासीवेषान् । प्रवेशयन्ति राजकुलचारिण्य इति वर्तते । स्वैरिति राजापेक्षया । कामचारैरित्यनिषिद्धसंचारैः । जननीवर्जमिति मुख्यमातरं मुक्त्वा । उपयुज्यन्तेऽभिगम्यन्ते । स्त्रीराजःस्त्रीपुरी तत्र भवानाम् । मित्रैर्भृत्यैरिति । मित्रैर्भृत्यैश्च । दासचेटैरिति । दासा गृहजातास्ततोऽन्ये चेटाः । गौडानामिति । गौडाः कामरूपकाः प्राच्यविशेषाः । परिस्पन्दाः प्रतीहाराः । कर्मकराः शयनासनचमरादिकर्मान्तिकाः[1] । अन्येऽपि तद्रूपा येऽनिषिद्धसंचाराः । उपयुज्यन्त इत्यर्थकत्वाद्विभक्तिविपरिणामेन संबन्धः । सैन्धवानामिति । सिन्धुनामा नदस्तस्य पश्चिमेन सिन्धुदेशस्तत्रभवानाम् । अर्थेनोपगृह्य रक्षिणः लुब्धत्वात् । साहसिका निर्भया नान्ये । संहता एकीभूय । हैमवतानामिति हिमवद्द्रोणीभवानाम् । नगरब्राह्मणा इति तत्रैव नगरे ये ब्राह्मणास्ते पुष्पाणि दातुमन्तःपुरे गच्छन्ति । राजविदितमिति राजप्रज्ञातम् । पटान्तरितश्चैषामालापो न ताभिः साक्षाद्दृश्यमानाभिरिति देशस्थितिभेदेनेति । पुष्पदानप्रसङ्गेन व्यतिकरः संप्रयोगः । लोमराहित्यात्(?)पूर्वेणाङ्गो महानद्याः पूर्वेण कलिङ्गः गौडविषयाद्दक्षिणेन (वङ्गः) । संहत्य नवदशेतीत्यत्रेतिशब्दः प्रकारे । एकैकं युवानं व्यवायक्षमं प्रच्छादयन्ति न यथा दृश्यते । एवमित्युक्तेन पारदारिकेण विधिना प्रकुर्वीताभिगच्छेत् । इत्यन्तःपुरिकावृत्तमष्टचत्वारिंशं प्रकरणम् ॥

यथा परस्त्रियमेभिरुपायैरभिगच्छेत्तथा तद्दारानपरोऽपीति दाररक्षितकमुच्यते । दाररक्षाप्रयोजनमस्येति । यदाह—

**एभ्य एव च कारणेभ्यः स्वदारान्रक्षेत् ॥**

---

१. 'शयनासनाचमनसरकादि'.

एभ्य एवेति तथासिद्धपुरुषेभ्यः । यैश्च द्वारदेशावस्थानादिभिः कारणैरभियोगमात्रसाध्यत्वं यानि च परिचयकारणानि अभियोगदूतीकर्माणि ईश्वरकामितमन्तःपुरिकावृत्तं च तेभ्यो रक्षेत् । तत्रायं प्रथमोपायो यद्रक्षानिवेशनम् । यदाह—

**कामोपधाशुद्धान्रक्षिणोऽन्तःपुरे स्थापयेदित्याचार्याः । ते हि भयेन चार्थेन चान्यं प्रयोजयेयुस्तस्मात्कामभयार्थोपधाशुद्धानिति गोणिकापुत्रः । अद्रोहो धर्मस्तमपि भयाज्जह्यादतो धर्मभयोपधाशुद्धानिति वात्स्यायनः ॥**

कामोपधेति । कामविषये या परीक्षा तया शुद्धान् । ते हीति । यद्यपि स्वयं कामोपधाशुद्धा नाभिगच्छन्ति तथापि भयेन लोभेन चान्यं प्रयोजयेयुस्तदशुद्धिसंभवात्तस्मादेतादृशानित्यर्थः । धर्मोपधाशुद्धो न परदारानभिगच्छति नार्थलोभात्स्वामिद्रोहमाचरति भयात्तु धर्मं परित्यजेदिति ।

स्वदारेषु परीक्षणमपि रक्षणोपाय इति केचिदाहुः । [तदाह—]

**परवाक्याभिधायिनीभिश्च गूढाकाराभिः प्रमदाभिरात्मदारानुपदध्याच्छौचाशौचपरिज्ञानार्थमिति बाभ्रवीयाः । दुष्टानां युवतिषु सिद्धत्वान्नाकस्माददुष्टदूषणमाचरेदिति वात्स्यायनः ॥**

परवाक्येति । अमुकस्त्वय्यनुरक्तः स एवमाह मम प्राणसमा धार्यतामिति । गूढाकाराभिरिति सा न जानाति पत्या प्रयुक्तेति । तयोपदध्यात्परीक्षेत । अप्रतिपन्नायाः शौचं प्रतिपन्नायाश्चाशौचं ज्ञातं भवति । दुष्टानामिति विनाशकारणानामित्यर्थः । एवं मन्यते तथाहि—विनाशकारणेषु सत्सु स युवा परीक्षावान्स्यात्, असत्सु वा । तत्र पूर्वस्मिन्पक्षे दूष्याणां दूषणमाचरेत् । उत्तरत्र नेत्याह—नाकस्मादिति । अविद्यमानविनाशकारणानामित्यर्थः । अदुष्टशोधः । बुद्धिबोधनस्य (शुद्धशोधनस्य) दोषवत्त्वात् । यथोक्तम्—'न शोधनमदुष्टस्य विशेषेणाम्भसश्चरेत् ।

---

१. 'धर्मार्थकामभयोपधा'; 'धर्मत्रयोपधा'. २. 'दूत्याना'.

कदाचिद्विप्रकृष्टस्य नाधिगम्येत भेषजम् ॥' तस्माद्विनाशकारणान्येव निरूप्यन्ते येभ्यो व्यावर्तन्ते । तान्याह—

अतिगोष्ठी निरङ्कुशत्वं भर्तुः स्वैरता पुरुषैः सहानियन्त्रणता । प्रवासेऽवस्थानं विदेशे निवासः स्ववृत्त्युपघातः स्वैरिणीसंसर्गः पत्युरीर्ष्यालुता चेति स्त्रीणां विनाशकारणानि ॥

अतिगोष्ठी स्त्रीभिः सह गोष्ठी । भर्तुः स्वैरता भर्त्रा स्वातन्त्र्येण व्यवहारिता । पुरुषैः कैश्चिदनियन्त्रणा नियन्त्रणाभावः । प्रवासेऽवस्थानं भर्तरि प्रोषिते यदेकाकिन्यावस्थातव्यम् । स्ववृत्त्युपघातः स्वशरीरस्थित्युपघातः । स्वैरिण्याः पुंश्चल्याः संसर्गः । पत्यावीर्ष्यासंभव इति विनाशकारणानि । एषु सत्सु परदाराभिमर्शयोगसंभवात् ।

अधिकरणार्थमुपसंहरन्नाह—

'संदृश्य शास्त्रतो योगान्पारदारिकलक्षितान् ।
न याति च्छलनां कश्चित्स्वदारान्प्रति शास्त्रवित् ॥
पाक्षिकत्वात्प्रयोगाणामपायानां च दर्शनात् ।
धर्मार्थयोश्च वैलोम्यान्नाचरेत्पारदारिकम् ॥
तदेतद्दारगुप्त्यर्थमारब्धं श्रेयसे नृणाम् ।
प्रजानां दूषणायैव न विज्ञेयोऽस्य संविधिः ॥'

इति श्रीवात्स्यायनीये कामसूत्रे पारदारिके पञ्चमेऽधिकरणे
आन्तःपुरिकं दाररक्षितकं षष्ठोऽध्यायः ।

पारदारिकलक्षितानिति पारदारिकेऽधिकरणे ये प्रोक्तास्तैर्लक्षितान् । अन्यथा कथमतः (?) शास्त्रतः पश्येत् । पाक्षिकत्वादिति यदान्यकारणानि पश्येत् । अपायानां च शरीरोपघातादीनाम् । वैलोम्यादिति विपक्षत्वात् । परदारप्रयोजनप्रयोगं नाचरेदिति । तर्हि किमर्थं तदधिकरणमुक्तमिति चे-

१. 'निरूप्याणि'. २ 'यदाह'. ३. 'स्वैरिता'. ४. 'प्रकाशे स्थाने विदेशवासः'. ५. 'स्वान्दारान्'.

दाह—तदेतदिति । नहि तदर्थं मुख्यं विधानमित्यर्थः । इति दाररक्षितकमेकोनपञ्चाशत्तमं[1] प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां पारदारिके पञ्चमेऽधिकरण आन्तःपुरिकं दाररक्षितकं षष्ठोऽध्यायः ।

समाप्तं चेदं पारदारिकं नाम पञ्चममधिकरणम् ।

---

१. 'एकोनचत्वारिंश'.

# वैशिकं नाम षष्ठमधिकरणम् ।

## प्रथमोऽध्यायः ।

तिसृभिर्नायिकाभिः समागमोपाय उक्तः वेश्याभिः सह वक्तुं तदधिकरणमुच्यते । तत्र सहायादिनिरूपणे व्यापारपूर्वकत्वादुत्तरव्यापारस्येति सहायगम्यागमनकारणचिन्तोच्यते । पुंवेश्ययोस्तुल्येऽपि रतिफले वेश्याया एव प्रयोक्तृतया तत्राधिकारः, न पुंसः । तत्प्रतिबद्धत्वाज्जीविकायास्तदाह—

**वेश्यानां पुरुषाधिगमे रतिर्वृत्तिश्च सर्गात् । रतितः प्रवर्तनं स्वाभाविकं कृत्रिममर्थार्थम् । तदपि स्वाभाविकवद्रूपयेत् । कामपरासु हि पुंसां विश्वासयोगात् । अलुब्धतां च ख्यापयेत्तस्य निदर्शनार्थम् । न चानुपायेनार्थान्साधयेदायतिसंरक्षणार्थम् । नित्यमलंकारयोगिनी राजमार्गावलोकिनी दृश्यमाना न चातिविवृता तिष्ठेत् । पण्यसधर्मत्वात् ॥**

पुरुषस्याधिगमे प्राप्तौ । सतीति शेषः । रतिर्विसृष्टिसुखं वृत्तिर्जीविका अर्थोपादानात् । सर्गादिति सृष्टेः । एषैव हि सृष्टिर्यत्कामोऽर्थागमः । रतित इति तत्र द्वयोः फलयोर्यदा रतिमभिसंधाय प्रवर्तनं तदा स्वाभाविकम् । तत्र रागस्य सहजत्वात् । यदा त्वर्थमभिसंधाय तदा कृत्रिमम् । रागाभावात् । तदपीति । तदपि कृत्रिमं स्वाभाविकवद्रूपयेत्प्रकाशयेत्कान्तानुवृत्त्या । किमर्थं तत्राह—कामेति । स्नेहेन मयि वर्तत इति पुंसां विश्वासयोगः संक्तियोगः न त्वर्थपरासु । कामपरतां च ख्यापयन्ती नार्थरूपतामपि ख्यापयेदित्याह—अलुब्धतामिति । स्वाभाविकत्वस्य ख्यापनार्थम् । एवं च सति संक्ताद्वित्तादानमपि स्वाभाविकं सिद्धं भवति । तत्रापि विनोपायेन नाददीतेत्याह—न चेति । उपायान्वक्ष्यति—आयतीति । आयतिः प्रभावः । नित्यमिति सदालंकृता स्यात् । अन्यथा आयतिहानिः । निरुज्ज्वलत्वात् । राजमार्गावलोकिनी गम्यैर्यथा दृश्येत्तथा । तत्रापि दृ-

१. 'रतितश्च स्वाभाविकं प्रवर्तनम्'. २. 'पुंसः'. ३. 'शक्ति'. ४. 'शक्तात्'.

-श्यमाना नातिविवृता प्रकटा । पण्यसधर्मत्वादिति । अतिप्रकटस्यादुर्लभत्वादित्यर्थः ।

तत्र सहायचिन्तामाह—

**यैर्नायकमावर्जयेदन्याभ्यश्चावच्छिन्द्यादात्मनश्चानर्थं प्रतिकुर्यादर्थं च साधयेन्न च गम्यैः परिभूयेत तान्सहायान्कुर्यात् । ते त्वारक्षकपुरुषा धर्माधिकरणस्था दैवज्ञा विक्रान्ताः शूराः समानविद्याः कलाग्राहिणः पीठमर्दविटविदूषकमालाकारगान्धिकशौण्डिकरजकनापितभिक्षुकास्ते च ते च कार्ययोगात् ॥**

आवर्जयेदभिमुखीकुर्यात् । अवच्छिन्द्यादसंसृष्टमाकर्षयेत् । सहायान्कुर्याद्यथोक्तकार्यसाधकानित्यर्थः । आरक्षका नागरकादयः । धर्माधिकरणस्थाः प्राड्विवाकादयः । उभयेऽप्यनर्थघातिनोऽर्थसाधकाः । दैवज्ञा इति । तथा संयोगे ते वृद्धिर्भविष्यतीति गम्यं प्रोत्साह्य योजयन्ति । विक्रान्ताः शरीरापेक्षाः साहसिकाः । ततोऽन्ये शूराः । उभयेऽनर्थं घ्नन्त्यर्थं च साधयन्ति । समानविद्या इति । ते ख्लिह्यन्तोऽस्यास्त्वर्थं साधयन्ति । कलेति । ये नायिकातः कलां गृह्णन्ति ते तद्विज्ञतां प्रकाशयन्तो गम्यान्योजयन्ति । पीठमर्दादयः स्वकर्मभिरर्थकृतः परभवनप्रवेशाद्गम्यं योजयन्ति । कश्चिदेव किंचित्कार्यं साधयतीति तद्वशादन्येऽपि स्युः । सहायाः प्रियहिताभ्यामनुवर्तनीयाः न त्वभिगम्याः । तदभिगमने स्वार्थमेवैते कुर्युर्न तदर्थम् ।

गम्यचिन्तामाह—

**केवलार्थास्त्वमी गम्याः—स्वतन्त्रः पूर्वे वयसि वर्तमानो वित्तवानपरोक्षवृत्तिरधिकरणवानकृच्छ्राधिगतवित्तः । संघर्षवान्संततायः सुभगमानी श्लाघनकः पण्डकश्च पुंशब्दार्थी । समानस्पर्धी स्वभावतस्त्यागी । राजनि महामात्रे वा सिद्धो दैवप्रमाणो वित्ता-**

१. 'परिभूयेत यानुनुष्ठस्य'. २. 'मालाकार' इति पुस्तकान्तरे नास्ति. ३. 'भिक्षवस्ते ते च'. ४. 'केवलार्थैः'. ५. 'सघर्षितः'. ६. 'समस्पर्धी खमावतश्च'.

वृथाभिमानी गुरूणां शासनातिगः सजातानां लक्ष्यभूतः सवित्त एकपुत्रो लिङ्गी प्रच्छन्नकामः शूरो वैद्यश्चेति ॥

कृतघ्नः प्रीतिरहितोऽर्थो येभ्यः इति रतिपक्षतो अर्थः प्रयोजनं येभ्यः । स्वतन्त्रो गुरुस्वरराथचः । न वृद्धो न दरिद्रः । अपरोक्षेति । परोक्षवृत्तेस्तु यदा ततः किंचिद्दास्यति तदा दास्यतीति कदर्थितं दानं स्यात् । अविकृतस्थानव्यक्तो योऽर्थविकारैरविकृतः सोऽर्थदः । अनुकूलेति । अन्यथाविनतं निविलासाद्वावातं वनं येन । अन्यथा कृच्छ्रदः स्यात् । संघर्षवानिति स्पर्धावानन्येन गन्येन बहु ददाति । संततायः शौल्किको वार्धुषिकश्च । सुभगाभिमानीति । दुर्भगोऽपि यः सुभगमात्मानमभिमन्यते । दुर्भगत्वमात्मनोऽप्रकटयितुं नायिकामन्यतो व्यावर्तयन्बहु ददाति । श्लाघिकः श्लाघाहेतुर्बहुप्रदः । पण्डको नपुंसकः । स पुंस्त्वख्यापनार्थं बहु ददाति । समानस्पर्धी कुलविद्यावित्तवयोरन्यतरं स्पर्धते तदपेक्षयाधिकं ददाति । स्वभावतस्त्यागी सोऽवश्यं ददाति दातृस्वभावत्वात् । सिद्धो ग्राह्यवचनः । स यदि स्वयं न ददाति राजानममात्यं वाभिधाय दापयति ममैवं प्रीतेति । दैवप्रमाणो भाग्यक्षयेण क्षीयते नोपभोगेन संपदिति मन्वानो बहु ददाति । गुरूणामिति । तदधीनस्य पराधीनत्वादबहुदातृत्वम् । लक्ष्यभूतः प्रधानभूतः स दाता । एकपुत्र इति । बहु प्रयच्छन्नपि न पितृभ्यां स निवार्यते नान्यत्र यासीदिति । लिङ्गी प्रव्रजितः । प्रच्छन्नकामी प्रकटं न कामयते लोको मा ज्ञासीदिति । सकामेन वाच्यमानो बहु ददाति । शूरो यः सहायभावेनोपचरितो वित्तवांश्च । वैद्यस्य दातृत्वाभावेऽपि व्याधितायाश्चिकित्साकारित्वाद्दातृत्वमेव ।

प्रीतियशोर्थास्तु गुणतोऽधिगम्याः ॥

यतो गुणवत्स्व एव प्रीतिर्यशश्च भवति । उभयोरपि गुणान्वैशिके वक्ष्याम इत्युक्तम् ।

महाकुलीनो विद्वान्सर्वसमयज्ञः कविराख्यानकुशलो वाग्मी

१. 'गुरूणामनादिवर्ती'. २. 'सजातानां'. ३. 'सवित्तः' इति पुस्तकान्तरे नास्ति. ४. '[illegible]'. ५. 'प्रीतियशोविकारस्तु'.

**प्रगल्भो विविधशिल्पज्ञो [१]वृद्धदर्शी स्थूललक्षो महोत्साहो दृढभक्तिरनसूयकस्त्यागी मित्रवत्सलो घटागोष्ठीप्रेक्षणकसमाजसमस्याक्रीडनशीलो नीरुजोऽव्यङ्गशरीरः [२]प्राणवानमद्यपो वृषो मैत्रः स्त्रीणां प्रणेता लालयिता च । न चासां वशगः [३]स्वतन्त्रवृत्तिरनिष्ठुरोऽनीर्ष्यालुरनवशङ्की चेति नायकगुणाः ॥**

विद्वानान्वीक्षिक्यादिज्ञः । सर्वेति पाषण्डसमयपरिज्ञानात् । कविः संस्कृतादिकाव्यकृत् । प्रगल्भः प्रतिभाववान् । शिल्पं लेख्यादि । वृद्धदर्शी विद्यावयोवृद्धानामुपासकः । स्थूललक्षो महेच्छः । महोत्साह इति महत्त्वं च योगान्तरमहत्त्वयोगात् । यथोक्तम्—'शौर्यममर्षता शीघ्रता दाक्ष्यं चोत्साहगुणाः ।' घटागोष्ठ्यौ व्याख्याते । प्रेक्षणकं नटादिदर्शनम् । समाजः पानगोष्ठी । समस्याक्रीडा संभूय क्रीडा । अव्यङ्गमहीनम् । प्राणो बलम् । अमद्यपो ब्राह्मणोऽर्थाल्लभ्यते । वृषो व्यवायक्षमः । मैत्रः करुणावान् । प्रणयित्व(प्रणेतृत्व)मुपदेशेन तासां समुदाचारेषु स्थापनम् । लालनं तासां शरीरस्थितिवैकल्यसंवरणम् । अनवशङ्की निःशङ्कमारम्भवान् । नायकगुणा इति गुणिद्वारेण गुणाभिधानमत्र प्रकरणायत्तत्वात् । गम्यगुणा इति वक्तव्ये नायकग्रहणं सामान्यसंज्ञाप्रतिपत्त्यर्थं तच्च पूर्वोक्तं गुणा वक्ष्यन्त इति तद्व्याख्यातम् । भवत्पेक्षयेव (?) नायको गुणान्तरयोगात् । कन्यापुनर्भूपरदारवेश्यापेक्षया यथाक्रमं वरो जारः सिद्धो गम्यश्चेति संज्ञान्तरं लभते ।

**[४]नायिकायाः पुना रूपयौवनलक्षणमाधुर्ययोगिनी गुणेष्व[५]नुरक्ता न तथार्थेषु प्रीतिसं[६]योगशीला स्थिरमतिरेकजातीया विशेषार्थिनी नित्यमकदर्यवृत्तिर्गोष्ठीकलाप्रिया चेति [नायिकागुणाः] ॥**

नायिकायाः पुनरिति । रूपं वर्णसंस्थानं यच्छोभनम् । लक्षणं सौभाग्यसूचकम् । माधुर्यं प्रियवाक्यत्वम् । तैर्योगः स यस्यास्तद्योगिनीति ।

---

१. 'वृद्धसेवी'. २. 'प्रमाणवान्प्राणवान्'. ३. 'स्वतन्त्रवृत्तिरनिष्ठुरो युवतिष्वनभिशङ्की अनीर्ष्यालुर्गोष्ठी कलाप्रिय इति नायकगुणम्'. ४. 'नायिकायाः पुन.' इति मूलपुस्तकेषु नास्ति. ५. 'अभिरता'. ६. 'संभोग.'

तेषु (गुणेषु) नायकसंबन्धिष्वनुरक्ता न तथार्थेषु तदीयेषु । प्रीतिसंयोगशीलेति प्रीतिग्रहणं बाह्यसंयोगनिवृत्त्यर्थम् । रतिसंभोगशीलेत्यर्थः । स्थिरमतिः कर्तव्यमिति निश्चित्यार्थान्करोति । एकजातीयेत्येकप्रकारा न मायाविनी । विशेषार्थिनी न यत्रक्वचनवस्तुनि रमते । अकदर्यवृत्तिरात्मवृत्त्यनुरोधेनार्थसंचयः । तत्रापि न कदाचिदित्याह—नित्यमिति । गोष्ठीकलाप्रियेति गोष्ठी या क्रीडामात्रैककार्या । नायिकाया गुणा इति योज्यम् । अत्रापि पूर्ववद्द्वेष्याया इति नोक्तम् ।

एतद्द्वयोरप्यसाधारणतामाह—

**नायिका पुनर्बुद्धिशीलाचार आर्जवं कृतज्ञता दीर्घदूरदर्शित्वं अविसंवादिता देशकालज्ञता नागरकता दैन्यातिहासपैशुन्यपरिवादक्रोधलोभस्तम्भचापलवर्जनं पूर्वाभिभाषिता कामसूत्रकौशलं तदङ्गविद्यासु चेति साधारणगुणाः । गुणविपर्यये दोषाः ॥**

बुद्धिः प्रज्ञा । शीलं स्वभावता (?) । आचारो देशे काले चेदं प्रयुज्यत इति । नागरकता नागरकवृत्तानुष्ठानम् । दैन्यं याच्ञा । अतिहासो नित्यप्रहसनता । पैशुन्यं परस्परसंभेदनम् । परिवादः परदोषोदाहरणम् । चापलमधैर्यम् । वर्जनं त्यागः । तेन गुणा एवोक्ता दैन्यादयः । पूर्वाभिभाषिता यावदेव परो न संभाषते । कामसूत्रे कौशलं ज्ञानम् । अत्र न गुणिद्वारेण गुणाभिधानम् । साधारणादन्यतरत्वादन्यलिङ्गनिदर्शनेन हि गुणाभिधाने साधारणानां विपर्यये दोषादौ कुलेय(?)त्वादयो वैरूप्यादयो दौर्बुध्यादयश्च । तद्योगान्नायकोऽप्यनायक इत्युच्यते । सत्स्वपि गुणेषु दोषान्तरयोगादगम्या इति ।

अगम्यचिन्तामाह—

**क्षयी रोगी कृमिशकृद्वायसास्यः प्रियकलत्रः परुषवाक्कदर्यो निर्घृणो गुरुजनपरित्यक्तः स्तेनो दम्भशीलो मूलकर्मणि प्रसक्तो मानापमानयोरनपेक्षी द्वेष्यैरप्यर्थहार्यो विलज्ज इत्यगम्याः ॥**

१. 'नायिका पुनः' मूलपुस्तकेषु नास्ति. २. 'बुद्धिः शीलं'. ३. 'स्मितपूर्वाभि'. ४. 'अप्यहार्योऽतिलज्जः'.

क्षयो राजयक्ष्मा । रोगशब्दः सामान्यवाच्यपि लोकप्रसिद्ध्या कुष्ठवाची । द्वयोरपि सांक्रामिकत्वात् । कृमिशकृदिति पुरीषमक्षिकेति प्रसिद्धा । सा हि यस्मिन्व्रणे पुरीषं मुञ्चति तत्र कृमिर्भवति तद्वद्यच्छुक्रसंसर्गाद्या हि गर्भमाधत्ते सा स्त्री जरां धत्ते । वायसास्यो दुर्गन्धमुखः । यद्वा काकः शुच्यशुचौ मुखं निक्षिपति एवं निर्विचारं स्त्रीः कामयते स तासामनभिगमनीयः स्यात् । प्रियकलत्र इति तस्यान्यत्रानासक्तेः नाप्यर्थदः । परुषवाक् असह्यत्वात्(वाक्) । कदर्यो य आत्मानं भृत्यांश्च संपीड्यार्थसंचकः । निर्घृणो निर्दयः । उभावप्यदातारावकार्यकरौ च । मूलकर्म कार्मणम् । द्वेष्यैरप्यर्थहार्यो यो द्वेष्यैरप्यर्थलोभात्संघत्ते स लुब्धः कथं ददाति ।

यैः कारणैरभिगमनं तत्र चिन्तामाह—

**रागो भयमर्थः संघर्षो वैरनिर्यातनं जिज्ञासा पक्षः खेदो धर्मो यशोऽनुकम्पा सुहृद्वाक्यं ह्रीः प्रियसादृश्यं धन्यता रागापनयः साजात्यं साहवेश्यं सातत्यमायतिश्च गमनकारणानि भवन्तीत्याचार्याः । अर्थोऽनर्थप्रतीघातः प्रीतिश्चेति वात्स्यायनः । अर्थस्तु प्रीत्या न बाधितः । अस्य प्राधान्यात् । भयादिषु तु गुरुलाघवं परीक्ष्यमिति सहायगम्यागम्य(गमन)कारणचिन्ता ॥**

राग इति कश्चित्स्वाभाविक उत्पन्नः । भयं व्यापादनभयम् । अर्थो भूम्यादिलाभः । संघर्षः स्पर्धा । यथा देव[द]त्ताया अनङ्गसेनयेति । ततो हि समाकृष्य स्पर्धया मूलदेवः कामितः । वैरं निर्यातयन्ती कंचिदभिगच्छति । जिज्ञासेति विदग्धोऽयमिति श्रूयते तत्किं तथैवेति । पक्ष आश्रयः यमाश्रित्य कार्यं साधयति । खेदः परिश्रमः । संप्रयोगो हि जीविका । तत्र चाकृतखेदा सहसा कंचित्कंचित्प्रवृत्ता विमर्दं न सहते । धर्मोऽकिंचनविद्वद्ब्राह्मणाभिगमनात् । यशः कस्यांचित्तिथौ कामसत्रप्रदानात् । अनुकम्पा अकामयमानायां त्वयि म्रियेऽहमित्येवंवादिनि दया

१. 'संक्रामितत्वात्'. २. 'सादेश्य'. ३. 'प्रीतिरिति'. ४. 'अर्थं तु प्रीत्या न बाधेत'. ५. 'गुरुलाघवपरीक्षा'. ६. 'कंचित्'. ७. 'सहस्य'. ८. 'विमर्दन सहते'. ९. 'कामसूत्र'.

भवति । सुहृद्वाक्यं मम प्रीतकः समायातस्तेन सहाद्य शयितव्यमिति । ह्रीर्यो गुरुस्थानीयः स लज्जयाभिगम्यते । प्रियसादृश्यं मत्प्रियस्यायं सदृश इति । धन्यतेति पुण्यवानयं यतो धनवान्रूपवांश्च । रागापनयः शुक्रधातोरुद्रिक्तस्य कंचिदभिगम्यापनयनम् । साजात्यं सजातिरयमिति विप्रतिपन्नायाः कुलयोषितोऽभिगमनकारणमेतत् । साहवेश्यं सहवेशकोऽयमिति । आयतिः प्रभावः । प्रभवन्तमधिगम्य । अत्राह शास्त्रकारः—परिगणनमेतत्प्रदर्शनं वा । तत्र परिगणनं चिकित्सा मैत्री शोकापनयः कलागम इत्येवमादीनामपि संभवात् । प्रदर्शने चार्थोऽनर्थप्रतीघातः प्रीतिरिरिति तावद्वक्तव्यम् । सर्वेषामत्रैवान्तर्भावः । संघर्षजिज्ञासापक्षखेदधर्मयशःसुहृद्वाक्यरागापनया अर्थे । भयं वैरमनुकम्पा अनर्थप्रतीघाते । शेषाः प्रीतौ । ह्रीरपि प्रीत्यंशमेव स्पृशति । अर्थस्त्विति अर्थप्रीत्योर्यथास्वं विषयेषु युगपत्प्रत्युपस्थितेः प्रीतिविषयं त्यक्त्वार्थविषयमधिगच्छेदित्यर्थः । गुरुलाघवमग्रे वक्ष्यति । इति सहायगम्यागम्यगमनकारणचिन्ता पञ्चाशत्तमं प्रकरणम् ॥

एवं सहायं निरूप्य गम्यमभिमुखीकुर्यादिति गम्योपावर्तनमुच्यते—

**उपमन्त्रितापि गम्येन सहसा न प्रतिजानीयात् । पुरुषाणां सुलभावमानित्वात् । भावजिज्ञासार्थं परिचारकमुखान्संवाहकगाय[१]नवैहासिकान्गम्ये[२] तद्भक्तान्वा[३] प्रणिदध्यात् । तदभावे पीठमर्दादीन् । तेभ्यो नायकस्य शौचाशौचं रागापरागौ सक्तासक्ततां दानादाने[४] च विद्यात् । संभावितेन[५] च सह विटपुरोगां प्रीतिं योजयेत् ॥**

स्वयमुपावर्तितेन नायकेन प्रार्थिता न सहसा गच्छेत् । सुलभावमानित्वात्पुनः पुनरुपमन्त्रिता गच्छेदिति भावजिज्ञासार्थमिति । वैहासिको विदूषकः । तस्य गम्यस्य । भक्तान्सेवापरान् । प्रणिदध्यान्नियुञ्जीत । पीठमर्दादिशब्दाद्विटमालाकारगान्धिकशौण्डिकादयः सहायाः । भावोऽभिप्रायः । तस्मिन्ननेकप्रकारेऽपि प्राधान्याच्छौचादिभावेष्वेव येनायं वेत्ति

---

१. 'गायक'. २. 'गम्येषु'. ३. 'तद्भक्ताना', 'तद्भक्तान्तान्'. ४. 'सक्तासक्तहानादाने', 'शक्ताना दानादाने'. ५. 'संभापितेन'.

जिज्ञासनमिति । नायकस्येति गम्यसंज्ञकस्य । शुचिसमुदाचारान् शौचं भावम् । तद्विपरीतमशौचम् । यतः कश्चित्स्वयं ममोपरि कष्टं प्रयुङ्क्ते प्रयोजयति नोभयं वेति । रागः संयोगेच्छा तद्विपरीतमपरागम् । शक्ततां वक्ष्यमाणलक्षणां तद्विपरीतामशक्तताम् । दानं दातृत्वं तद्विपरीतमदानम् । संभावितेन चेति भावान् ज्ञात्वा प्रवर्तते । विटपुरोगामिति विटो हि जीर्णनागरकवृत्तः । तेन पूर्वप्रणिहितेन प्रीतिं योजयेत् ।

योजितायां विधिमाह—

लावककुक्कुटमेषयुद्धशुकशारिकाप्रलापनप्रेक्षणककलाव्यपदेशेन पीठमर्दो नायकं तस्या उदवसितमानयेत् । तां वा तस्य । आगतस्य प्रीतिकौतुकजननं किंचिद्द्रव्यजातं स्वयमिदमसाधारणोपभोग्यमिति प्रीतिदायं दद्यात् । यत्र च रमते तया गोष्ठ्यैनमुपचारैश्च रञ्जयेत् ॥

लावकादीनां युद्धं शुकादिप्रलापनम् । प्रेक्षणकं नटादिदर्शनम् । कला गीतादिका । उदवसितं गृहम् । तां वेति नायिकां वा तस्योदवसितम् । तद्व्यपेति (?) । यत्प्रीतिं जनयति तस्मै हितत्वात् । कौतुकं चादृष्टपूर्वत्वात् । द्रव्यमेव द्रव्यजातम् । स्वयमित्यनुरागख्यापनार्थं नान्येन । असाधारणेति भवत एवेदमुपभोगार्हं नान्यस्येत्युक्त्वा प्रीतिदायं यत्पु[न]र्दीयते । यत्र चेति काव्यगोष्ठ्यां कलागोष्ठ्यां वा । उपचारैः स्रक्ताम्बूलादिभिः ।

प्रत्यवच्छेदनार्थं विधिमाह—

गते च सपरिहासप्रलापां सोपायनां परिचारिकामभीक्ष्णं प्रेषयेत् । सपीठमर्दायाश्च कारणापदेशेन स्वयं गमनमिति गम्योपावर्तनम् ॥

सपरिहासेति सक्रीडप्रकृष्टालापा हि प्रीतिं वर्धयति । सोपायनामभि-

---

१. 'जनयेत्'. २. 'कलापदेशेन च'. ३. 'पत्युर्दीयते'. ४. 'प्रायन्सोपायनांश्च परिचारकान्'.

ज्ञानार्थं सह ढौकनिकया प्रेषयेत् । तत्राप्यभीक्ष्णम् अन्तरा नायकप्रवेशो माभूदिति । सपीठमर्दायाश्चेति । पीठमर्दो हि मन्त्री संप्रयोगस्य घटयिता । कारणापदेशेन गमनमिति सहसा गमने हि हेया स्यात् ।

उक्तमनुक्तं श्लोकैराह—

भवन्ति चात्र श्लोकाः—[1]

ताम्बूलानि स्रजश्चैव[2] संस्कृतं चानुलेपनम् ।
आगतस्याहरेत्प्रीत्या कलागोष्ठीश्च योजयेत् ॥
द्रव्याणि प्रणये[3] दद्यात्कुर्याच्च परिवर्तनम् ।
संप्रयोगस्य चाकूतं निजेनैव[4] प्रयोजयेत् ॥
प्रीतिदायैरुपन्यासैरुपचारैश्च केवलैः ।
गम्येन सह संसृष्टा रञ्जयेत्तं ततः परम् ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे सहायगम्यागम्यचिन्ता गमनकारणं गम्योपावर्तनं प्रथमोऽध्यायः ।

संस्कृतमिति सर्वत्र योज्यम् । कलागोष्ठीश्चेति चशब्दात्काव्यगोष्ठी च । द्रव्याणीति प्रीतिकौतुकजनकानि । परिवर्तनमुत्तरीयांशुकानामङ्गुलीयानाम् । तत्रापि प्रणये सति । अनुत्पन्नप्रणयाया दानं परिवर्तनं च कपटं ज्ञायते । आकूतमभिप्रायम् । प्रयोजयेत्प्रकाशयेत् । यस्तु कथंचिदागत्यागत्य गच्छति यत्र योज्यमानं लाघवं जनयति तच्च कथं योजयेदित्याह— प्रीतिदायैरिति । प्रीत्यर्थं यानि दीयन्ते । उपन्यासैः पीठमर्दादिकृतैः । अत्रैव किं न सुप्यत इति । केवलैः शुद्धैः ये संप्रयोगमेव सूचयन्ति । संसृष्टा संप्रयुक्ता । ततः परमित्यनन्तरप्रकरणानुसंधानम् । इति गम्योपावर्तनमेकपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणे सहायगम्यागम्यचिन्ता गमनकारणं गम्योपावर्तनं प्रथमोऽध्यायः ।

---

१. 'भवन्ति चात्र श्लोकाः' इति पुस्तकान्तरे नास्ति. २. 'स्रज'. ३. 'प्रणयात्'. ४. 'निजे भावे'.

द्वितीयोऽध्यायः।

उक्तमपि संबन्धं स्पष्टीकुर्वन्नाह—

**संयुक्ता नायकेन तद्रञ्जनार्थमेकचारिणीवृत्तमनुतिष्ठेत्। रञ्जयेन्न तु सज्जेत सक्तवच्च विचेष्टेतेति संक्षेपोक्तिः। मातरि च क्रूरशीलायामर्थपरायां चायत्ता स्यात्। तदभावे मातृकायाम्। सा तु गम्येन नातिप्रीयेत। प्रसह्य च दुहितरमानयेत्। तत्र तु नायिकायाः संततमरतिर्निर्वेदो व्रीडाभयं च। न त्वेव शासनातिवृत्तिः। व्याधिं चैकमनिमित्तमजुगुप्सितमचक्षुर्ग्राह्यमनित्यं च ख्यापयेत्। सतिकारणे तदपदेशं च नायकानभिगमनम्। निर्माल्यस्य तु नायिका चेटिकां प्रेषयेत्ताम्बूलस्य च॥**

एकचारिणीवृत्तमनुतिष्ठेद्यद्येकचारिणी स्यात्। तथा चोक्तं प्राक्—'वेश्या वाप्येकचारिणी' इति। यदा तु नैकचारिणी तदा कान्तानुवृत्तमुच्यते। संप्रयुक्तस्य गम्यस्य कान्तत्वात्। तच्च संक्षेपेण विस्तरेण च। तत्र पूर्वमुद्धाटिततद्धीना(?)माह—रञ्जयेदिति। सक्तमिवात्मानं प्रकाशयेदित्यर्थः। विस्तारात्तमपि। प्रथमं परतन्त्रा स्यात्। व्याधिं चात्मनः प्रकाशयेत्। मा भूत्कार्यहानिरित्याह—मातरीति। आयत्ता स्यान्न वचनमतिक्रमेदित्यर्थः। मातृकायां कृतकमातरि। सा त्विति सत्या कृतका वा। नातिप्रीयेत नातिस्निह्येत। अयमप्युद्देशः। यदि प्रीयेत कार्यमेव हन्यादित्यर्थः। अप्रीयमाणाया व्यापारमाह—प्रसह्य च दुहितरमानयेदिति। गम्यमभिभूय कार्यवशाद्गम्यान्तरं नयेदित्यर्थः। तत्र त्विति तस्मिन्गमने सति। नायिकायाः कालविशुद्ध्यर्थमाह—संततमिति। अरतिरसुखं रम्येऽपि स्यात्। निर्वेदो निर्विण्णता। व्रीडा कथं मया द्रष्टव्य इति। भयं किं मयि प्रतिविधास्यतीति। नत्वेवेति। काममरत्यादयः स्युर्न पुनराज्ञामतिक्रमेदित्यर्थः। व्याधिं चेति। किंविशिष्टमित्याह—एकमित्यनन्यं ख्यापयेत्। कृतको ज्ञायते। अनिमित्तमाकस्मिकम्। अनिन्द्यमजुगुप्सितम्। निन्दिते ह्यनभिगमनीया स्यात्। अचक्षुरिति। इन्द्रियोपलक्षणार्थं चक्षुर्ग्र-

---

१. 'भयं व्रीडा'. २. 'तदपदेशेन च'.

हणम्। शिरोर्तिमुदरशूलं च। अनित्यमस्थायिनम्। असिन्ख्यापिते किं फलमित्याह—सतीति। कारणे कारणान्तराभिगमने। तदपदेशं व्याध्यपदेशम्। अनभिगमने च व्याधिपीडाख्यापनार्थं विधिमाह—निर्माल्यस्य चेति कृते इत्यध्याहार्यम्। नायिकेत्युक्ते न माता चेटिकां प्रेषयेत्। अनेनापि सुखं स्थास्यामीत्युक्त्वा ताम्बूलस्योपयुक्तस्य वा कृते।

**व्यवाये तदुपचारेषु विस्मयश्चतुःषष्ट्यां शिष्यत्वं तदुपदिष्टानां च योगानामाभीक्ष्ण्येनानुयोगस्तत्सात्म्याद्रहसि वृत्तिर्मनोरथानामाख्यानं गुह्यानां वैकृतप्रच्छादनं शयने परावृत्तस्यानुपेक्षणमानुलोम्यं गुह्यस्पर्शने सुप्तस्य चुम्बनमालिङ्गनं च॥**

व्यवाये मैथुने नायकसंबन्धिनि। तदुपचारेषु मैथुनोपचारेषु सरकताम्बूलादिभिः(षु) विस्मयो न तु भूतपूर्वं सर्वमेतदिति। चतुःषष्ट्यां पाञ्चालिक्यां शिष्यत्वं तद्विज्ञाय (?) कर्तव्यं शिक्षय मामिति। योगानामिति चातुःषष्टिकानां तेनोपदिष्टानामाभीक्ष्ण्येनानुयोगः। पश्चात्तस्मिन्नेव नायके पुनःपुनर्योज्या इत्यर्थः। येनावगच्छेदसत्सुखार्थमेवास्या यत्न इति। तत्सात्म्यादिति। यथा तस्य सुखं तथैकान्ते वर्तेत इत्यर्थः। मनोरथेति। रहसीत्यनुवर्तते। मम मनोरथा एवमासन् कदा त्वया सह दीर्घरजन्यां सपरिहासः संप्रयोगः स्यात्। गुह्यानामिति कक्षोरुजघनानां यद्वैकृतं वैरूप्यं किंचित्तस्य प्रच्छादनम्। स्प्रष्टुं न ददातीत्यर्थः। मा भूद्वैराग्यमस्येति। शयने परावृत्तस्यानुपेक्षणम्। स्नेहख्यापनार्थमभिमुखं स्वपेदित्यर्थः। गुह्यस्पर्शने आनुलोम्यं कक्षां वराङ्गं च स्पृशन्तं न वारयेत्। मा भूत्संप्रयोगेच्छाविघात इति। सुप्तस्य चुम्बनमालिङ्गनं च येन स्नेहात्स्वप्नमपि न ददातीति जानीयात्।

वृत्तं च प्रत्यक्षे परोक्षे वेति प्रत्यक्ष एव बहिर्गतं वृत्तमाह—

**प्रेक्षणमन्यमनस्कस्य। राजमार्गे च प्रासादस्थायास्तत्र विदिताया व्रीडाशाठ्यनाशः। तद्द्वेष्ये द्वेष्यता। तत्प्रिये प्रियता। तद्रम्ये**

१. 'प्रयोग.' २. 'तस्य सात्म्यप्रयोगात्'. ३. 'वैकृताना'.

**रतिः । तमनु हर्षशोकौ । स्त्रीषु जिज्ञासा । कोपश्चादीर्घः । स्वकृतेष्वपि नखदशनचिह्नेष्वन्याशङ्का ॥**

प्रेक्षणमित्यन्यचित्तं पश्येत् । किमयमुत्कण्ठयोद्वेगाद्वान्यमनस्क इति राजमार्गे वर्तमानस्य प्रेक्षणम् । तत्रापि प्रासादस्थायाः । कर्त्रर्थेयं षष्ठी । तत्रेति प्रेक्षणे विदिताया नायकस्य मम पश्यतीति व्रीडा लज्जा स्यात् । सैव शाठ्यनाश इत्युच्यते । तद्धेतुत्वादस्याः । यदि व्रीडां दर्शयेत् कृतकस्नेहोऽस्याः यन्मामसकृत्पश्यतीति शाठ्यं संभाव्येत । तद्व्येत्यादिनानुलोम्यं ख्यापितं भवति । तद्रम्य इति यद्यसावसंप्रयोगशीलस्तदा रम्ये प्रदेशेऽनया धृ(र)तिः कार्या । येन तद्गतस्य संप्रयोगेच्छा भवति । स्त्रीषु जिज्ञासा अन्यासु स्त्रीषु किमस्य स्नेहोऽस्ति न वेति चरप्रणिधानेन जिज्ञासा कार्या । (किमेवं स्यादित्याह—संप्रयोगेच्छा भवति ।) कोपश्चादीर्घः यदि तत्र स्नेह ईर्ष्या तदा कोपः स्नेहख्यापनार्थं कार्यः । स चादीर्घः कदाचिद्विरागः स्यात् । स्वकृतेष्वपीति एतदपीर्ष्याख्यापनार्थं स्नेहनिर्बन्धसूचनम् ।

**अनुरागस्यावचनमाकारतस्तु दर्शयेत् । मदस्वप्नव्याधिषु तु निर्वचनम् । श्लाघ्यानां नायककर्मणां च । तस्मिन्ब्रुवाणे वाक्यार्थग्रहणम् । तदवधार्य प्रशंसाविषये भाषणम् । तद्वाक्यस्य चोत्तरेण योजनम् । भक्तिमांश्चेत् । कथास्वनुवृत्तिरन्यत्र सपत्न्याः । निःश्वासे जृम्भिते स्खलिते पतिते वा तस्य चार्तिमाशंसीत । क्षुतव्याहृतविस्मितेषु जीवेत्युदाहरणम् । दौर्मनस्ये व्याधिदौर्हृदापदेशः । गुणतः परस्याकीर्तनम् । न निन्दा समानदोषस्य । दत्तस्य धारणम् । वृथापराधे तद्व्यसने वालंकारस्याग्रहणमभोजनं च । तद्युक्ताश्च विलापाः । तेन सह देशमोक्षं रोचयेद्राजानि निष्क्रयं च ।**

---

१. 'उन्मनसो वा शोकहर्षाभ्या शोकहर्षौ'. २. 'अन्यशङ्का'. ३. 'मीडिता'. ४. 'पतिते भिन्ने वा तस्यार्ति'. ५. 'दौर्हृदस्य'. ६. 'स्मरणम् । स्वयं कृतेऽपराधे भय तत्कृते पीडां दर्शयेत् । राजोपरोधे व्याध्युपरोधे तद्व्यसने चालंकारस्याग्रहणम्.' ७. 'यथा', 'व्यथा'. ८. 'मोक्षण'.

सामर्थ्यमायुषस्तदवाप्तौ । तस्यार्थाधिगमेऽभिप्रेतसिद्धौ शरीरोपचये वा पूर्वसंभाषित इष्टदेवतोपहारः । नित्यमलंकारयोगः । परिमितोऽभ्यवहारः । गीते च नामगोत्रयोर्ग्रहणम् । ग्लान्यामुरसि ललाटे च करं कुर्वीत । तत्सुखमुपलभ्य निद्रालाभः । उत्सङ्गे चास्योपवेशनं स्वपनं च । गमनं वियोगे । तस्मात्पुत्रार्थिनी स्यात् । आयुषो नाधिक्यमिच्छेत् ॥

अनुरागस्येति जातरागासि कामयस्व मामिति न वाच्यम् । लज्जापरिहारार्थं कामातुरा तिष्ठेदित्याह—आकारत इति । तत्राप्यपरिज्ञाने मदस्वप्नादिषु निर्वचनम् कृतकसुप्ता यदागत्य (?) व्याधिमपदिशेत् । असंभोगेनैव व्याधितासीति । श्लाघ्यानामिति श्लाघनीयानां देवकुलतडागादीनां धर्मयशोर्थानां निर्वचनं साधु कृतमिति । तस्मिन्निति नायक इत्यर्थः । वाक्यार्थग्रहणम् । अवधीरणेऽवज्ञा संभाव्येतेत्यर्थः । न केवलमर्थग्रहणं प्रशंसा कर्तव्या सुभाषितमुक्तं को नाम जानात्येवमभिधातुमिति । विषये भाषणं शब्दस्पर्शादिषूक्तिः कर्तव्या कस्मिन्विषये रुचिरिति ज्ञापनार्थम् तथैवानुतिष्ठेत् । वाक्यस्योत्तरेण योजनं बुद्धिवैदग्ध्यख्यापनार्थम् । तत्रापि यदि भक्तिमांश्चेत् यदि स्नेहवान् । अजातस्नेहस्य वचने प्रत्युतावधीर्यमाणं वैलक्षण्यं (धीरणं वैलक्ष्यं) स्यात् । कथास्वनुवृत्तिस्तेन कथ्यमानास्वनुवर्तनम् । तन्मुखावलोकनहुंकाराभ्याम् । अन्यथास्या अवज्ञेति मन्येत । अन्यत्रेति सपत्न्याः । सपत्नीकथायामीर्ष्याकोपख्यापनार्थं नानुवृत्तिः । निःश्वासे दीर्घनिःश्वसिते स्खलितेऽर्थविस्मरणे आर्तिमाशंसीत मा भूत्पीडेति । तेषामनिष्टसूचकत्वात् । क्षुतं छिक्का । तदादिषु जीवेत्युक्तिः स्नेहसूचिका । दौर्मनस्य इति नायकसंबन्ध्यनिष्टश्रवणाद्दौर्मनस्ये जाते तत्कारणं पृच्छेत् । चिरानुबन्धो मे व्याधिः शत्रुर्बाधत इति । गुणतः परस्याकीर्तनम् अन्यथान्यासक्तेति जानीयात् । समानदोषस्येति ना-

---

१. 'नास्तिक्यमायुषोऽधिगच्छेत्तदवाप्तौ साफल्यं तु'. २. 'भिगमने'. ३. 'संभाषितो देवतोपहारः'. ४. 'तस्मात्पुत्रार्थिनी स्याद्गमने च वियोगे नायुष आधिक्यमिच्छेत्'. ५. 'सामान्य'.

यकेन तुल्यदोषस्यान्यस्य न निन्दा। मा भूदेतद्द्वारेण मां जुगुप्सत इति। यावदेव जानात्यनयापराद्धमिति तावदेव प्रतिविधानार्थं खेदाभ्यङ्गोपवासादिभिः शरीरपीडा दर्शयितव्या। तद्व्यसने नायकस्य पुत्रभ्रात्रादिनाशे व्याधौ वा ज्वरादावुत्पन्नेऽलंकाराग्रहणम्। तद्युक्ताश्चेति कथमपापस्य पतितमेतदिति विलापाः कार्याः। तथैतद्दुःखेनाहं दुःखेय(?)मिति सूचितं भवति। तेनेति नायकेन सह देशमोक्षं स्वदेशत्यागं तमेव रोचयेत्। माता मे विषमशीला। अपलाप्य मां देशान्तरं नयेति। येन स्वातन्त्र्यं स्यादिति। राजनि निष्क्रयं च यदि राजप्रतिबद्धा तदानीं राज्ञः सकाशान्मां निष्क्रीणाहीति रोचयेत्। अन्यथा पलायितां मामानाययेत्। तदवाप्ताविति यत्प्रायशो न घटते तस्यावाप्तौ सत्यां समर्थनमायुषः येन त्वं घटितः अन्यथा नियतं विनष्टासीति ब्रूयात्। अर्थाधिगम इति तस्यार्थलाभे अभिप्रेतसिद्धौ शरीरोपचये वा व्याध्यपगमात्। पूर्वमिति न तदानीमेव संभाषेत। अर्थलाभादिनिमित्तमाशापूरिका देव्या मयोपयाचितकं कृतं तेन च संपन्ना मनोरथाः। सांप्रतं तस्यै बलिरुपहर्तव्य इति। नित्यमिति। यत्तु 'नित्यमलंकारयोगिनी स्यात्' इत्युक्तं तदुपावर्तनकाले द्रष्टव्यम्। परिमित इति बहुभक्षणे प्रायशो वेश्यानां दोषवत्त्वात्। तत्रापि स्निग्धं, न रूक्षम्। ज्वरकारित्वाद्रूक्षस्य। गीते चेति। ग्लान्यामिति। करं नायकसंबन्धिनं स्वहस्तेन गृहीत्वा स्थापयेदित्यर्थः। तत्सुखमिति हस्तस्पर्शसुखम्। उत्सङ्गेति। गमनं वियोग इति। गृहं देवतां वा द्रष्टुं गच्छति स्वयमनुगच्छेत्। तस्मात्पुत्रार्थिनीति ऋतुमत्यहमन्यत्र त्वया न शयितव्यमिति। नाधिक्यमिति एतस्मान्मम मृतिः प्राग्भवति चेद्भद्रमिति।

एतस्या[3]विज्ञातमर्थं रहसि न ब्रूयात्। व्रतमुपवासं चास्य निर्वर्तयेत् मयि दोष इति। [4]अशक्ये स्वयमपि तद्रूपा स्यात्। विवादे तेनाप्यशक्यमित्यर्थनिर्देशः। तदीयमात्मीयं वा स्वयमविशेषेण पश्येत्। तेन विना गोष्ठ्यादीनामगमनमिति। निर्माल्यधारणे श्लाघा उच्छिष्टभोजने च। कुलशीलशिल्पजातिविद्यावर्णवित्तदे-

१. 'खेदाभ्यङ्गो'. २. 'अवलापि'. ३. 'अभिज्ञात'. ४. 'अशक्यः'.

शमित्रगुणवयोमाधुर्यपूजा । गीतादिषु चोदनमभिज्ञस्य । भयशीतोष्णवर्षाण्यनपेक्ष्य तदभिगमनम् । स एव च मे स्यादित्यौर्ध्वदेहिकेषु वचनम् । तदिष्टरसभावशीलानुवर्तनम् । मूलकर्माभिशङ्का । तदभिगमने च जनन्या सह नित्यो विवादः । बलात्कारेण च यद्यन्यत्र तया नीयेत तदा विषमनशनं शस्त्रं रज्जुमिति कामयेत । प्रत्यायनं च प्रणिधिभिर्नायकस्य । स्वयं वात्मनो वृत्तिग्रहणम् । न त्वेवार्थेषु विवादः । मात्रा विना किंचिन्न चेष्टेत ॥

तद्रूपा गृहीतव्रता स्यात् । विवाद इति । 'कस्मिंश्चिद्वस्तुनि केनचिद्विप्रतिपत्तौ । तेनाप्यशक्यमिति । 'शक्तश्चेत्स एवेति कथयेदित्यर्थः । स्वामिनो द्रव्यं नायकसंबन्धि आस्थापनपालनाभ्यामविशेषेण पश्येत् । निर्माल्यमिति । स्वकीयं माल्यादि मम देयमिति । उच्छिष्टेति । यद्युपनिमन्त्रितो न मां नयसि भुक्तशेषमवश्यं प्रेषयितव्यमिति । कुलशीलेति । उदितोदितं कुलमस्य नानुदितमनुदितं वेति । शोभनं शीलं न विषममिति । प्रकृष्टमालेख्यादि शिल्पं नाप्रकृष्टमिति । विशुद्धास्य जातिर्न संकीर्णेति । निर्मलास्यान्वीक्षिक्यादिविद्या न दुर्गृहीतेति । कनकपिञ्जरोऽस्य वर्णो न पाण्डुरिति । न्यायेनोपार्जितं वित्तं नान्यायेनेति । पूज्योऽस्य देशो नापूज्य इति । गुणवन्त्यस्य मित्राणि न दोषवन्ति । शोभना गुणा न त्वशोभनाः । प्रथमं वयो न द्वितीयं न तृतीयमिति । मधुरं वचो नामधुरं चेति पूजा स्तुतिः कर्तव्या । अभिज्ञस्य गीतादौ प्रेरणम् । अनभिज्ञश्चोद्यमानो मामुपहसतीत्याशङ्कते । अभिज्ञस्तु मद्विज्ञानं श्लाघत इति मन्यते । भयेति । इदमासक्तिख्यापनार्थम् । और्ध्वदेहिकेष्विति । वर्तमानलोकादन्यलोकेऽपि यो देहः स जन्मान्तरे स्यात् । (तत्रापि) अयमेव मे प्रियः स्यादिति वचनमुदाहार्यम् । नियतमपि वशीकरणमलीकतया प्रयुङ्क्ते येन तव विधेयासीत्याशङ्का कार्या । तदभिगमन इति । नायकमनुगच्छन्तीं किं मां धारयसीति मात्रा सह नित्यं कृतककलहोऽनुरागप्रकटनार्थः । बलात्कारेण चेति । अन्यत्र गम्ये कार्यापेक्षया नीयेत मात्रा तदा तत्समक्षं पूर्वो-

---

१. 'प्रस्थानयनं'. २. 'स्वयमेवेति', 'त्वमेवेति'.

क्ताश्चारत्यादयः संभवन्त्येव किं त्वेतदधिकं विषाद्यशनमिति । आपातमृत्युहेतुं कामयेद्वाचैव न तु क्रियया । प्रत्यायनं च प्रणिधिभिरिति मातुरेवास्या दोषो न त्वस्या इति । स्वयं वेति । कुत्सिता वेश्यानां जीविका यत्स्निग्धं संत्यज्यार्थतृष्णया मातरोऽन्येन योजयन्तीति । न त्वेवेति । कामं तदभिगमने विवादः स्यात् नायकेन तु यद्येवं तत्साधयन्त्या जनन्या न विवादस्तदर्थत्वात्प्रयासस्य । विनाशमात्रं (मात्रां विना) किंचिच्चेष्टेतेति । असौ भोक्तुमपि यदाह माता न कुर्यात् । कार्येषु सैव व्यापारयितव्येत्यर्थः ।

प्रवासे शीघ्रागमनाय शापदानम्[1] । प्रोषिते मृजानियमश्चालंकारस्य प्रतिषेधः । मङ्गलं त्वपेक्ष्यम् । एकं शङ्खवलयं वा धारयेत् । स्मरणमतीतानाम् । गमनमीक्षणिकोपश्रुतीनाम् । नक्षत्रचन्द्रसूर्यताराभ्यः स्पृहणम् । इष्टस्वप्नदर्शने तत्संगमो ममास्त्विति वचनम् । उद्वेगोऽनिष्टे शान्तिकर्म च । प्रत्यागते कामपूजा । देवतोपहाराणां करणम् । सखीभिः पूर्णपात्रस्याहरणम्[3] । वायसपूजा च । प्रथमसमागमानन्तरं चैतदेव वायसपूजावर्जम्[4] । सक्तस्य चानुमरणं ब्रूयात्[2] ॥

प्रवास इति नायकस्य कार्यवशात् । शापदानं शपथदानम् । मज्जीवितेन शापितोऽसि यदि शीघ्रं नागच्छसीति । परोक्षे वृत्तमाह—प्रोषित इति । मृजानियमः शरीरासंस्कृतिः । परोक्षे विफलमिति चेन्न । तदीयजनसमक्षे सफलत्वात् । प्रवासचर्यायामुक्तमपि चैतत्प्रायशः कुलयोषितस्तत् इदं तु वेश्याया एवेति । प्रतिषेधोऽधारणम् । मङ्गलं शङ्खवल्यादि त्वपेक्ष्यम् । प्रोषितस्य मङ्गलापेक्षया तावन्मात्रं धार्यमित्यर्थः । स्मरणमतीतानां नायकेन सहोपभुक्तानाम् । ईक्षणिका विप्रश्निकास्तासां गमनं गृहे इत्यर्थात् । उपश्रुतिर्निशीथे शुभाशुभपरिज्ञानार्थं प्रथमवाक्यग्रहणम् । तेन तस्या रथ्याचत्वरेषु गमनमिति । नक्षत्रादिभिः स्पृहणमिति पुण्यवन्त एते यन्नायकेन दृश्यन्ते । अहमपुण्या यन्मा नेक्षत इति । इष्टस्वप्नेति सद्भूतं

१. 'शपथदानम्'. २. 'ब्रूयात्'. ३ 'पूर्णपात्रग्रहणम्'. ४. 'वर्जनम्' ५. 'सरण'.

शुभं स्वप्नं दृष्ट्वा प्रत्यूषे तज्जनसमक्षं प्रकाश्य आस्तां तावदन्यत्तत्समागम एव ममास्त्विति वचनमुदाहर्तव्यम् । दृष्ट्वापि कृतकमदृष्टं स्वप्नं प्रकाशयेत् । यदि देशान्तरस्थस्य नायकस्याभिप्रेतसिद्धिस्तैस्तैरुपलब्धा स्यात् । उद्वेगोऽनिष्ट इति । अशुभसूचके स्वप्नदर्शने सत्युद्वेगः । तस्य किमप्यनिष्टमस्तीति शान्तिकर्म ब्राह्मणानाहूय कार्यम् । आगते प्रत्यक्षे वृत्तमाह—कामेति । त्वत्प्रसादादागत इति कामपूजनम् । देवतोपहाराणां च तज्जनसमक्षं प्रतिपन्नानां करणं निष्पादनम् । पूर्णपात्रस्येति । इष्टबुद्ध्या स्वजनाद्यदुत्तरीयमाच्छिद्य गृह्यते तत्पूर्णपात्रम् । तस्य सखीभिराहरणम् । वायसेति । वल्लभे समागते पिण्डं ते दास्यामीति प्रतिज्ञातं गृहाणेति । नायकेन सह यः प्रथमः समागमस्तदनन्तरमेतत्कामपूजादिकमनुष्ठेयम् । प्रत्यक्षे परोक्षे च वृत्तमाह—सक्तस्य चेति । अनुमरणं ब्रूयात् त्वय्यतीते न मया जीवितव्यमिति । सक्तो ह्येवं संभावयति नान्यः ।

कः पुनः सक्त इत्याह—

**नि²सृष्टभावः समानवृत्तिः प्रयोजनकारी नि³राशङ्को निरपेक्षोऽर्थेष्विति स⁴क्तलक्षणानि ॥**

निसृष्टभाव इति सर्वात्मना विश्वस्तः । समानवृत्तिस्तावत्प्रवृत्तौ निवृत्तौ च । प्रयोजनकारी नायिकाया यत्कार्यं तदुदीरितमात्रं यः कर्तुं शक्नोति । निराशङ्को न कुतश्चिदाशङ्कते तस्यां प्रवर्तमानः । निरपेक्षोऽर्थेषु आत्मास्य तया (?) गृह्यमाणेष्वपि ।

**तदेतन्निदर्शनार्थं दत्तकशासनादुक्तम् । अनुक्तं च लो⁵कतः शीलयेत्पुरुषप्रकृतितश्च ॥**

तदित्युक्तं वृत्तम् । निदर्शनार्थं दत्तकशासनादिति दत्तकशास्त्रं दृष्ट्वा । लोकत इति पराराधनकुशलाच्छीलयेदागमयेत् ।

---

१. 'शक्तस्य'. २. 'विसृष्ट'. ३. 'निरातङ्क'. ४. 'शक्तलक्षणम्'. ५. 'शीलयेल्लोकात्पुरुषप्रकृतेश्च'.

गम्यस्याप्यनुवर्तमानस्य वेश्यास्वरूपप्रतिपत्त्यर्थमाह—

भवतश्चात्र श्लोकौ—

सूक्ष्मत्वादतिलोभाच्च प्रकृत्याज्ञानतस्तथा ।
[1]कामलक्ष्म तु दुर्ज्ञानं स्त्रीणां तद्भावितैरपि ॥
कामयन्ते विरज्यन्ते [2]रञ्जयन्ति त्यजन्ति च ।
[3]कर्षयन्त्योऽपि सर्वार्थाञ्ज्ञायन्ते नैव योषितः ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे कान्तानुवृत्तं द्वितीयोऽध्यायः ।

---

स्त्रीणामिति वेश्याशब्दत्वादिति । चेतोधर्मेणातीन्द्रियत्वाद्वेश्याशब्दवाच्यानां वैरिच्छा (?) लक्षणः कामस्तस्य लक्ष्म स्वरूपं दुर्ज्ञानं किमिदं स्वाभाविकं वा कृत्रिममिति दुःखेन ज्ञायते । कथमित्याह—सूक्ष्मत्वादिति चेतोधर्मेणातीन्द्रियत्वात् । क्रियया सुज्ञानमिति चेदाह—अतिलोभादिति । लुब्धा हि स्वाभाविकमिव रूपयन्ति प्रवृत्त्या न ज्ञायन्त इति । कामपरासु हि विश्वसन्ति पुमांसः । ततश्च तेषां स्वभावत एव रागाचरणसंभवादज्ञानमेव प्रादुर्भवति न ज्ञानम् । तद्भावितैरपि लक्ष्मपरिज्ञानाभियुक्तैरपि दुर्ज्ञेयं किमिदं स्वाभाविकं कृत्रिमं वेति । तदेवं कृतकं च कामलक्ष्म दर्शयन्नाह—कामयन्त इति । अकृतकं कामयन्ते तदपि न स्थिरमित्याह—कृतककेलिवशाद्विरज्यन्ते । कृतककेलिवशाद्रञ्जयन्ति । तदपि न स्थिरमित्याह—त्यजन्तीति । किमर्थमित्याह—कर्षयन्त्योऽपीति । सर्वार्थान् गृह्णन्त्योऽपीत्यर्थः । अलक्तकवन्निष्पीडितसारत्वाज्ज्ञायन्ते नैव किंरूपा इति । योषितो वेश्या इत्यर्थः । तस्मात्तासु नासक्तिं कुर्यात् । केवलं यावदर्थं प्रतिपद्येरन्नित्युपदेशः । इति कान्तानुवृत्तं द्विपञ्चाशत्तमं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणे कान्तानुवृत्तं द्वितीयोऽध्यायः ।

---

१. 'कामलक्षणदुर्ज्ञानं'. २. 'रज्यन्ते रमयन्त्यथ'. ३. 'कर्षयन्त्यपि'.

## तृतीयोऽध्यायः ।

एवमनुवर्तितात्कान्ताद्वित्तमाददीत । तच्च नानुपायेन साधयेदित्युक्तम् । इदानीमर्थागमोपाया उच्यन्ते । तच्चादानं द्विविधं स्वाभाविकमितरच्च यदाह—

**सक्ताद्वित्तादानं स्वाभाविकमुपायतश्च । तत्र स्वाभाविकं संकल्पात्समधिकं वा लभमाना नोपायान्प्रयुञ्जीतेत्याचार्याः । विदितमप्युपायैः परिष्कृतं द्विगुणं दास्यतीति वात्स्यायनः ॥**

सक्तादित्युक्तलक्षणात् । स्वाभाविकं न यत्नमपेक्षते । सक्तस्यार्थेषु निरपेक्षत्वात् । उपायतश्च यदसक्ताद्भवति तत्प्रायत्निकम् । तत्र स्वाभाविकं वित्तं लभमाना संकल्पसमधिकं वेति संकल्पादिति संकल्प एतावच्च यदियमिति संकल्पिताच्च यदधिकं (?) तत्र नोपायान्प्रयुञ्जीत सुलभत्वात् । तेनासंकल्पिते संकल्पिते च प्रयोगः । विदितमपीति स्वाभाविकत्वेन समधिकत्वेन चापरिच्छिन्नमप्युपायैः परिष्कृतमुपबृंहितं द्विगुणं दास्यतीति तत्र प्रयोगो युक्तः ।

यैरुपायैरादीयमानेऽप्यर्थे नार्थपरता ज्ञायते तानुपायानाह—

**अलंकारभक्ष्यभोज्यपेयमाल्यवस्त्रगन्धद्रव्यादीनां व्यवहारिषु कालिकमुद्धारार्थमर्थप्रतिनयनेन । तत्समक्षं तद्वित्तप्रशंसा । व्रतवृक्षारामदेवकुलतडागोद्यानोत्सवप्रीतिदायव्यपदेशः । तदभिगमनर्निमित्तो रक्षिभिश्चौरैर्वालंकारपरिमोषः । दाहात्कुड्यच्छेदात्प्रमादाद्भवने चार्थनाशः । तथा याचितालंकाराणां नायकालंकाराणां च तदभिगमनार्थस्य व्ययस्य प्रणिधिभिर्निवेदनम् । तदर्थमृणग्रहणम् । जनन्या सह तदुद्भवस्य व्ययस्य विवादः । सुहृत्कार्येष्वनभिगमनमनभिहारहेतोः । तैश्च पूर्वमाहृता गुरवोऽभिहाराः पूर्वमुप-**

---

१. 'शक्तात्स्वाभाविक वित्तादानमुपायतश्च स्वाभाविकं सकल्पित तत्समधिक वा'. २. 'वात्स्यायनः । सक्तोऽनुपायतश्च साधयेत्'. ३. 'पेयवस्त्रगन्धमाल्यद्रव्यादीना'. ४. 'द्रव्यव्यवहारादिषु', 'द्रव्यादितद्व्यवहारिषु'. ५. 'मुद्धरणम्'. ६. 'प्रीतिदायादुपदेशः'. ७. 'निमित्ता–परिमुष्टिः'. ८. 'सुहृदा'. ९. 'आहूता.'. १०. 'पूर्वमश्राविताः स्युः'.

नीताः पूर्वं श्राविताः स्युः। उचितानां क्रियाणां विच्छित्तिः[1]। नायकार्थं[2] च शिल्पिषु कार्यम्। वैद्यमहामात्रयोरुपकारक्रिया कार्यहेतोः। मित्राणां चोपकारिणां[3] व्यसनेष्वभ्युपपत्तिः[4]। गृहकर्म[5]। सख्याः पुत्रस्योत्सङ्गनम् दोहदो व्याधिर्मित्रस्य दुःखापनयनमिति। अलंकारैकदेशविक्रयो नायकस्यार्थे[6]। तया शीलितस्य चालंकारस्य भाण्डोपस्करस्य वा वणिजो विक्रयार्थं दर्शनम्। प्रतिगणिकानां च सदृशस्य भाण्डस्य व्यतिकरे प्रतिविशिष्टस्य ग्रहणम्। पूर्वोपकाराणामविस्मरणमनुकीर्तनं[7] च। प्रणिधिभिः प्रतिगणिकानां लाभातिशयं श्रावयेत्। तासु नायकसमक्षमात्मनोऽभ्यधिकं लाभं भूतमभूतं वा व्रीडिता नाम वर्णयेत्। पूर्वयोगिनां च लाभातिशयेन पुनः संधाने यतमानानामाविष्कृतः प्रतिषेधः। तत्स्पर्धिनां त्यागयोगिनां[8] निदर्शनम्[9]। न पुनरेष्यतीति बालयाचितकमित्यर्थागमोपायाः॥

भक्ष्यं लड्डुकादि। भोज्यमन्नादि कृतमकृतं वा। पेयं सुरादि। वस्त्रं चतुर्विधं त्वक्फलकृमिरोमजम्। गन्धः कुङ्कुमादिः। माल्यं ग्रथितकुसुमादि। आदिशब्दात्ताम्बूलफलपूगपशुभाण्डोपस्करादि। तदुद्धार्य(रार्थ)मिति संबन्धः। व्यवहारिष्विति विक्रेतृषु व्यवस्थितम्। कालिकमिति कालेन देयम्। उद्धार्यमादावित्यर्थः। अर्थप्रतिनयनेनेति मूल्यप्रतिदानेन न तु द्रव्यस्यैव प्रतिनयनेन। तत्समक्षमिति नायकसमक्षम्। यतो दृष्ट्वा स्वयमेव रोचते मदीयमिति तत्प्रशंसत इति ददाति। व्रतेति। आगाम्यष्टम्यां मम व्रतं तत्रानेन प्रयोजनमिति। तद्दर्शे (?) मया वृक्षो रोपितस्तस्य प्रतिष्ठेति। आम्राणां मधूकानां मया आरामः कार्यः। कर्णस्य वा कर्णवेधादिकं कार्यमिति (?)। देवकुलमुत्थाप्यमुत्थापितस्य वा प्रतिष्ठेति। तडागं पुष्करिण्यादिकं खातयितव्यं खानितस्य वा प्रतिष्ठेति। उत्सवः परश्वो भविता त-

१. 'व्युच्छित्ति'. २. 'अभावज्ञानायाकार्ये च'. ३. 'उपकारिणां वा'. ४. 'व्यसनोत्सवेषु'. ५. 'इति च'. ६. 'नायकार्थतया शीलितस्य'. ७. 'नित्यमनुकीर्तनं'. ८. 'त्यागयोगिता'. ९. 'निदर्शनमित्यर्थागमोपाया.। न पुनरेष्यतीति'.

ज्ञानेन प्रयोजनमिति। स्निग्धोऽयमागतस्तस्य प्रीत्या अवश्यं किंचिद्देय-मिति तद्व्यपदेशः। तदभिगमनमिति नायकाभिगमननिमित्तं यस्य (?) रक्षिभिर्दण्डपाशिकैः सहायैः कृतसंवित्कैश्चौरैर्वा कृतसंवित्कैरलंकारमोक्षः कार्यः। येनेयमदग्धन्मूल(?)मागच्छन्ती दुःखितेति ज्ञात्वा अन्यमलंकारं ग(य)च्छति दाहादिति। प्रमादादुत्थितेऽग्नौ च दग्धमिति नाशः प्र-काश्यः। न तु स्वयमादीप्यः। अनेकप्राण्युपघातदोषात्। कुड्यच्छेदा-दिति चौरैः संधिखातादपहृतमिति नाशः। चौरव्यञ्जनैर्वा कुड्यच्छेदान्नाशः। प्रमादादिति। मम मातुर्वा प्रमादाद्गृह एव द्रव्यनाशः। तथेति यथा द्रव्यस्य दाहादिना नाशः याचितालंकाराणां कार्यवशादन्यतो मार्गितानां नाय-कालंकाराणां तेन स्थापितानां दाहादिना (नाशे) प्रकाशितेऽवश्यं प्रय-च्छति स्वकीयं च न मृगयति। प्रणिधिभिरिति परिचारकमुखा ये नायकेन प्रणिहितास्तैर्व्ययस्यातिवदनं नायकाग्रतस्त्वामभिगन्तुमस्याः सरक्तताम्बूला-दिभिरियान् व्यय उठित (उत्थित) इति। तदर्थमिति नायकनिमित्तव्यया-र्थम्। ऋणग्रहणं तत्समक्षमित्यर्थात्। जनन्येति। ऋणं किमिति गृह्णासि कथं त्वया शोधयितव्यमित्यभिदधत्या मात्रा सह तदुद्भवस्य नायकसंब-न्धिनः कृते नात्मीयस्य विवादः कर्तव्यः। किं तव अहमेवात्मानमपि वि-क्रीय शोधयिष्यामीति। तेन तथाविधं दृष्ट्वावश्यं ददातीत्यर्थः। सुहृत्का-र्येष्विति नायकमित्रोत्सवादिष्वनभिगमनं कार्यं आहूयमाना न यामि। नायकेन गण्यमानाया अपि कारणमाह—अनभिहारहेतोरिति। अभिहार-मु(उ)पायनं तन्मम नास्तीति। तैश्च पूर्वमाहृता इति सुहृद्भिरस्माकमप्यु-त्सवे महान्तोऽभिहाराः। पूर्वमुपनीता इति नायकस्य। पूर्वं श्राविताः स्युः यावदेव सुहृत्कार्यं न संभवति। पूर्वं याचितं हि कार्यकाले प्रयच्छति यदि न दद्यादवश्यमेव तदानीमनभिगमनम्। उचितानामिति प्रत्यहं शरीर-स्थित्यर्थं क्रियमाणानां विच्छेदः कार्यः। येनायमिदानीं शरीरस्थितिर-प्यस्या न संभवतीति प्रयच्छति। नायकार्थं चेति। नायकादर्थो यस्मिन्। कार्यं शिल्पिषु। निर्देश्यमिति शेषः। अयमुत्कृष्टः शिल्पी कारणकं (?) बहून्मृगयते तच्च मम नास्ति यदि त्वं प्रयच्छसि कारयेयं नो चेदामविति (?)

कारयिष्यामीति । उपकारक्रिया उपकारकरणम् । कार्यहेतोरिति इदं तत्कार्यं यदुपकृतौ वैद्या भेषजापदेशेन नायकं दापयन्ति । महामात्रश्चोपकृतो हठाददातुकाममपि । मित्राणामिति नायकसंबन्धिनामुपकर्तुं शीलं येषां नान्येषाम् । व्यसनेषु दैवमानुषेषु । अभ्युपपत्तिः साहाय्यम् । तानि हि व्यसनेष्वभ्युपपन्नानि नायकमभिधायोपकुर्वन्ति । गृहकर्म च्छादनेष्टकादि कारयितव्यम् । सख्याः स्वस्याः पुत्रस्योत्सङ्गनं यस्योत्सवनिकेति प्रतिपत्तिः । क्रियाकालोपलक्षणं चैतत् । अन्नप्राशनं चूडाकरणादि वा करणीयम् । दोहदोऽभिलाषो यस्मिन्सख्याः । व्याधिर्वा आकस्मिकः प्रतिकर्तव्यः । मित्रस्य च युष्मदीयस्य पुत्रादि मरणान्ममेह दुःखमुत्पन्नं तत्संवर्गना(?)-दपनेतव्यमिति । इत्येवं गृहकर्मादि व्यपदेश्यमिति शब्दशेषः । अलंकारैकदेशविक्रय इति स्वस्यालंकारस्यैकदेशमाकृष्य तत्समक्षं विक्रेयो येनायं मदर्थे विक्रीणातीति प्रयच्छति । तया नायिकया । शीलितस्य रुचितालंकारस्य भाण्डोपस्करस्य वा शीलितस्य । वणिजः कृतसंकेतस्य नायकसमक्षं दर्शनं कर्तव्यं येनायं नास्त्यस्याः किमपि यच्छीलितमपि विक्रेतुमारब्धमिति प्रयच्छति । 'भाण्डसंप्लवे विशिष्टग्रहणम्' इति दत्तकसूत्रस्पष्टार्थं सूत्रान्तरमाह—प्रतिगणिकानामिति । भाण्डस्य सादृश्यात्स्वेन भाण्डेन व्यतिकरे परिवर्ते सति मा भूत्पुनरेवमिति प्रतिशिष्टस्य प्रमाणसंस्थानाभ्यां ततोऽधिकस्य ग्रहणं वणिजो हस्तात् क्रमेण नायकसमक्षं कुर्यात् येनायं क्रीत्वा प्रयच्छति । प्रायशश्च वेश्यानां सामान्यानां कार्योत्पत्तावन्योन्यस्य भाण्डं याचितकं भवतीति प्रतिगणिकाग्रहणम् । अविस्मरणमिति विस्मरणे हि तवेदं मयोपहृतमिति यदि तेनाभिहिता किं ब्रूयात् । अनुकीर्तनं च तत्समक्षं मयोपकृतमत्र न नश्यतीति पुनः प्रयच्छति । प्रणिधिमिश्चारैः प्रतिगणिकानामात्मनातुल्यदानमभिहीनां (?) लाभातिशयश्रावणम् । नायकसमक्षं भवदावासाद्विष्णुमित्रया लब्धमिदमधिकमित्यादि । तास्विति प्रतिगणिकासु यो लाभस्तस्मादप्यधिकमिति योज्यम् । भूतं वा नायकेन दत्तम् । अभूतमदत्तम् । व्रीडिता नामेति लज्जितेव वर्णयेत् । येन सोऽपि लज्जितः प्रयच्छेत् । पूर्वयोगिनामिति । पूर्वसंस्तु-

ष्टानां विशीर्णानां लाभातिशयेनाधिकेन लाभेन पुनः संधाने यतमानानां यत्नं कुर्वतामाविष्कृतः प्रकटः प्रतिषेधः कर्तव्यः । तथासौ श्रुत्वा मय्यनुरक्तेति प्रयच्छति । तत्स्पर्धिनां चेति नायकस्पर्धिनां त्यागयोगिनां निदर्शनं प्रणिधिभिः । सभागत्वख्यापनार्थमित्यर्थः । येनायं श्रुत्वा वितरेत् । एषा मा भूदिति (?) प्रयच्छति । न पुनरेष्यतीति । न पुनर्गृहमनेनागन्तव्यमिति बालेन प्रयुक्तेन याचितकं कार्यमिदं मे देहीति । बालवद्वा लज्जां त्यक्त्वा याचितव्यमित्यर्थः । एतेऽर्थागमोपाया देशकालावस्थापेक्षया प्रयोक्तव्याः । इत्यर्थागमोपायास्त्रिपञ्चाशत्तमं प्रकरणम् ॥

सक्ताद्वित्तादानमुपायैरुक्तं विरक्ते तु किं प्रतिपद्येतेति विरक्तप्रतिपत्तिरुच्यते । तत्र विरक्तस्य लक्षणमाह—

**विरक्तं च नित्यमेव प्रकृतिविक्रियातो विद्यात् मुखवर्णाच्च ॥**

नित्यमेवेति सर्वत्र क्रियासु वर्तमानम् । प्रकृतिविक्रियात इति स्वभावान्यथात्वेनेत्यर्थः । अनेनेङ्गितमन्यथावृत्तिलक्षणं दर्शयति । मुखवर्णाच्च विद्यादित्येव । मुखरागादित्यर्थः । कश्चिदेव मुखरागेऽभिरागं सूचयति तेनेङ्गिताकाराभ्यां रक्तवद्विरक्तमपि विद्यादित्युक्तम् ।

तामन्यथावृत्तिमाह—

**ऊनमतिरिक्तं वा ददाति । प्रतिलोमैः संबध्यते । व्यपदिश्यान्यत्करोति । उचितमाच्छिनत्ति । प्रतिज्ञातं विस्मरति । अन्यथा वा योजयति । स्वपक्षैः संज्ञया भाषते । मित्रकार्यमपदिश्यान्यत्र शेते । पूर्वसंसृष्टायाश्च परिजनेन मिथः कथयति ॥**

अतिरिक्तं वा यथादीयमानात् । प्रतिलोमैः संबध्यते नायिकाया विपक्षैः सह प्रीतिं करोति । व्यपदिश्य स्नातव्यमिति अन्यत्करोति सज्जीकृतेऽपि स्नानोपकरणे भुङ्क्ते । उचितमाच्छिनत्ति प्रत्यहं दीयमानं न ददाति । प्रतिज्ञातमिदं मया देयमिति विस्मरति मृग्यमाणे न प्रतिज्ञातमित्यन्यथा

१. 'त्रिपञ्चाश'. २. 'प्रकृति.'. ३. 'मन.प्रकृतिविक्रियातो मुखवर्णाच्च विद्यात्'. ४. 'मुखवर्णाकृतितश्च'. ५. 'प्रतिलोमैर्लोकैः'. ६. 'त्वन्यत्'. ७. 'सह मिथ.'. ८. 'व्यपदिश्यान्यत्'.

योजयति न त्विदमिति । स्वपक्षैरिति मित्रादिभिः सह संज्ञया भाषते न वचसा । मा श्रौषीदियमिति । मित्रकार्यमपदिश्य मयाद्य कर्तव्यमित्यन्यत्र शेते नायिकान्तरगृहे । पूर्वसंसृष्टायाश्च नायिकायाः परिजनेन परिचारकेण सह मिथो रहसि कथयति यत्पूर्ववृत्तं वर्तमाननायिकागतं वा ।

तस्मिन्विरक्त इति ज्ञातेऽनुष्ठानमाह—

**तस्य[१] सारद्रव्याणि प्रागवबोधादन्यापदेशेन हस्ते कुर्वीत । तानि चास्या[२] हस्तादुत्तमर्णः प्रसह्य गृह्णीयात्[३] । विवदमानेन सह धर्मस्थेषु व्यवहरेदिति विरक्तप्रतिपत्तिः[४] ॥**

प्रागवबोधादिति यावदसौ न जानाति ज्ञातोऽहमनया विरक्त इति । अन्यथा प्रतिविधानान्तरं चिन्तयेत् । तत्राप्यन्यापदेशेन । यत्किंचिद्व्याजं कृत्वेत्यर्थः । तानि चेति सारद्रव्याणि । तस्या (अस्या) इति नायिकाया हस्तात् । उत्तमर्ण इति तस्मादुत्तमर्णान्नायकार्थमृणमाहृतं(?) गृहीतवती स तया कृतसंकेतः प्रसह्याभिभूय गृह्णीयात् । विवदमानेनेति मदीयमेतत्त्वं किं गृह्णासीति विवादं कुर्वता नायकेन सह धर्मस्थेषु प्राड्विवाकादिषु च व्यवहरेदुत्तमर्णः । यदि तु न विवदेत्सिद्धं कार्यम् । इति विरक्तप्रतिपत्तिश्चतुःपञ्चाशं प्रकरणम् ॥

विरक्तस्य स्वयमेव निष्कासितत्वान्न निष्कासनम् । यस्तु सक्तत्वात्स्वयं न निष्कसति तस्य निष्कासनक्रमा[५] उच्यन्ते । तत्रायं प्रथमः कामो (कल्पो) यदस्यानुपासनम् । यदाह—

**सक्तं[६] तु पूर्वोपकारिणमप्यल्पफलं[७] व्यलीकेनानुपालयेत् । असारं तु निष्प्रतिपत्तिकमुपायतोऽपवाहयेत् । अन्यमवष्टभ्य ॥**

अल्पदत्तमपि व्यलीकेनापराधेनानुपालयेत् । तस्य सक्तत्वात् । पूर्वं बहुधा कृतोपकारोऽपि परामिच्छति तदा निष्कासयेदित्यर्थः । असारं निर्द्रव्यम् । अपवाहयेन्निष्कासयेत् । यद्यपि तदात्वेनापि तथा भविष्यतीति चेदाह—निष्प्रतिपत्तिकमिति । निरनुष्ठानमित्यर्थः । ननु रतिफलत्वात्कथं

---

१. 'तस्य च'. २. 'वा'. ३. 'प्रतिगृह्णीयात्'. ४. 'इति विरक्तप्रतिपत्ति' इति पुस्तकान्तरे नास्ति. ५. 'क्रियाः'. ६. 'शक्त'. ७. 'अल्पफलमप्यलीकेन'.

निष्कास्य इति चेदाह—अन्यमवष्टभ्येति । अन्यस्मादुभयोपपत्तेः । वर्तमानादन्यं पूर्वसृष्टं विशीर्णमन्यं चास्य चासृत्य(चानुसृत्य) अपवाहयेदिति योज्यम् । अन्यथा विपक्षस्याभावात् । सत्यप्युपयोगे सक्तस्यानिष्कासनात् ।

ते च निष्कासनोपायाः प्रकाशे रहसि वा स्थितस्य । तत्र पूर्वमधिकृत्याह—

**तदनिष्टसेवा । निन्दिताभ्यासः । ओष्ठनिर्भोगः । पादेन भूमेरभिघातः । अविज्ञातविषयस्य संकथा । तद्विज्ञातेष्वविस्मयः कुत्सा च । दर्पविघातः । अधिकैः सह संवासः । अनपेक्षणम् । समानदोषाणां निन्दा । रहसि चावस्थानम् ॥**

तस्य नायकस्य यदनिष्टं तस्य सेवा कर्तव्या येनायं प्रागेवेयं मम च्छन्दानुवर्तिनी संप्रति कारवादभक्ष(?)विरक्तेति व्यावर्तते । निन्दितं गर्हितं तृणच्छेदलोष्टमर्दनादि तस्याभ्यासः पुनः पुनः करणं तदग्रतः । येनायं ममाशुभं काङ्क्षत इति जानाति । ओष्ठनिर्भोगः तं दृष्ट्वा स्वमोष्ठं च क्रोडीकृत्य भयं निष्कासयेत् । पादेन भूमेरभिघातो भूमौ पादास्फालनम् । तदुभयं नित्यक्रुद्धताख्यापनार्थम् । अविज्ञातविषयस्य संकथेति यस्मिन्विषये नायकस्य परिज्ञानं नास्ति तस्मिन् तस्य संबन्धिनी शोभनमिदं जानातीति संकथा कर्तव्या यथास्य लोकमध्ये वैलक्ष्यं भवति । विज्ञातेष्वविस्मयो विरागख्यापनार्थम् । कुत्सा च दुःशिक्षितमस्य । दर्पविघातः शौर्यादिजनितदर्पस्यापनयनमन्यं प्रोत्साह्य । येनायं विलक्षीभवति । अधिकैः सह संवासो येन तेभ्यो बिभ्यन्न ढौकते । अनपेक्षणमिष्टानिष्टवस्तुष्ववज्ञाख्यापनार्थम् । समानदोषाणां निन्दा यथायं तद्द्वारेण मां कुत्सतीति जानाति । रहसि चावस्थानं संकथा वा ।

तत्र रतमधिकृत्याह—

**रतोपचारेषूद्वेगः[1] । मुखस्यादानम्[2] । जघनस्य रक्षणम् । नखदशनक्षतेभ्यो जुगुप्सा । परिष्वङ्गे भुजमय्या सूच्या व्यवधानम्[3] । स्तब्धता गात्राणाम् । सक्थ्नोर्व्यत्यासः । निद्रापरत्वं च[4] । श्रान्तमु-**

१. 'संरागः'. २. 'सुरतस्य'. ३. 'व्यधनम्'. ४. 'वा'.

पलभ्य चोदना। अशक्तौ हासः। शक्तावनभिनन्दनम्। दि[१]-वापि। भावमुपलभ्य महाजनाभिगमनम्॥

रतार्थे सरकताम्बूलादिषूपचारेषु उद्वेग इत्यप्रतिग्रहणम्। प्रतिग्रहणे वा असौमनस्यम्। मुखस्यादानं मुखं चुम्बितुं न देयम्। जघनस्य रक्षणं स्प्रष्टुं वा न देयम्। नखदशनक्षतेभ्यस्तत्कृतेभ्यो जुगुप्सा। 'जुगुप्साद्यर्थानाम्' इत्यपादानसंज्ञा। भुजमध्येति। भुजौ व्यत्यस्य। स्वस्कन्धयोर्निदध्यात्। ततो भुजमेकीकृत्य सूचीव सूची तया व्यवधानं परिष्वङ्गस्य। स्तब्धता गात्राणां कर्तव्या। नाकृष्टुं दद्यादित्यर्थः। सक्थ्नोर्व्यत्यासः सक्थिनी व्यत्यासयीत। यन्त्रयोगे प्रतिषेधार्थमुरू व्यत्यसेदित्यर्थः। निद्रापरत्वं चात्मनः ख्याप्यम्। श्रान्तमुपलभ्येति। यदि कथंचिद्रन्तुं प्रवृत्तस्तत्र श्रान्तं चोदयेत्प्रवर्तयितुम्। न पुरुषायितेन साहाय्यं दद्यात्। तत्र चोदितस्याशक्तौ हासः कर्तव्यः पार्ष्ण्याभिहत्य यथायं विरक्तीभवति। शक्तावनभिनन्दनं वैराग्यख्यापनार्थम्। दिवापीति। अस्त्येव कश्चित्कामगर्दभो यः प्रतिषिद्धमपि दिवामैथुनमाचरति। उत्कण्ठां (भावं) संप्रयोगेच्छामुपलभ्य चेङ्गिताकाराभ्यां महाजनाभिगमनं रतिगृहान्निर्गत्य। तदिच्छाव्याघातार्थम्।

संकथामधिकृत्याह—

वाक्येषु च्छलग्रहणम्। अनर्मणि हासः। नर्मणि चा[२]न्यमपदिश्य हसति वदति तस्मिन्कटाक्षेण परिजनस्य प्रेक्षणं ताडनं च। आहत्य चास्य कथामन्याः कथाः। तद्व्यलीकानां व्यसनानां चापरिहार्याणामनुकीर्तनम्। मर्मणां च चेटिकयोप[३]क्षेपणम्। आगते चादर्शनम्। अयाच्ययाचनम्। [४]अन्ते स्वयं मोक्षश्चेति परिग्रहकस्येति दत्तकस्य॥

वाक्येष्विति विरूपकमुक्तमिति। अनर्मणीति। क्रीडारहितेऽपि संक-

---

१. 'दिवाप्यस्य भाव'. २. 'चार्थान्तरमपदिश्य हसेत्। वदति तस्मिन्परिजनस्य कटाक्षेक्षणम्'. ३. 'उपेक्षणम्', 'उपप्रथनम्'. ४. 'अन्ते च मोक्ष इति परिग्रहकल्पो दत्तकस्य'.

थने हासोऽकस्मात्कर्तव्यः येनायं विनैव क्रीडाक्रियया मामुपहसतीति मन्यते। क्रीडायां प्रस्तुतायां वदति तस्मिन्नायके हसति। तेनाभिधीयमानादन्यमन्यमर्थमपदिश्य परिजनस्य कटाक्षेण प्रेक्षणं कर्तव्यम्। ताडनं च सहासं हस्तेन। येनान्यायां जानाति नाकस्मात्कथायां रमत इति। आहत्य चेति। तेन क्रियमाणां कथामपास्यान्याः कथाः कर्तव्याः। तद्व्यलीकानां नायकापराधानाम्। व्यसनानां द्यूतादीनाम्। अपरिहार्याणामिति। यान्युभयान्यपि परिहर्तुमशक्यानि तेषामनुकीर्तनं वैराग्यजननार्थम्। मर्मणां चानुकीर्तनं येषूक्तेषु दुःखमास्ते। चेटिकोपक्षेपणं चेटिकामुपक्षिप्य सर्वमभिधापयेत्। एभिरुपायैर्निष्क्रमणयोग्यतामापादितस्योपायद्वयं यतः पुनर्नागच्छतीति। यदाह—आगते चादर्शनमिति। यावद्यावदागच्छति तावत्तावदात्मानं न दर्शयेत्। पश्यति चेदयाच्ययाचनम्। यन्न याचितुमर्हति तद्याचेत। अन्ते चावसाने मोक्षः स्वयमेव परित्यागः कर्तव्यः। तस्योपायैः प्रायेण निवारितत्वात्। परिग्रहकस्येति। वेश्याया गम्यस्य यः परिग्रहस्तस्य विधिरेतावानेव दत्तकप्रोक्तो न मयाभिहितः। तेन हि गणिकानां नियोगात्संक्षेपेणाभिधातुमीप्सितत्वात्।

यत्तु तत्सेवकभूतं विशीर्णप्रतिसंधानादिकमपि बाभ्रव्योक्तं तदहं वक्ष्यामीति मन्यते। यदि परिग्रहः कर्तव्योऽनेनाधिकरणेन कथ्यते।

कथं वैशिकमित्युच्यत इत्याह—

[1]भवतश्चात्र [2]श्लोकौ—

परीक्ष्य गम्यैः संयोगः संयुक्तस्यानुरञ्जनम्।
रक्तादर्थस्य चादानमन्ते मोक्षश्च वैशिकम्॥
एवमेतेन कल्पेन स्थिता वेश्या परिग्रहे।
नातिसंधीयते गम्यैः करोत्यर्थांश्च पुष्कलान्॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणेऽर्थागमोपाया विरक्तलिङ्गानि विरक्तप्रतिपत्तिर्निष्कासनक्रमास्तृतीयोऽध्यायः।

---

१. 'आभिः'. २. 'श्लोकावत्रभवतः'.

परीक्ष्येति सहायगम्यागम्यगमनकारणचिन्तां कृत्वेत्यर्थः । गम्यैः संयोगो गम्योपावर्तनेन । संयुक्तस्यानुरञ्जनं कान्तानुवृत्तैः । रक्तादर्थस्य चादानं तदुपायैः । अतो मोक्षः स निष्कासनक्रमैः । एतत्सर्वं वेश्योचितं न कुलयोषिदुचितम् । तच्च वैशिकमिति संज्ञितम् । यदाह कात्यायनः— 'वेशं वेश्याजनोचितमिति सप्रयोजनमस्येति वैशिकम्' । तस्य वेशस्य प्रयोजनमाह—एवमिति । कल्पेनेति वैशिकाख्येन । नातिसंधीयते नातिबाध्यते(वञ्च्यते) । करोति पुष्कलानिति करोत्यनेकानित्यर्थः । इति निष्कासनक्रमाः पञ्चपञ्चाशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणेऽर्थागमोपाया विरक्तलिङ्गानि विरक्तप्रतिपत्तिर्निष्कासनक्रमास्तृतीयोऽध्यायः ।

---

शास्त्रकार एव प्रकरणसंबन्धमाह—

वर्तमानं निष्पीडितार्थमुत्सृजन्ती[1] पूर्वसंसृष्टेन सह संदध्यात् ॥

वर्तमानमिति तस्यां यो वर्तते तमलक्तकवन्निष्पीडितार्थमुत्सृजन्ती यदा त्यक्तुकामा तदा संदध्यात् । एवं सति 'अपवाहयेदन्यमवष्टभ्य' इत्यनुक्तं (इत्युक्तं) भवति । विशीर्णेनेति पूर्वसंसृष्टेन निष्कासितेन । संधिक्षणा इति (?) विशीर्णप्रतिसंधानमुच्यते ।

विशीर्णस्यालक्तकवदुत्सृष्टस्य किं संधानेनेति चेदाह—

स चेदवसितार्थो वित्तवान्सानुरागश्च ततः संधेयः ॥

वित्तवानपि यदावसितार्थोऽवश्यं दास्यतीति । सानुरागश्च । अन्यथा विश्वसनार्थं यत्किंचिद्दत्त्वापि निष्कासितोऽहमनयेति विरक्तोऽपकुर्यात् । तत इति तस्मात्कारणात्संधेयः ।

सोऽप्यनया यदि न संसृष्टस्तत्र विधानान्तरमाह—

अन्यत्र गतस्तर्कयितव्यः । स कार्ययुक्त्या[2] षड्विधः ॥

अन्यत्र गत इत्यनेन षड्विधो विशीर्ण इति । तर्कयितव्य इति निरूप्यः

---

१. 'उत्सृजति'. २. 'कार्यवशात्प्रविष्टः'.

वक्ष्यमाणेन न्यायेन । सहसा न संधेयः । स इति योऽन्यत्रगतः । कार्ययुक्त्येति षड्विधः संसृष्टस्त्वेकविधः ।

कार्ययुक्तिमाह—

इतः स्वयम[1]पसृतस्ततोऽपि स्वयमेवापसृतः । इतस्ततश्च निष्कासितापसृतः । इतः स्वयम[2]पसृतस्ततो निष्कासितापसृतः । इतः स्वय[3]मपसृतस्तत्र स्थितः । इतो निष्कासितापसृतस्ततः स्वयमपसृतः । इतो निष्कासितापसृतस्तत्र स्थितः ॥

इत इति । स्वदोषत एवास्य (?) यदस्या नायिकातः स्वयमेवापसृत्यान्यत्र गतस्तत्रापि स्वदोषोपकृतोऽपि (?) स्वयमेवापसृत इत्येकः । इतस्ततश्चेति । अत्राश्रययोर्दोषो नाश्रितस्य दोषः । यस्मादितो निष्कासितोऽपसृत इत्याश्रयस्य दोषः । [4]ततो यत्र गतस्ततोऽपि निष्कासित एवापसृत इति द्वितीयः । इतः स्वयमपसृत इत्याश्रितस्य दोषः ततोऽपि निष्कासितोऽपसृत इत्याश्रयस्य चेति तृतीयः । इतः स्वयमपसृत इत्याश्रितस्य दोषः तत्र स्थित इति नोभयोरिति चतुर्थः । इतो निष्कासितापसृत इत्याश्रयस्य दोषः । ततः स्वयमपसृत इत्याश्रितस्येति पञ्चमः । इतो निष्कासितः समुपसृत्य (निष्कासितापसृतः) इत्याश्रयदोषः तत्र स्थित इति नोभयोरपीति षष्ठः ।

एषु संधेयासंधेयतया तर्कमाह—

इतस्ततश्च [5]स्वयमेवापसृत्योपजपति चेदुभयोर्[6]गुणानपेक्षी [7]चलबुद्धिरसंधेयः ॥

उपजपति चेदिति । यदि संधातुं पीठमर्दादि मुखेनोपजपति भवती- (भेदयती)त्यर्थः । तत्र द्वितीयपक्षाभावात्तर्कयितव्य इति नोक्तम् । यदाह—उभयोरपीति । तस्यास्तस्याश्च ताभ्यामनिष्कासितत्वात् । सतोऽपि [7]गुणानपेक्ष्य चलबुद्धित्वात्स्वदोषमे(षेणै)वापसृतः । स [8]संहितोऽपि न स्थायी । न च तदस्यार्थेन योग इत्यसंधेयः ।

---

१. 'अपसृत्य'. २. 'अपसृत्य'. ३. 'अपसृत्य'. ४. 'तत्र'. ५. 'स्वयमपसृत्योपैति चेत्'. ६. 'च लघुबुद्धि.'. ७. 'गुणानपेक्षी'. ८. 'संनिहितोऽपि'.

**इतस्ततश्च निष्कासितापसृतः स्थिरबुद्धिः। स चेदन्यतो बहु- लभमानया निष्कासितः स्यात्ससारोऽपि तया रोपितो मर्षामर्षाद्बहु दास्यतीति संधेयः॥**

इतस्ततश्च निष्कासित उपजपति चेदिति वर्तमाने। स्थिरबुद्धिः स्वयमनपसृतत्वात्। अत्र पक्षद्वयमप्यस्ति। स चेदिति। अत्र तर्कयितव्य इति नोक्तम्। चेच्छब्देनैव यद्यर्थेन तदर्थस्योक्तत्वात्। अन्यत इति। अन्यस्माद्गम्याद्बहुलभमानयापि निष्कासितः। ससारोऽपि सद्रव्योऽपि। तश्च तया रोषितो जनितरोषोऽमर्षाद्बहु दास्यतीति ज्ञात्वा तदानीमेव संधेयः। नैवमेषितत्वात् (?) नास्यामनुशयं बध्नाति।

**निःसारतया कदर्यतया वा त्यक्तो न श्रेयान्॥**

निःसारतया निर्द्रव्यतया संसारे च (ससारश्च) कदर्यतया अवदान्यतया त्यक्तो निष्कासितोऽपि न श्रेयान्। संधातुमिहापि तुल्यत्वात्।

**इतः स्वयमपसृतस्ततो निष्कासितापसृतो यद्यतिरिक्तमादौ च दद्यात्ततः प्रतिग्राह्यः॥**

इतः स्वयमपसृतस्ततो निष्कासितापसृत इत्यत्राप्युपजपेदिति वर्तते। अत्रापि यदिशब्दात्तर्कयितव्य इति नोक्तम्। अतिरिक्तं पूर्वस्माद्दानात्। आदौ च यावदर्थसंप्रयोगः। कृतकृत्यश्च(स्य) हि स्वयमपसर्पणसंभवात्। प्रतिग्राह्यः संधेयः। अत्र विपर्ययेणाप्रतिग्राह्य इत्यर्थोक्तं(क्तो) द्वितीयः पक्षः।

**इतः स्वयमपसृत्य तत्र स्थित उपजपंस्तर्कयितव्यः॥**

तर्कयितव्यः किमुपकर्तुं चोपजपतीति।

अत्र संधेयपक्षमाह—

**विशेषार्थी चागतस्ततो विशेषमपश्यन्नागन्तुकामो [मयि] मां जिज्ञासितुकामः स आगत्य सानुरागत्वाद्दास्यति। तस्यां वा दोषान्दृष्ट्वा मयि भूयिष्ठान्गुणानधुना पश्यति स गुणदर्शी भूयिष्ठं दास्यति॥**

---

१. 'बहुलभ्यमानया'. २. 'समानया रोपितः', 'स रोपतः'. ३. 'अमर्षाद्दपाद्वा'. ४. 'श्रेयान्'. ५. 'असमर्पण'. ६. 'तत्र'. ७. 'तदर्थागन्तुकाम.', 'नमितुकामः'.

विशेषार्थितया यत्र गतस्तत्र विशेषं सुरतगतमपश्यन्। तस्या अविदग्धत्वात्। तत इति तस्याः सकाशात्। अस्मिन्मूलम्—आगन्तुकामो मयि दृष्टविशेषत्वात्। मां जिज्ञासितुकाम इति। तत्रस्थ एव मयि जिज्ञासां कर्तुमिच्छुः किमियं मां स्वयमपसृतु(सर्तु)मिच्छति न वेति। सानुरागत्वाद्दास्यति दृष्टविशेषत्वात्। तस्यां वा दोषान्गुणविपर्ययान्दृष्टवान्। आगन्तुकाम इति योज्यम्। सत्सु वा गुणेषु मयि भूयिष्ठान्प्रभूततमान्गुणानधुना पश्यति। तद्गुणान्स्तोकान्दृष्ट्वा स उभयस्मिन्नपि पक्षे मयि गुणदर्शी भूयिष्ठं प्रभूततमं दास्यति।

असंधेयपक्षमाह—

**बालो वा नैकत्रदृष्टिरतिसंधानप्रधानो वा हरिद्रारागो वा यत्किंचनकारी वेत्यवेत्य संदध्यान्न वा॥**

हरिद्राराग इव रागो यस्य न चिरस्थायी। मयि विरक्तो यत्र गतस्तत्रातिविरक्तः सुतरां गन्तुकामः किं दास्यति। यत्किंचनकारी वा सोऽनर्थमपि कुर्यात्। इत्येवमवेत्य ज्ञात्वा संदध्यात् प्रथमे पक्षे। न वेति। नैव संदध्यात् द्वितीयेति (इति द्वितीये)।

**इतो निष्कासितापसृतस्ततः स्वयमपसृत उपजपंस्तर्कयितव्यः। अनुरागादागन्तुकामः स बहु दास्यति। मम गुणैर्भावितो योऽन्यस्यां न रमते॥**

तर्कयितव्य इत्युपकारापकाराभ्याम्। अनुरागादागन्तुकामः। सक्तस्य निष्कासितत्वात्। मम गुणैर्भावितो रञ्जितोऽयम्। योऽन्यस्यां न रमते। येन ततोऽपि स्वयमेवापसृतः।

**पूर्वमयोगेन वा मया निष्कासितः स मां शीलयित्वा वैरं निर्यातयितुकामो धनमभियोगाद्वा मयास्यापहृतं तद्विश्वास्य प्रतीपमादातुकामो निर्वेष्टुकामो वा मां वर्तमानाद्भेदयित्वा त्यक्तुकाम इत्यकल्याणबुद्धिरसंधेयः॥**

---

१. 'यत्किंचित्कारी चेत्यवलोक्य'. २. 'दास्यतीति मद्गुणैर्भावितः सोऽन्यस्यां'. ३. 'स्वयमेवापसृतः पूर्वमुपायेन वा'. ४. 'छलयित्वा'. ५. 'तन्मा विश्वास्य प्रत्यादातुकामः'. ६. 'वर्तमाना'.

पूर्वसं(म)योगेनेत्यन्यायेन निष्कासितः । स मां शीलयित्वेत्यनुरागप्रदर्शनेन वानुप्रविश्य वैरं निर्यातयितुकामः । प्रयच्छन्नप्यहमनया हठान्निष्कासित इति । धनमभियोगाद्वेति । अस्याभियोगमेव कुर्वत्यानया धनं बह्वपहृतमाकृष्टम् । संप्रयोगश्च कादाचित्कः कृतः । तद्धनं स्नेहोपनयनेन मां विश्वास्य प्रदीपमादातुकामः । निर्वेष्टुकामो वेति । निःपूर्वो विशतिर्निर्वेशे भृतौ वर्तते । इदानीं धनसंप्रयोगे तदेव धनं निर्वेशं कर्तुकामो नान्यद्दातुकामः । मां वा वर्तमानादिति । निष्कास्येन येन सह वर्तेऽहं तस्माद्वर्तमानादागन्तुकात् गंधास्तेन (?) मां भेदयति मा भूदस्य लाभेन योग इति । स्वयं दास्यति चेदाह—त्यक्तुकाम इति । अकल्याणबुद्धिर्वैरबुद्धिर्निर्यातनाद्यभिप्रायः ।

**अन्यथाबुद्धिः कालेन लम्भयितव्यः ॥**

अन्यथाबुद्धी रागाद्दातुकामः कालेन । तदानीमेव तस्य निष्कासनेनापादितवैकृतत्वात् । लम्भयितव्य इति प्रापयितव्यो न तु प्राप्यः । स्वातन्त्र्येण लाघवात् ।

**इतो निष्कासितस्तत्र स्थित उपजपन्नेतेन व्याख्यातः ॥**

एतेनेत्यनन्तरोक्तेन विशीर्णेन व्याख्यातः । अयमपि तथैव तर्कयित्वा अकल्याणबुद्धिरसंधेयोऽन्यथाबुद्धिः कालेन लम्भयितव्य इति । इतो निष्कासितस्तत्र स्थित उपजपंश्चेत्तर्कयितव्यः ।

**तेषूपजपत्स्वन्यत्र स्थितः[1] स्वयमुपजपेत् ॥**

येऽन्यत्र गता उपगतास्तेषूपजपत्सु अनुपजपत्सु वा लाघवात् । अन्यत्र स्थित इति द्विधा वर्तमानस्त्याज्य इतरश्चेति । तत्रापि स्थितौ कारणापेक्षया स्वयमुपजपेत् ।

बहूनि कारणान्याह—

**व्यलीकार्थं[2] निष्कासितो मयासावन्यत्र गतो यत्नादानेतव्यः । इतः प्रवृत्तसंभाषो वा ततो भेदमवाप्स्यति । वर्तमानस्य चेदर्थवि-[3]**

१. 'स्थिताः'. २. 'व्यलीकार्थो च'. ३. 'वा दर्पविघात करिष्यामि'.

घातं करिष्यति । अर्थागमकालो वास्य । स्थानवृद्धिरस्य जाता । लब्धमनेनाधिकरणम् । दारैर्वियुक्तः । पारतन्त्र्याद्व्यावृत्तः । पित्रा भ्रात्रा वा विभक्तः । अनेन वा प्रतिबद्धमनेन संधिं कृत्वा नायकं धनिनमवाप्स्यामि । विमानितो वा भार्यया तमेव तस्यां विक्रमयिष्यामि । अस्य वा मित्रं मद्द्वेषिणीं सपत्नीं कामयते तदमुना भेदयिष्यामि । चलचित्ततया वा लाघवमेनमापादयिष्यामीति ॥

व्यलीकमपराधो जन(अ)न्यस्यामभिगमनं तन्निमित्तं भयान्निष्कासितो न पुनर्ददातीति यत्नादानेतव्यः ततो हि फलेन योगात् । इतः प्रवृत्तसंभाषो वेति । मामुद्दिश्य यो वृत्तसंभाष इदं दास्यामीति । तत इति यत्र गतस्तस्याः सकाशाद्धि(?)दमवाप्स्यति किमन्यस्या ददामीति तदर्थविघातं करिष्यति । येन बाह्ये तदर्थो वर्तमानो विलक्षीभूतो निष्कामति (?) । अर्थागमकालो वास्य वणिज्यया सेवया वा । स्थानवृद्धिर्वा ग्रामादेरधिकस्य लाभात् । लब्धं वा तेनाधिकरणमक्षपटलादिकम् । दारैर्वियुक्तो ममेदानीमवसरः प्राप्तः । पारतन्त्र्याद्व्यावृत्तः कर्मस्थानेषु गृहे वा स्वतन्त्रः शुभं दास्यति । पित्रार्जवेनैव विभक्तो भ्रात्रा पितरि मृते । अनेन वा प्रतिबद्धमिति तस्य मित्रत्वात् । अनेन संधिं कृत्वा संक्रमस्थानीयेन । विमानितो वेति मत्तो विशीर्णः स्वभार्यया संसृष्टः । तां चासाद्धिमर्शोदवमानितां चानाय्य तमेव संधाय तस्यां विक्रमयिष्यामि विग्रहं करि(कारयि)ष्यामि । आक्रोशस्य निर्यातनार्थम् । अस्य वा विशीर्णस्य वा मित्रं शक्तिद्रव्यसंपन्नं मद्द्वेषिणीमपहर्तुकामां मम सपत्नी(मिव) वर्तमानां भूतपूर्वां कामयते तन्मित्रमधुना विशीर्णेन भेदयिष्यामि येन सा लाभेन न योष्य(क्ष्य)ते मां चोपकरिष्यति । चलचित्ततया वेति । इतोऽन्यत्र गतस्ततोऽप्यन्यत्र गतस्तमपि चलचित्ततया लाघवमापादयिष्यामि ।

स्वयमुपजपेदित्युक्तं तस्य स्वरूपमाह—

तस्य पीठमर्दादयो मातुर्दौःशील्येन नायिकायाः सत्यप्यनुरागे

---

१. 'वियुक्तः', 'विभक्तधनः'. २. 'यया तस्यां विकारयिष्यामि'. ३. 'एवैनं'. ४. 'बाह्ये'.

**विवशायाः पूर्वं निष्कासनं वर्णयेयुः । वर्तमानेन चाकामायाः संसर्गं विद्वेषं च । तस्याश्च साभिज्ञानैः पूर्वानुरागैरेनं प्रत्यापयेयुः । अभिज्ञानं च तत्कृतोपकारसंबद्धं स्यादिति विशीर्णप्रतिसंधानम् ॥**

तस्येति विशीर्णस्य । मातुर्दौःशील्येनेति मातैवास्या दुःशीला । तया तथार्थपरतया त्वं निष्कासितः । नायिका त्वय्यनुरक्तैव । केवलं परवशा सती । वर्तमानेन गम्येन यः संसर्गः संप्रयोगो नायिकाया अनिच्छन्त्या (स) औषधपानवत् । विद्वेषः परमार्थतः यत्तस्य दर्शनपथेऽपि न तिष्ठतीति वर्णयेयुः । तस्याश्चेति नायिकायाः । साभिज्ञानैरिति सा (अ)भिज्ञानं वक्ष्यति । पूर्वानुरागैरिति पूर्वं विशीर्णा येऽनुरागा आसंस्त एनं प्रत्यापयेयुर्नायकं बोधयेयुः । येन तथैव प्रतिपद्यते । तत्कृतोपकारसंबद्धमिति नायकेन यः कृत उपकारोऽर्थेनानर्थप्रतीकारेण वा तेन युक्तं स्यात् । कृतज्ञतासूचनार्थम् ।

अपूर्वस्यासंभवे विशीर्णे नोपजपतिश्च(?) तेन संधानं युक्तमित्याह—

**अपूर्वपूर्वसंसृष्टयोः पूर्वसंसृष्टः श्रेयान् । स हि विदितशीलो दृष्टरागश्च सूपचारो भवतीत्याचार्याः । पूर्वसंसृष्टः सर्वतो निष्पीडितार्थत्वान्नात्यर्थमर्थदो दुःखं च पुनर्विश्वासयितुम् । अपूर्वस्तु सुखेनानुरज्यत इति वात्स्यायनः । तथापि पुरुषप्रकृतितो विशेषः ॥**

विदितशील इति सहवासेन ज्ञातस्वभावः । दृष्टानुरागश्च पूर्वमासक्तत्वात् । स ह्युभयधर्माध्यासितत्वात्कान्तानुवृत्त्या सुखेनोपचर्यत इति । नात्यर्थमर्थद इति । अर्थार्थं संधीयते । स चेन्न यथावत् किं तेन संहितेन । दुःखं च पुनर्विश्वासयितुम् । तस्य सत्यपि विदितशीलत्वे दृष्टानुरागत्वे च निष्कासनोत्पादितवैकृत्यात् । सुखेनानुरज्यत इति तेन तद्दोषस्यादृष्टत्वात् । तया वा अनिष्पीडितार्थत्वादत्यर्थमर्थद इत्यर्थोक्तम् । पूर्वो द्विविधः—तत्रत्य इत(इहत्य)श्च । अन्यवेश्यासंसृष्टोऽसंसृष्टश्चेति । संसृष्टोऽपि द्विविधः—निष्कासितोऽनिष्कासितश्च । तेषां संधानोपायो गम्योपावर्तने द्रष्टव्यः । पुरुषप्रकृतित इति पुरुषस्वभावात् । कःस्या(कश्चि)दपूर्वोऽपि

१. 'अवशगायाः'. २. 'उपकरण'. ३. 'दुःखश्च'. ४. 'तत्रापि'. ५. 'तस्याः'.

दुरुपचरः कदर्यश्च भवति। पूर्वसंसृष्टश्च निष्पीडितार्थोऽपि दाता। निष्कासितोऽपि सविश्वासः। इति संक्षेपेण संधानम्।

कारणं त्रिविधम्—नायकान्तरस्थं विशीर्णस्थं वर्तमानस्थं चेति। तदेव दर्शयन्नाह—

भवन्ति चात्र श्लोकाः—

अन्यां भेदयितुं गम्यादन्यतो गम्यमेव वा।
स्थितस्य चोपघातार्थं पुनः संधानमिष्यते॥
विभेत्यन्यस्य संयोगाद्व्यलीकानि च नेक्षते।
अतिसक्तः पुमान्यत्र भयाद्बहु ददाति च॥
असक्तमभिनन्देत सक्तं परिभवेत्तथा।
अन्यदूतानुपाते च यः स्यादतिविशारदः॥
तत्रोपयायिनं पूर्वं नारी कालेन योजयेत्।
भवेच्चाच्छिन्नसंधाना न च सक्तं परित्यजेत्॥ (युग्मम्)
सक्तं तु वशिनं नारी संभाष्याप्यन्यतो व्रजेत्।
ततश्चार्थमुपादाय सक्तमेवानुरञ्जयेत्॥
आयतिं प्रसमीक्ष्यादौ लाभं प्रीतिं च पुष्कलाम्।
सौहृदं प्रतिसंदध्याद्विशीर्णं स्त्री विचक्षणा॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे विशीर्णप्रतिसंधानं चतुर्थोऽध्यायः।

---

अन्यामिति। भेदयितुं विशीर्णत्वात्। 'तदानेन विमानिता भार्यया तमेव तस्यां विक्रमयिष्यामि। अस्य वा मित्रं मद्वेषिणीं कामयते तदमुना भेदयिष्यामि' इत्युक्तं वेदितव्यम्। स्थितस्योपघातार्थमित्यनेन तदर्थाभिघातं करिष्यतीति। अत उक्तम्—अन्यतो गम्यमेव वेति। अन्यस्यानायिकातो विशीर्णं भेदयितुमिति अनेनापि विशेषं विशीर्णं वेत्यनुरक्तं चा-

---

१. 'च'. २. 'संसर्गात्'. ३. 'अशक्तमभिनिन्देच्च शक्त'. ४. 'वाच्छिन्नसंधान'. ५. 'संभाव्य'. ६. 'सौहार्दं'.

पेक्ष्य तदेव संप्रयोग इति । विभेतीति । यत्र यस्मिन्संस्थाने वर्तमानोऽतिसंसक्तोऽप्यन्यस्य संयोगाद्बिभेति संयुक्तोऽयं कदाचिदपकरिष्यतीति । व्यलीकानि च नायिकाकृतानपराधान्नेक्षते अवधीरयति सत्यतिसक्तत्वादेव । भयादिति परित्यागभयाद्बहु ददाति । असक्तमिति । यो विशीर्णोऽप्यतिरक्तः अतिरक्तत्वाद्वर्तमानं तमसक्तमभिनन्देत । विज्ञा(त)भावत्वात् । यदस्यां न रक्त इति सक्तं परिभवेत् । असक्तावस्थां प्राप्स्यस्यचिरेणेति । अन्यदूतानुपाते चेति । अन्यस्य संबन्धिन्यायाते दूतेऽतिविशारदोऽत्यर्थमर्थदो मा भूदनेन संधानमिति । तत्रेति तस्मिन्संधाने । पूर्वमसंसृष्टं विशीर्णमुपयायिनम् । नारीति सामान्याभिधानेऽपि प्रकरणाद्वेश्यैव द्रष्टव्या । कालेन योजयेत् न तदैव संप्रयोजयेत् । अन्यथा तदात्व एव वर्तमानेनापि सक्तेन फलवता विश्लेषः स्यात् । विशीर्णोऽप्यतिरक्तत्वात्प्रत्याशया कालान्तरमपेक्षत एव । यदाह—'भवेच्चाच्छिन्नसंधानेति । विशीर्णेन सहेत्यर्थः । न च सक्तं परित्यजेत् । तदात्व एव तस्य सफलत्वात् । यस्तु (यत्र तु) तदात्वेऽन्यस्माल्लाभो महानेव संप्रयोगं विना तत्र किं प्रतिपत्तव्यमित्याह—सक्तं त्विति । वशिनं यथोक्तकारिणम् । अन्यत इत्यन्यमुद्दिश्य व्रजेत् । ततश्चेति । तत्र प्रव्रजिता सक्तमेवानुरञ्जयेत् । कान्तानुवृत्त्या तत्र स्थितत्वात् । नान्यं प्रति संदध्यात् । प्रोक्तानुष्ठाने निरूप्यमाह—आयतिमिति प्रभावम् लाभमायत्याम् तदात्वे प्रीतिं पुष्कलां निर्व्याजं तस्यात्मविषये । विचक्षणेति । परीक्षणे विचक्षणा कुशला । इति विशीर्णप्रतिसंधानं षट्पञ्चाशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणे विशीर्णप्रतिसंधानं चतुर्थोऽध्यायः ।

---

पञ्चमोऽध्यायः ।

त्रिविधा वेश्या—एकपरिग्रहा अनेकपरिग्रहा अपरिग्रहा चेति । तत्र

---

१. 'अपूर्वस'.

पूर्वस्या लाभ उक्तः। द्वितीयाया वक्ष्यति। तृतीयाया विनापरिग्रहमनेकस्माल्लभमानाया लाभविशेषा उच्यन्ते। तत्रापरिग्रहकारणमाह—

**गम्यबाहुल्ये बहु प्रतिदिनं च लभमाना नैकं प्रतिगृह्णीयात्॥**

यदा गम्या बहवस्तेभ्यः स्पर्धया बहु लभते। प्रतिदिनं चैकैकमभिगच्छन्ती तद्दिन एकं प्रतिगृह्णीयात्। स हि बहु प्रतिदिनं च न ददाति। तदेवमनियतो लाभः। सततश्च कश्चित्स्वल्पमपि दद्यात्। तद्ग्रहणे चान्ये तावन्मात्रकमेव दद्युरित्यूहेत्।

**देशं कालं स्थितिमात्मनो गुणान्सौभाग्यं चान्याभ्यो न्यूनातिरिक्ततां चावेक्ष्य रजन्यामर्थं स्थापयेत्॥**

देशं संपन्नमितरं वा। कालं यत्र काम उद्भूतशक्तिर्वा(?)। स्थितिं देशप्रवृत्तिं यथा अवरकार्यं सेवमानस्यैकगुणः पूर्वकायमपि द्विगुणः। आत्मनो गुणान्रूपवैदग्ध्यादीन् सतोऽसतो वा। तथा सौभाग्यम्। अन्याभ्य इति मेप्याभ्यः (?) स्थानमानाभ्यामात्मनश्च न्यूनत्वं चाधिक्यं चावेक्ष्य तदनुरूपं रजन्यामर्थं स्थापयेत्।

द्वयमेकां रात्रिंनियतासेति इति (?) तत्र यदावस्थापितार्थेन गम्य एव दूतसंप्रेषणेन भाषयति सिद्धं कार्यं नो चेदाह—

**गम्ये दूतांश्च प्रयोजयेत्। तत्प्रतिबद्धांश्च स्वयं प्रहिणुयात्॥**

तत्प्रतिबद्धान्न तु (गम्यते)। गम्यप्रतिबद्धान्प्रयोजयेदभिप्रायजिज्ञासार्थम्। विदिताभिप्रायांश्च प्रेषयेदात्मीयानित्यर्थः।

दूतसंप्रेषणाद्गम्यसंप्रयोगं रजन्युपालम्भः। तस्मान्नियम्मितादधिको योऽनुरागाल्लभ्यते स लाभातिशयः। तं चेत्तदैव लभते भद्रकमेव नो चेदत्राह—

**द्विस्त्रिश्चतुरिति लाभातिशयग्रहार्थमेकस्यापि गच्छेत्। परिग्रहं च चरेत्॥**

१. 'प्रीतिदिनं'. २ 'अर्थं'. ३. 'शतानि लाभातिशयप्रतिग्रहार्थं'. ४. 'परिग्रहकल्पं', 'परिग्रहकल्प सकलं चाचरेत्'.

इतिशब्दो विकल्पार्थः। द्वौ त्रीन् चतुरो वा एकस्यापि मूलं गच्छेत्। परिग्रहं च चरेत्परिग्रहकल्पं चेति। तावत्सु दिवसेष्वन्यनिरपेक्षानुरञ्जनेन।

गम्यतश्च विशेषमाह—

**गम्ययौगपद्ये तु लाभसाम्ये यद्द्रव्यार्थिनी स्यात्तद्दायिनि विशेषः प्रत्यक्ष इत्याचार्याः॥**

लाभसाम्य इति। यदि बहवो गम्या युगपदुपस्थिता एको हिरण्यमपरस्तुल्यमूल्यं लाभतो येन द्रव्यार्थिनी तद्दायिनि गम्ये लाभविशेषः प्रत्यक्षः। तस्यार्थिनी स्यादित्याचार्याणाम्।

**अप्रत्यादेयत्वात्सर्वकार्याणां तन्मूलत्वाद्धिरण्यद इति वात्स्यायनः॥**

हिरण्यमत्र लोकप्रतीत्या कपर्दकाः (?)। ते चेदत्र गम्येन पुनर्न प्रत्यायन्ते वस्त्रादिकं दत्त्वा किंचित्प्रत्यादत्ते। सर्वकार्याणामिति। तद्द्रव्यं मण्डनमन्यच्च कार्यं हिरण्यमूलम्। तेन लभ्यमानत्वात्। तेन तत एव विशेषः। तस्मात्तत्रैवार्थित्वं कर्तव्यम्।

द्रव्यस्वरूपमाह—

**सुवर्णरजतताम्रकांस्यलोहभाण्डोपस्करास्तरणप्रावरणवासोविशेषगन्धद्रव्यकटुकभाण्डघृततैलधान्यपशुजातीनां पूर्वपूर्वतो विशेषः। यत्तत्रसाम्याद्वा द्रव्यसाम्ये मित्रवाक्यादतिपातित्वादायतितो गम्यगुणतः प्रीतितश्च विशेषः॥**

सुवर्णरजते घटिते अघटिते वा। ताम्रकांस्यलोहैर्घटितं भाण्डोपस्करम्। आस्तरणं तूलिकादि। प्रावरणं कम्बलादि। वासोविशेषः क्षौमादिः। गन्धद्रव्यं चन्दनादि। कटुकं मरिचादि। भाण्डः पट्ट (?) घटादिः। पूर्वपूर्वत इति क्षुद्रपशुजातेर्धान्यं ततस्तैलादिरित्यादिना विशेषः। धान्यपशवो यत्र अवलब्धा (?) वेश्यानां प्रशस्यन्ते। यत्तत्रसाम्याद्वेति यद्वा एतन्न ते प्रियं ततो विशेषः। द्रव्यसाम्य इति। यच्चादावपि रूपतः प्रमाणतुल्यं प्रयच्छतस्तत्र मित्रवचनमनुष्ठेयम्। यत्र वा तदानीमदीयमानमतिपतति

---

१. 'हिरण्यतः'. २. 'अन्यत्र'. ३. 'धान्यगुडपशु'. ४. 'पत्तन'. ५. 'साम्येऽपि'.

यत्र चायतिः प्रभावः पुरु(ष)गुणो वा यत्र गम्ये सति प्रीतिर्वा नायिकाया नायकस्य नायिकायामिति ।

गम्यतो विशेषमाह—

**रागित्यागिनोस्त्यागिनि विशेषः प्रत्यक्ष इत्याचार्याः ॥**

रक्तात्त्यागिनो विशेषः प्रत्यक्षः । तदात्व एव द्रव्यप्राप्तेः ।

**शक्यो हि रागिणि त्याग आधातुम् ॥**

रागिणि अत्यागिणि रक्ते शक्यस्त्याग आधातुमुपायेन ।

कुत इत्याह—

**लुब्धोऽपि हि रक्तस्त्यजति न तु त्यागी निर्वन्धाद्रज्यत इति वात्स्यायनः ॥**

त्यजति द्रव्यं ददाति । निर्वन्धादिति प्रयासेनापि न रज्यते तस्य तेजस्वित्वात् । अनुरक्तस्तु त्यजति ।

**तत्रापि धनवदधनवतोर्धनवति विशेषः । त्यागिप्रयोजनकर्त्रोः प्रयोजनकर्तरि विशेषः प्रत्यक्ष इत्याचार्याः ॥**

धनवदधनवतोरिति रागित्यागिनोर्यो धनवान्स विशिष्यते नेतरो निर्धनः। प्रयोजनकर्तरीति नायिकायाः कार्यस्य यः कर्ता तस्मिन्नत्यागिनि विशेषः प्रत्यक्षः । तदात्व[2] एव कार्यकरणात् । त्यागी तु दास्यतीति न प्रत्यक्षः ।

**प्रयोजनकर्ता सकृत्कृत्वा[3] कृतिनमात्मानं मन्यते त्यागी पुनरतीतं नापेक्षत इति वात्स्यायनः ॥**

सकृत्कृत्वेति एकवारं कृतमस्याः[4] कार्यं किमपरं करिष्यामीति । अतीतमिति दत्तमेवास्यै न पुनर्ददामीति नापेक्षते । त्यागशीलत्वात् ।

**तत्राप्यात्ययिकतो[5] विशेषः । कृतज्ञत्यागिनोस्त्यागिनि विशेषः प्रत्यक्ष[6] इत्याचार्याः ॥**

आत्ययिकत इति यदा तत्प्रयोजनमवधारितमतिपतति तदा तत एव

१. 'कर्तुः'. २. 'तदायत्व', 'तदायत'. ३. 'सकृत्प्रयोजनं कृत्वा.' ४. 'कृतमिति कृतं'. ५. 'आत्ययिक'. ६. 'प्रत्यक्षतः'.

विशेषः। कृतज्ञत्यागिनोस्त्यागिनि विशेषः प्रत्यक्षो द्रव्यदर्शनात्। न तु कृतज्ञे। तस्यात्यागित्वात्।

**चिरमाराधितोऽपि त्यागी व्यलीकमेकं[१]मुपलभ्य प्रतिगणिकया वा[२] मिथ्यादूषितः श्रममतीतं नापेक्षते। प्रायेण हि तेजस्विन ऋजवोऽनादृताश्च[३] त्यागिनो भवन्ति। कृतज्ञस्तु पूर्वश्रमापेक्षी न सहसा विरज्यते। परीक्षितशीलत्वाच्च न मिथ्या दूष्यत[४] इति वात्स्यायनः॥**

चिरमिति दीर्घकालम्। आराधितोऽपि कान्तानुवृत्त्या। व्यलीकं नायिकापराधमुपलभ्य। मिथ्यादूषित इति मिथ्यैव दोषं ग्राहितः सदैवेयं व्यलीकं कुरुत इति। श्रममतीतमाराधनक्लेशं नापेक्षते। कुत इत्याह—प्रायेण हीति बाहुल्येन त्यागिनां तेजस्वितादयस्त्रयो धर्माः संभवन्ति। तत्र तेजस्वितया व्यलीकं नोपेक्षन्ते। ऋजुतया मिथ्यादोषं ग्राह्यन्ते। अनादृतत्वात् श्रमं नापेक्षन्ते। ततः कथमादरः। पूर्वश्रमापेक्षीति। कृतज्ञ इति कृतज्ञत्वादेव सहसा न विरज्यते व्यलीकमुपलभ्यापि। परीक्षितशीलत्वाच्चेति कृतज्ञतयैव परीक्षणस्वभावत्वान्न मिथ्यैव दोषं ग्राह्यते।

**तत्राप्यायतितो विशेषः॥**

यत्र प्रभावोऽस्ति यत्रार्थोपगमनहेतुस्तथा मित्रवचनमनर्थप्रतीघातोऽर्थसंशयश्च।

तेषां विशेषमाह—

**मित्रवचनार्थागमयोरर्थागमे विशेषः प्रत्यक्ष[५] इत्याचार्याः॥**

मित्र[६]वचनादर्थः प्रत्यक्षः। तस्य दृश्यमानत्वात्। अन्यत्र वचनमेव केवलम्।

**सोऽपि ह्यर्थागमो भविता। मित्रं तु सकृद्वाक्ये प्रतिहते कलुषितं स्यादिति वात्स्यायनः॥**

सोऽप्यर्थागमो भविता भविष्यति। प्रतिहत इत्यननुष्ठिते। कलुषितं रोषितं स्यात्। ततश्च तत्प्रतिबद्धकार्यहानिरेव स्यात्।

---

१. 'एकं' पुस्तकान्तरे नास्ति. २. 'च'. ३. 'अत्यादृताश्च'. ४. 'दूषितः स्यात्'. ५. 'प्रत्यक्षतः'. ६. 'वचनार्थः प्रत्यक्षः'.

**तत्राप्यतिपाततो विशेषः ॥**

अतिपातत इति यदा तदानीमुपेक्षितोऽर्थो(ऽति)पतति च दोस्यत्येवेति विशेषः ।

मित्रं कलुषितं स्यादिति चेदाह—

**तत्र कार्यसंदर्शनेन मित्रमनुनीय श्वोभूते वचनमस्त्विति ततोऽतिपातिनमर्थं प्रतिगृह्णीयात् ॥**

कार्यसंदर्शनेनेति जनानां कार्यं तत्त्वापि कार्यं न चेदं महदुपस्थितमपि(ति)पतति । त्वद्वचनं च श्वः कर्तास्मीत्यनुनयपूर्वमुक्त्वा ।

**अर्थागमानर्थप्रतीघातयोरर्थागमे विशेषः प्रत्यक्ष इत्याचार्याः ॥**

अर्थागमे विशेषः प्रत्यक्ष इति दृश्यमानत्वात् ।

**अर्थः परिमितावच्छेदः, अनर्थः पुनः सकृत्प्रसृतो न ज्ञायते क्वावतिष्ठत इति वात्स्यायनः ॥**

अर्थ इति । अस्यावच्छेद इयत्ता । सा परिमिता यस्येत्यर्थस्यानतिशयत्वात् । सकृत्प्रसृत इति । अखण्डितप्रसरत्वादेकवारप्रसृतो न ज्ञायते क्वावतिष्ठते किं मूलघाते सर्वघाते वेति । अत्र मधुबिन्दूपाख्यानमुदाहरणम् ।

**तत्रापि गुरुलाघवकृतो विशेषः ॥**

गुरुलाघवकृत इति लघोरनर्थात्पूर्वाद्गुरुर(न)र्थो विशेष्यते लघुश्चेद्गुरुरनर्थ इति ।

**एतेनार्थसंशयादनर्थप्रतीकारे विशेषो व्याख्यातः ॥**

अर्थसंशयादर्थः स्यान्न वेति संशयः अन्यस्मादनर्थप्रतीकारः तदार्थसंशये विशेषः प्रत्यक्षः । तत्र संशयितेऽपि लोकस्य प्रवर्तनात् । परिमितावच्छेदोऽर्थोऽनर्थः पुनः सकृत्प्रसृतो न ज्ञायते क्वावतिष्ठत इति । अत्रैव विशेषः । न लघोरनर्थात्प्रतिकर्तव्याद्गुरोर(राव)र्थे संशयिते विशेष इति व्याख्यातः ।

---

१. 'पातितः'. २. 'दावस्य एव विशेषः'. ३. 'कृतं न वचन ततः'.

एवं द्विविधं रदन्यर्थेन (?) विशेषितेन यदुपचितं धनं स प्रकृष्टो नाम लाभातिशयः। प्रधानार्थस्य साधनात्। अतस्तद्धारणतया यत्नं दर्शयन्नाह—

**देवकुलतडागारामाणां[1] करणम्, स्थलीनामग्निचैत्यानां[2] निबन्धनम्, गोसहस्राणां पात्रान्तरितं ब्राह्मणेभ्यो दानम्, देवतानां पूजोपहारप्रवर्तनम्[3], तद्व्ययसहिष्णोर्वा[4] धनस्य परिग्रहणमित्युत्तमगणिकानां लाभातिशयः[5] ॥**

त्रिविधा वेश्या—गणिका रूपाजीवा कुम्भदासी च । ताः प्रत्येकमुत्तममध्यमाधमभेदात्त्रिविधाः । तडागं पुष्करिणी । स्थलीनामिति । निम्नेषु प्रदेशेषु लोकागमनार्थं सेतूनां निबन्धनम् । अग्निचैत्यानामिति । स्थानाद्बहिर्मृद्भिर्गेहानि कृत्वा सर्वे रसगन्धव्रीहिरत्नेषु प्रदेषुरापूर्यया (?) अग्नये संसृज्यन्ते । पात्रान्तरितमिति । वेश्याद्रव्यस्याप्रतिग्राह्यत्वादन्यहस्तेन दानम् । देवतापूजनानां प्रवर्तनं घटानिबन्धने । उपहाराणां भक्ष्यादीनाम् । तस्येयत्तां दर्शयन्नाह—(देवकुलतडागारामाणां करणं स्थली.देवतां समुद्दिश्य सर्वमेतत्प्रधानोऽर्थः ।) तद्व्ययसहिष्णोरिति[6] । तस्मिन्प्रधानार्थसाध्ये यद्व्ययं सहते । धनस्य परिग्रहणभयं (?) अयं प्रकृष्टो रागाति(लाभाति)शयः । उत्तमगणिकानामिति । रूपादिभिर्नायिकागुणकलादिभिरन्विता उत्तमगणिकाः । गुणानां च पादार्धाभ्यां मध्यमाधमाः ।

**सार्वाङ्गिकोऽलंकारयोगो गृहस्योदारस्य करणम् । महार्हैर्भाण्डैः परिचारकैश्च गृहपरिच्छदस्योज्ज्वलतेति रूपाजीवानां लाभातिशयः॥**

सार्वाङ्गिक इति सर्वेष्वङ्गेषु यो भवति । उदारस्येति संस्थानतः संकेततश्चेति । महार्हैरिति लोहताम्रराजतैः । परिचारकैरिति यथास्वं कर्मणा परिचरन्ति ये । गृहपरिच्छदस्येति गृहसंविधानकस्योज्ज्वलतेत्ययं प्रधानार्थः । तद्व्ययसहिष्णोर्धनस्य परिग्रहणमिति वर्तते । अयं प्रकृष्टो लाभातिशयः । रूपाजीवानामित्युत्तमानाम् । सत्स्वपि गुणेषु रूपाजीवायां रूपस्य

---

१. 'तडागानामारामाणां'. २. 'चैत्यकाना च बन्धनम्'. ३. 'पूजाभ्युदय', 'पूजोपहाराभ्युदय'. ४. 'तद्वै सहिष्णोः'. ५. 'प्रतिग्रहणम् ६. 'तद्वै सहिष्णो.'.

प्रधानत्वात् कलासु न सन्ति । तत्र रूपस्य गुणानां पदार्थानां च मध्यमाधमाः । अत्र यः प्रधानार्थः स गणिकानामस्त्येव ।

**नित्यं शुक्लमाच्छादनमपक्षुधमन्नपानं नित्यं सौगन्धिकेन ताम्बूलेन च योगः सहिरण्यभागमलंकरणमिति कुम्भदासीनां लाभातिशयः ॥**

आच्छादनमिति परिधानीयं प्रावरणीयं च सदैव शुक्लम् । अपक्षुधमिति अकदर्थितत्वात्क्षुधमेपनयति । सौगन्धिकेन सुगन्धिसमूहेन चतुःसमकादिना ताम्बूलेन च नित्यं योगः । एतत्सर्वं गणिकानां रूपाजीवानां चास्त्येव । विशेषमाह—सहिरण्यभागमिति । सुवर्णलेशेन युक्तमित्यर्थः । अयं प्रधानार्थः । तद्व्ययसहिष्णोर्धनस्य परिग्रहणमिति वर्तते । अयं च प्रकृष्टो लाभातिशयः । कुम्भदासीनामित्युत्तमानाम् । कुम्भग्रहणं च कर्मोपलक्षणार्थम् । कर्मकरीणामित्यर्थः । आसां चोत्तममध्यमाधमकर्मापेक्षयैव तथाविधत्वं द्रष्टव्यम् ।

**एतेन प्रदेशेन मध्यमाधमानामपि लाभातिशयान्सर्वासामेव योजयेदित्याचार्याः ॥**

प्रदेशेनेति । प्रदेशेनेत्युत्तमानां लाभातिशयमार्गेण । मध्यमाधमानामपीति गणिकारूपाजीवाकुम्भदासीनाम् । लाभातिशयानिति प्रकृष्टापेक्षं मध्यमाधमान्योजयेत् । तथा चोक्तम्—'यद्वेश्यार्जितं द्रव्यं प्रधानार्थस्य साधकम् । अवस्थानं हि वेश्यानां स लाभ उत्तमो मतः ॥' इति ।

**देशकालविभवसामर्थ्यानुरागलोकप्रवृत्तिवशादनियतलाभादियमप्रवृत्तिरिति वात्स्यायनः ॥**

इयमवृत्तीति । देशस्य सुसंपन्नस्य । (कालस्य) सुभिक्षस्य दुर्भिक्षस्य वा । विभवस्यात्मीयस्य महतोऽल्पस्य वा । सामर्थ्यस्य विभवधनशक्तेर्महत्या-

१. 'लेश'. २. 'उपनयति'. ३. 'ताम्बूलादिना च'. ४. 'लाभान्योजयेत्'. ५. 'स्वार्जितं'. ६. 'अवस्था नहि'. ७. 'कालविभागसामर्थ्यात्तु रूपरागलोक'. ८. 'अनियतालाभाना नियता प्रवृत्तिरिति'. ९. 'देशस्य सप्रसन्नस्य'.

(त) इतरस्य वा । ततश्च नेय वृत्तिरियंत्ताप्रधानार्थद्वारेण या निर्दिष्टा कदाचित्तन्न्यूनाधिका वा संभवति ।

एवं च कार्यनिरपेक्षया कश्चित्स्वल्पोऽपि लाभो गृह्यते कश्चिन्नैव कश्चित्तदात्वे गृह्यते कश्चिदायत्यां यदाह—

**गम्यमन्यतो निवारयितुकामा सक्तमन्यस्यामपहर्तुकामा वा अन्यां वा लाभतो वियुयुक्षमाणागम्यसंसर्गादात्मनः स्थानं वृद्धिमायतिमभिगम्यतां च मन्यमाना अनर्थप्रतीकारे वा साहाय्यमेनं कारयितुकामा सक्तस्य वान्यस्य व्यलीकार्थिनी पूर्वोपकारमकृतमिव पश्यन्ती केवलप्रीत्यर्थिनी वा कल्याणबुद्धेरल्पमपि लाभं प्रतिगृह्णीयात् ॥**

अन्यत इति अन्यस्या नायिकातो निवारयितुकामा मान्यत्र यासीदिति। अपहर्तुकामा मद्वेषिण्यां सक्तं त्यक्ष्यामीति । लाभत इति अन्यस्या नायिकातो गम्यसंबन्धिनो लाभात् । वियुयुक्षमाणा वियोक्तुमिच्छन्ती । अगंम्यसंसर्गादिति येन गम्येन सह (न) संसर्गस्तस्मात् । स्थानं जनसंसदि विशिष्टदेशावस्थानं मन्यमाना । वृद्धिं प्रकृष्टा(कर्षा)ख्यां लाभातिशयं आयतिं प्रभावं अभिगम्यतामन्येषां नायकानामभिगमनीयत्वं अनर्थप्रतीकारं वेति अनर्थं प्रतिकर्तुं सहायमेनं कर्तुकामा । सक्तस्य वेति यस्तस्यां सक्तः । अन्यो वर्तमानः । तेन यः पूर्वमुपकारः कृतस्तं स्वल्पत्वादकृतमिव पश्यन्ति । तस्यातीतस्य व्यलीकार्थिनी अपराधं कर्तुकामा अल्पमपि गृह्णीयात् येनायमपराधं मन्ये(घमध्ये ?)ऽतिसक्तस्त्यजति । केवलप्रीत्यर्थिनी वेति प्रीत्यैव केवलयार्थिनी नार्थैः । कल्याणबुद्धेरित्यविसंवादकात् ।

अय(इय)मनर्थप्रतीकारिकेत्युक्तम् । अत्र विशेषमाह—

**आयत्यर्थिनी तु तमाश्रित्य चानर्थं प्रतिचिकीर्षन्ती नैव प्रतिगृह्णीयात् ॥**

---

१. 'इयता'. २. 'कृत्वा कार्यनिरापेक्षया'. ३. 'गृहागते'. ४. 'दातृत्वे'. ५. 'विमोक्ष्यमाणा'. ६. 'आयं'. ७. 'प्रत्यर्थिनी'. ८. 'बुद्धिः'. ९. 'अर्थं गृह्णीयात्'. १०. 'अन्यससर्गादिति'. ११. 'स'. १२. 'तमाश्रितानर्थं'.

यदा आयतिर्महती स्यादनर्थश्च न महान्प्रतिकर्तव्यस्तदा नैव प्रतिगृह्णीयात् ।

**त्यक्ष्याम्येनमन्यतः प्रतिसंधास्यामि, गमिष्यति दारैर्योक्ष्यते नाशयिष्यत्यनर्थान्, अङ्कुशभूत उत्तराध्यक्षोऽस्यागमिष्यति स्वामी पिता वा, स्थानभ्रंशो वास्य भविष्यति चलचित्तश्चेति मन्यमाना तदात्वे तस्माल्लाभमिच्छेत् ॥**

त्यक्ष्याम्येनं त्यक्षा(क्त्वा) त्वेतत्तो लाभं गृहीत्वान्यतः प्रतिसंधास्यामि । तस्याधिकत्वात् । गमिष्यति दारैर्योक्ष्यते गतः कृतदारपरिग्रहो वा कथं दास्यति । नाशयिष्यत्यनर्थान्स्वकीयान् । तस्य परवशप्रायत्वात् । अङ्कुशभूत इति दमयिता । उत्तराध्यक्ष उपरिकः । अस्येति गम्यस्येति कर्मणि आगमिष्यति तदायमस्वतन्त्रः कथं दास्यतीति । स्वामी पिता वाङ्कुशभूतः । स्थानभ्रंशो वेति यस्मिन्स्थानेऽस्याधिपत्यं तस्माद्विच्युतिः । चलचित्तो वा प्रतिज्ञायापि न दास्यति । तदात्व इति तदानीम् ।

**प्रतिज्ञातमीश्वरेण प्रतिग्रहं लप्स्यते अधिकरणं स्थानं वा प्राप्स्यति वृत्तिकालोऽस्य वा आसन्नः वाहनमस्यागमिष्यति स्थलपत्रं वा सस्यमस्य पक्ष्यते कृतमस्मिन्न नश्यति नित्यमविसंवादको वेत्यायत्यामिच्छेत् । परिग्रहकल्पं वाचरेत् ॥**

प्रतिग्रहं लप्स्यत इति स अक्लेशेनोपलब्धार्थो दास्यति । अधिकरणमक्षपटलादिकं स्थानं यत्राधिपत्यं करिष्यति। वृत्तिकालो वेति सेवकत्वाज्जीवनकालोऽस्यासन्नः । राजकुले विलम्बस्य वर्तमानत्वात् । वाहनं यानपात्रमागमिष्यति । वाणिज्यधर्मस्थितत्वात् । स्थलपत्रमित्थंभूतम्(?) । स्वराष्ट्रादिसस्यमस्य पक्ष्यत इति । कृषिवृत्तित्वात् । ततश्च पक्वं सस्यं दास्यति । कृतमस्मिन्न नश्यति अभिगम्यत्वं न निष्फलम् । कृतज्ञत्वात् । नित्यमविसंवादको वा प्रतिज्ञायावश्यं दास्यति । आयत्यामित्यागमनकाले । परिग्रहकल्पं वा चरेत् तत्रार्थस्य लप्स्यमानत्वात् ।

---

१. 'अन्येन'. २. 'गमिष्यत्ययं स्वदारैः'. ३. 'तदात्वेन'. ४. 'लप्स्यति'. ५. 'स्थालपत्रं'. ६. 'आयतिमिच्छेत्', 'अभिगच्छेत्'. ७. 'परिग्रहत्वं वास्याचरेत्'.

भवन्ति चात्र श्लोकाः[1]—

कृच्छ्राधिगतवित्तांश्च राजवल्लभनिष्ठुरान्[2] ।
आयत्यां[3] च तदात्वे च दूरादेव विवर्जयेत्[4] ॥
अनर्थो वर्जने येषां गमनेऽभ्युदयस्तथा ।
प्रयत्नेनापि[5] तान्गृह्य सापदेशमुपक्रमेत्[6] ॥

कृच्छ्राधिगतवित्तांश्चेति क्लेशेनार्जितवित्तान् । राजवल्लभनिष्ठुरानिति ये राज्ञा निष्ठुराः क्रूरा येषां नाकरणीयमपि कुर्यादित्यर्थः(?) । प्रायशस्तेभ्योऽनर्थसंभवात् । तेषां तर्हि उपादानमित्यर्थः । अनर्थ इति यांस्त्यक्त्वान्यस्मादनर्थोऽभिगमने चाभ्युदयस्तानुभयप्रयोजनत्वात् प्रयत्नेनापि तान्गृह्येत्यभिगम्य । सापदेशमुपक्रमेदिति यत्किंचिन्मिश्रीकृत्या(?)मभिगच्छन्तमभिगच्छेदित्यर्थः । वृत्ताद्यभावादात्मनेपदं न भवति ।

येष्वर्थ एव प्रयोजनं तानाह—

प्रसन्ना ये प्रयच्छन्ति स्वल्पेऽप्यगणितं वसु ।
स्थूललक्षान्महोत्साहांस्तान्गच्छेत्स्वैरपि व्ययैः ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे
लाभविशेषाः पञ्चमोऽध्यायः ।

महोत्साहानिति महानुत्साहो येषाम् । महत्त्वं चोत्साहस्य शौर्यादिभिः । ते तुष्टाः स्वल्पेऽपि वेश्याविषये प्रभूतं द्रव्यं प्रयच्छन्ति तस्मात्तान्गच्छेत् । स्वैरपि व्ययैरुपचारलक्षणैः । इति लाभविशेषाः सप्तपञ्चाशं प्रकरणम् ॥

इति श्रीवात्स्यायनीयकामसूत्रटीकायां जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण
गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणे
लाभविशेषाः पञ्चमोऽध्यायः ।

---

१. 'भवन्ति चात्र श्लोकाः' इति पुस्तकान्तरे नास्ति. २. 'वाल्लभ्यवित्तवान्'. ३. 'प्रयत्नेनापि तान्गत्वा सापदेशमुपक्रमेत्' इति पुस्तकान्तरे उत्तरार्धम्. ४. 'विसर्जयेत्'. ५. 'प्रयत्नेनैव तान्सर्वान्सापदेशमनुक्रमेत्'. ६. 'उपक्रम.'.

षष्ठोऽध्यायः।

शास्त्रकार एव प्रकरणसंबन्धमाह—

अर्थानाचर्यमाणाननर्था अप्यनूद्भवन्त्यनुबन्धाः संशयाश्च ॥

अर्थानिति लाभविशेषाननन्तरोक्तान् आचर्यमाणान्साध्यमानान्। अपरिग्रहाया वेश्याया इत्यर्थः। अनर्था विरुद्धाः। अनूद्भवन्त्वि(न्ती)ति। 'अनुर्लक्षणे' इत्यनोः कर्मप्रवचनीयत्वे अर्थानिति द्वितीया। अर्थान्साध्यमानांल्लक्ष्यीकृत्यानर्था अपि स्वहेतुभ्य उत्पद्यन्ते। तत्र यदा अर्था एवोत्पद्यन्ते तदा निरनुबन्धार्थः पक्षः। यदार्थं बाधित्वानर्थास्तदा निरनुबन्धानर्थः पक्षः। अनुबन्धा इत्यर्थाद्याः। (अ)संशयाश्च एतयोरेवोत्पद्यन्ते। तस्माच्चेनोपादानार्थं विवादो युक्तः। इत्यर्थादनर्थानुबन्धसंशयविचारा उत्पद्यन्ते। तत्रार्थास्तदनुबन्धाश्चोपादेया एव। तत्संशयाश्च। केषांचित्प्रवृत्तेः। येऽनर्थास्तदनुबन्धास्तत्संशयाश्च तेषामनुपादेयत्वात्।

उत्पत्तिकारणान्याह—

ते बुद्धिदौर्बल्यादतिरागादत्यभिमानादतिदम्भादत्यार्जवादतिविश्वासादतिक्रोधात्प्रमादात्साहसाद्दैवयोगाच्च स्युः ॥

त इत्यनर्थादयः। बुद्धिदौर्बल्यादित्यूहानूहतत्त्वाभिनिवेशाविवेकाभ्यां बुद्धिदौर्बल्यम्। रागः सक्तिः। अभिमानोऽहंकारः। दम्भश्छद्म। आर्जवमृजुता। विश्वासो विस्रम्भः। क्रोधः कोपः। एते कार्यवशाद्युक्तितः प्रयुज्यमाना नैव दोषाय आधिक्येन तु दोषायैवेत्यतिशब्देनाह। प्रमादो योऽन्यत्र व्यासङ्गः। साहसमविमृष्यकारित्वम्। एतन्नवधा मानुषम्। दैवयोगादिति। दैवमशुभं कर्म शुभं च। (शुभसंज्ञं च) तेन दैवयोगादित्यर्थः।

तेषां फलं कृतस्य व्ययस्य निष्फलत्वमनायतिरागमिष्यतोऽर्थस्य निवर्तनमाप्तस्य निष्क्रमणं पारुष्यस्य प्राप्तिर्गम्यता शरीरस्य प्र-

---

१. 'अर्था आचर्यमाणा अनर्थानप्यनुबध्नन्ति। तेषामनुबन्धास्तत्संशयाश्च'. २. 'दम्भादतिहर्षादतिस्तम्भादत्यार्जवादतिविश्वासादतिक्रोधादतिप्रमादादतिमदादतिसाहसाद्दैवयोगाच्च यदृच्छया स्युः'. ३. 'प्रतीघात.'.

घातः केशानां छेदनं पातनमङ्गवैकल्यापत्तिः । तस्मात्तानादित एव परिजिहीर्षेदर्थभूयिष्ठांश्चोपेक्षेत ॥

तेषां बुद्धिदौर्बल्यादीनाम्, अथवा ए(ते)षामित्यनर्थानां सानुबन्धानां तत्संशयानां च फलमिति परिणामः । अनर्थवेदनविपरिणामरूपेण संशय्यमानत्वादनर्थसंशयानामपि फलम् । व्ययस्येति गम्याभिगमनाय कृतस्य । अनायतिः प्रभावहानिः । आगमिष्यत इत्यधिकृते व्यये लप्स्यमानस्य निवर्तनमिति बोद्धव्यम् । आप्तस्येति प्राप्तस्येत्यर्थः । निष्क्रमणमन्येत गृह्यमाणत्वात् । पारुष्यस्येति द्विरुक्तस्य (?) । गम्यता परिचेयता । शरीरस्य प्रघातः प्राणवायोर्वियोगः । केशाना छेदनं लवनम् । पातनं बन्धताडनम् । अङ्गवैकल्यं कर्णनासाविच्छेदः । तान्बुद्धिदौर्बल्यादीनादित एव परिहर्तुमिच्छेत् । यावदर्थहेतूनुपायान्प्रयुङ्क्ते । अन्यथा ह्यर्थं बाधित्वानर्थोऽपि स्यात् । कारणानां संनिहितत्वात् । अर्थभूयिष्ठांश्चेति । अर्थबहुलाननर्थहेतूनुपेक्षेत । तत्र ह्यर्थहेतूनामेवोपायानां बाहुल्यात् ।

इदानीं निरनुबन्धान्विचारयितुमाह—

अर्थो धर्मः काम इत्यर्थत्रिवर्गः । अनर्थोऽधर्मो द्वेष इत्यनर्थत्रिवर्गः । तेष्वाचर्यमाणेष्वन्यस्यापि निष्पत्तिरनुबन्धः । संदिग्धायां तु फलप्राप्तौ स्याद्वा न वेति शुद्धसंशयः । इदं वा स्यादिदं वेति संकीर्णः । एकस्मिन् क्रियमाणे कार्ये कार्यद्वयस्योत्पत्तिरुभयतोयोगः । समन्तादुत्पत्तिः समन्ततोयोग इति तानुदाहरिष्यामः ॥

अनर्थ इति । अर्थत्रिवर्गो ह्यर्थ इति कृत्वा तद्विरुद्धोऽनर्थत्रिवर्गः । ततश्चार्थो(न)र्थानुबन्धसंशयविचारा इत्यस्मिन्सूत्रे धर्माधर्मयोः कामद्वेषयोरपि संग्रहः सिद्धः । अनेन निरनुबन्धपक्ष उक्तो वेदितव्यः । तेष्वित्यर्थादिषु षट्सु साध्यमानेषु अन्यस्यापातिनः केवलं साध्यमानस्य (अन्यस्यापीति) सजातीयस्य विजातीयस्य वा पञ्चानामन्यतमस्येति । (अ)संप्राप्तौ संदिग्धायां स्याद्वा न वेति यो विकल्पः स शुद्धसंशयः । द्वयोरन्यतरोत्पत्त्या विकल्पस्य

१. 'परुषस्य'. २. 'वध'. ३. 'तेषु चाचर्य'.

संकीर्यमाणत्वात् । एकस्मिन्कार्य इति । अर्थादिसाधने क्रियमाणे द्वयस्येत्यर्थादीनां षण्णामन्यतमस्य सजातीयस्य विजातीयस्य वा द्वयस्योत्पत्तिरुभयतो योग इत्युभाभ्यां संबन्धः । समन्तादिति । एकस्मिन् क्रियमाणे बहुभ्योऽर्थादीनामुत्पत्तिः समन्ततो योगः ।अस्य योगद्वयस्य निरनुबन्धपक्ष एवान्तर्भावः । ताननुबन्धादीनुदाहरणादुदाहरिष्यामः । स्पष्टोऽर्थः ।

ननु च त्रिवर्गोऽर्थोऽनर्थश्च तयोः स्वरूपतोऽपरिज्ञाने कथमुदाहरणमित्याह—

**विचारितरूपोऽर्थत्रिवर्गः । तद्विपरीत एवानर्थत्रिवर्गः ॥**

विचारितरूप इति त्रिवर्गप्रतिपत्तौ निरूपितस्वभाव इत्यर्थः । तद्विरुद्धत्वादनर्थोऽपि विचारितरूप इत्याह—तद्विपरीत इति ।

तत्रार्थानर्थयोस्त्रिवर्गयोरर्थावेत्यनधि(रर्थादीनधि)कृत्याह—

**यस्योत्तमस्योभिगमने प्रत्यक्षतोऽर्थलाभो ग्रहणीयत्वमायतिरागमः प्रार्थनीयत्वं चान्येषां स्यात्सोऽर्थोऽर्थानुबन्धः ॥**

उत्तमादिभेदात्त्रिविधो नायको व्याख्यातः । तत्र यः समस्तगुणस्तस्योत्तमगुणस्याभिगमने । प्रत्यक्षतोऽर्थलाभ इति तत एव प्रत्यक्षात्तदानीमर्थलाभः । ग्रहणीयत्वमिति लोकग्राह्यत्वमुपादेयत्वम् । आयतिः प्रभावः । आगमस्तत्कालीयानां प्रार्थनीयत्वं गम्यादीनाम् । सोऽर्थ इति योऽसौ तदात्वे लाभः । अर्थानुबन्ध इति ग्रहणीयत्वादिरर्थैरनुबन्धो यस्य । अयं सजातीयानुबन्धः ।

**लाभमात्रे कस्यचिदन्यस्य गमनं सोऽर्थो निरनुबन्धः ॥**

लाभमात्र इति तदात्वे यो लाभस्तन्मात्रमेव निमित्तम् । कस्यचिदिति लोके यो गुणैर्दोषैर्वा न विवक्षितस्तस्याभिगमनमात्रोऽर्थो निरनुबन्धः । (ग्रहणीत्वमिति) लोकग्राह्यत्वाद्यभावात् ।

**अन्यार्थपरिग्रहे सक्तादायतिच्छेदनमर्थस्य निष्क्रमणं लोकविद्विष्टस्य वा नीचस्य गमनमायतिघ्नमर्थोऽनर्थानुबन्धः ॥**

---

१. 'ताभिः'. २. 'ग्रामौ'. ३. 'आयते'. ४. 'छिद्यमानस्यार्थस्य'

सक्तादिति यः सक्तो निःसारत्वादन्यदीयमर्थमपहृत्य प्रयच्छति तस्यार्थस्य परिग्रहे आयतिच्छेदनं प्रभावहानिर्दस्युना सह तिष्ठतीति । अर्थस्येति पूर्वोपात्तस्य । निष्क्रमणं चात्र द्रव्यमिति(?) । तावकेन(?) गृह्यमाणत्वात् । लोकविद्विष्टस्य च चौर्यमकुर्वतोऽपि । नीचस्य वा जातिन्यूनस्य । गमनमायतिघ्नमिति प्रभावं हन्ति । अत्रार्थोऽनर्थानुबन्धः । तदात्वे लाभस्यायतिच्छेदानर्थानुबन्धित्वात् । अयं विरुद्धानुबन्धः ।

(स्वेन[1] व्ययेन शूरस्य महामात्रस्य प्रभवतो वा लुब्धस्य गमनं निष्फलमपि व्यसनप्रतीकारार्थं महतश्चार्थघ्नस्य निमित्तस्य प्रशमनमायतिजननं वा सोऽनर्थोऽर्थानुबन्धः ॥)

कदर्यस्य सुभगमानिनः[2] कृतघ्नस्य वातिसंधानशीलस्य स्वैरपि व्ययैस्तथाराधनमन्ते[3] निष्फलं सोऽनर्थो निरनुबन्धः ॥

कदर्यस्येति आत्मानं भृत्यांश्च पीडयित्वा योऽर्थान्संचिनोति तस्य सुभगमानिन इति । असुभगः सन्नात्मानं सुभगं यो मन्यते स न प्रयच्छति । यः सुदुर्भगः सुभगमानी स केवलार्थो गम्य उक्तः । कृतघ्नस्य वेति । वाशब्दः पूर्वापेक्षया सर्वत्र योज्यः । अतिसंधानशीलस्य छलेन संधानपरस्य । तथाराधनमिति यथा स्वैरपि व्ययैरभिगमनम् । निष्फलं यथानुरञ्जनमप्यन्ते निष्फलम् । सोऽनर्थ इति यः कृतो व्ययो निरनुबन्धः ।

कदर्यादेर्विशेषमाह—

तस्यैव राजवल्लभस्य क्रौर्यप्रभावाधिकस्य[4] तथैवाराधनमन्ते निष्फलं निष्कासनं च दोषकरं सोऽनर्थोऽनर्थानुबन्धः ॥

क्रौर्यप्रभावाधिकस्येति दोषत्रयमत्राधिकम् । तथैवाराधनमिति यथा स्वैर्व्ययैरभिगमनं निष्फलम् । कदर्यादीनामदातृत्वात् । निष्कासनमददता दोषकरम् । ते हि निष्कासिता दोषत्रययुक्तत्वात्पारुष्यशरीरप्रघातादीनर्थान्कुर्युः । इत्यनर्थोऽनर्थानुबन्धः । अयं सजातीयानुबन्धः ।

एवं धर्मकामयोरप्यनुबन्धान्योजयेत् ॥

---

१. केषुचिन्मूलपुस्तकेष्वयं पाठोऽत्र वर्तते. २. 'तस्यैव कदर्यस्य सुभगाभिमानिनः'. ३. 'तथैवाराधनं'. ४. 'प्रताप'.

एवमन्यानपि धर्मकामयोरनुबन्धान्योजयेत् । तत्र ब्राह्मणस्य गृहस्थस्यानुरक्तस्य मुमूर्षोर्गमनात्प्राणसंरक्षणं कुटुम्बसंधारणं गार्हस्थ्यधर्मप्रवर्तनं च धर्मो धर्मानुबन्धः । काममात्रं च तद्धर्मो निरनुबन्धः । तस्यैवाकृतस्नानमोजनस्य गमनं कामो द्वेषानुबन्ध इति । अत्रानुबन्धाः षट् विजातीयविरुद्धाभ्यामनुबन्धा द्वादश ।

**परस्परेण च युक्त्या संकिरेदित्यनुबन्धाः ॥**

युक्त्येति विरुद्धं त्यक्त्वा शेषाणां विजातीयानामन्ययोगादित्यर्थः । तत्रार्थो धर्मानर्थकामद्वेषैः प्रत्येकमनुबन्ध(द्ध)श्चतुर्विधः । तथानर्थोऽपि धर्मार्थकामद्वेषैः प्रत्येकमनुबन्ध(द्ध)श्चतुर्विधः । तथा अधर्मोऽपि कामानर्थधर्मैः प्रत्येकमनुबन्धः(द्ध)श्चतुर्विधः । तथा द्वेषोऽपि । इति चतुर्विंशतिसंकीर्णानुबन्धाः ।

शुद्धसंशयमधिकृत्याह—

**परितोपितोऽपि दास्यति न वेत्यर्थसंशयः । निष्पीडितार्थमफलमुत्सृजन्त्या अर्थमलभमानाया धर्मः स्यान्न वेति धर्मसंशयः । अभिप्रेतमुपलभ्य परिचारकमन्यं वा क्षुद्रं गत्वा कामः स्यान्न वेति कामसंशयः । प्रभाववान् क्षुद्रोऽनभिमतोऽनर्थं करिष्यति न वेत्यनर्थसंशयः । अत्यन्तनिष्फलः सक्तः परित्यक्तः पितृलोकं यायात्तत्राधर्मः स्यान्नवेत्यधर्मसंशयः । रागस्यापि विवक्षायामभिप्रेतमनुपलभ्य विरागः स्यान्न वेति द्वेषसंशयः । इति शुद्धसंशयाः ॥**

यदि तदात्वे न ददाति सुरतोपचारेण परितोषितोऽपि दास्यति । तत्राज्ञानशीलत्वाद्दद्यान्न वेत्यर्थसंशयः। उत्सृजन्त्या इति । कामुकेभ्योऽङ्गानि दत्त्वार्थार्जनं चेत्स्याद्धर्मः । अङ्गार्पणं वेश्याया धर्मः । तथा हि—'यथा स्ववृत्तिधर्मः' इत्याचार्याः । तत्रार्थमलभमानाया निष्पीडितार्थस्योत्सर्जनमपि किं धर्मो न वेति संशयः। अभिप्रेतमपि रुचिरं नायकं परिचारकमात्मीयं वा क्षुद्रं निकृष्टं गत्वा तयोरनभिप्रेतत्वादज्ञातकामत्वाच्च कामः स्यान्न

१. 'वेशानुबन्ध'. २. 'दद्यात्'. ३. 'अनुपलभ्य'. ४. 'अभिप्रेतार्थं'. ५. 'द्वेषः'.

वेति संशयः । अनभिगत इति । अभिगन्तुमिच्छन् क्षुद्रत्वात्प्रत्याख्यातः सहि राजकुले लब्धप्रभावत्वादनर्थं करिष्यति न वेति संशयः । सक्त इति । अनुरक्तोऽभिगन्तुमिच्छन् । परित्यक्तो निष्फलत्वात् । पितृलोकं यायादिति । अवस्थान्तरप्राप्तौ यमलोकं यायादिति संभाव्यते । तत्रेति परित्यागेऽधर्मः स्यान्न वेति संशयः । रागस्यापि विवक्षायामिति । कामो न भविष्यतीति न विवक्षितं रागेण पीड्यमानत्वात् । अभिप्रेतोऽपि नास्ति यदायमाश्रित्य स्यादित्याह—अभिप्रेतमनुपलभ्येति । केवलमेव वर्तमानाया विद्वेषः स्यान्न वेति संशयः । शुद्धसंशया इति । एकस्यैव भावाभावाभ्यां संशय्यमानत्वात् ।

अथ[1] संकीर्णाः[2] ॥

त(अ)थेत्यानन्तर्ये । संकीर्णो(र्णा) निर्दिश्यते(न्ते) । शुद्धानन्तरं हि संकीर्णस्योद्दिष्टत्वात् । इदं वा स्यादिदं वेति संकीर्ण इति । स च (विरुद्धा)विरुद्धाभ्याम् ।

तत्र पूर्वमधिकृत्याह—

**आगन्तोरविदितशीलस्य वल्लभसंश्रयस्य प्रभविष्णोर्वा समुपस्थितस्याराधनमर्थोऽनर्थ इति संशयः । श्रोत्रियस्य ब्रह्मचारिणो दीक्षितस्य व्रतिनो लिङ्गिनो वा मां दृष्ट्वा जातरागस्य मुमूर्षोर्मित्रवाक्यादानृशंस्याच्च गमनं धर्मोऽधर्म इति संशयः । लोकादेवाकृतप्रत्ययादगुणो गुणवान्वेत्यनवेक्ष्य गमनं कामो द्वेष इति संशयः । संकिरेच्च परस्परेणेति संकीर्णसंशयाः ॥**

आगन्तोरिति कुतश्चिदागतस्य गमनेऽविदितशीलत्वादर्थोऽनर्थो वेति संशयः । अप्रत्ययस्य[3] वा अतिथितया समुपस्थितत्वादर्थः । वल्लभसंश्रयात्प्रभविष्णुत्वाद्वानर्थ इति कारणद्वयस्य निधानात्संशयः । श्रोत्रियस्येति गृहस्थस्यापि क्रियावतः । ब्रह्मचारिण इति प्रथमाश्रमस्य । व्रतिन इति कियन्तं कालं गृहीतपराकादिव्रतस्य । लिङ्गिन इति भौतादेः । मुमूर्षो-

1. 'तथा'. 2. 'संकीर्णः'. 3. 'अत्र प्रत्ययस्य'.

रिति मर्तुमिच्छोः । कामस्यावस्थान्तरप्राप्तत्वात् । मित्रवाक्यादिति । श्रोत्रियादीनां मित्रस्याभ्यर्थनावचनात् । आनृशंस्याच्च करुणायाः । अभिगमने धर्मोऽधर्म इति मा भूत्प्राणत्याग इति धर्मनियमभ्रंशः[1] दूष्य इत्यधर्मः । तदुभयमपि कस्मान्न भवतीति चेत्, न । अन्यतरस्य बलीयस उत्पादनात् । अकृतप्रत्ययादिति अकृतनिश्चयाल्लोकात् । किमयं गुणवान्न वेति स्वयमनवेक्ष्यानिश्चित्य केवलं लोकप्रवादाद्गुणवानित्यभिगमनादभिसरणे किल(म)तः कामो द्वेषो वेति विरुद्धसंकीर्णास्त्रयः ।

अविरुद्धमधिकृत्याह—

**यत्र परस्याभिगमनेऽर्थः सक्ताच्च संघर्षतः[2] स उभयतोऽर्थः । यत्र[3] स्वेन व्ययेन निष्फलमभिगमनं सक्ताच्चामर्षिताद्वित्तप्रत्यादानं स उभयतोऽनर्थः । यत्राभिगमनेऽर्थो[4] भविष्यति न वेत्याशङ्का सक्तोऽपि संघर्षाद्दास्यति न वेति स उभयतोऽर्थसंशयः । यत्राभिगमने[5] व्ययवति पूर्वो विरुद्धः क्रोधादपकारं करिष्यति न[6] वेति सक्तो वामर्षितो दत्तं प्रत्यादास्यति न वेति स[7] उभयतोऽनर्थसंशयः । इत्यौद्दालकेरुभयतोयोगाः ॥**

यत्रेति यस्मिन्नुभयतो लोयोके(योगे) । परस्येत्यपूर्वस्य । उत्तरत्राप्यधिकृतं वेदितव्यम् । अभिगमनेऽर्थः परस्मादेव । सक्ताच्चेत्यनुरक्तात् । अभिगमने । संघर्षत इति स्पर्धमानादर्थः । स मा भूदनेनास्याः संप्रयोग इति स्पर्धया ददाति । स उभयतोयोग उभयतोऽर्थो नाम । अन्यत्र यस्मिन् क्रियमाणे कार्यस्योत्पत्तिरुभयतो योग इति भूतसूत्रार्थो योज्यः । यस्मिन्नुभयतोयोगे स्वेन व्ययेनाभिगमनम् । परस्येति वर्तते । निष्फलमित्यर्थः । सक्ताच्चानुरक्तादभिगमनम् । विभक्तिविपरिणामेन योज्यम् । अमर्षितादिति[8] कदाचिदर्थयुक्तात् क्रुद्धात् । वित्तप्रत्यादानमिति तेनैव दत्तं प्रतीपमादीयमानम् । अनर्थः अन्ते निष्क्रमणात् । स उभयतोयोग उभयतोऽनर्थो नाम । उभयतोगम्यस्य भिन्नविषयत्वात् । निरनुबन्धपक्षेऽन्तर्भावः । सं-

---

१. 'भ्रंशदूष्य'. २. 'सहर्षतः'. ३. 'यत्र परस्य स्वेन'. ४. 'यस्य'. ५. 'यस्य'. ६. 'अनर्थे'. ७. 'नवेतिसंशयः'. ८. 'तत्'. ९. 'अमर्षादिति'.

शयोऽत्रास्त्येवेत्याह—यत्रेति यस्मिन्नुभयतोयोगे। अभिगमन इति परस्य। भविष्यति न वेत्याशङ्का न निश्चयः। सक्तश्चाभिगमने संघर्षात्स्पर्धया दास्यति न वेति स उभयतोऽर्थसंशयो नाम। यत्रेति यस्मिन्नुभयतोयोगे। व्ययवतीति व्ययं कृत्वापि परस्याभिगमनम्। पूर्व इति पूर्वसंसृष्टः। विरुद्धः परस्यैव। क्रोधादिति। स्वेन व्ययेनाभिगमनमनया क्रियत इति तद्वारेण क्रोधान्ममापकारं करिष्यति न वेति संशयः। सक्तश्च प्राक्[1]याचिदर्थयुक्त्यामर्षितो मम(नो) दत्तं प्रत्यादास्यति न वेति संशयः स उभयतोयोगोऽनर्थसंशयो नाम।

बाभ्रवीयास्तु—यत्राभिगमनेऽर्थोऽनभिगमने च सक्तादर्थः स उभयतोऽर्थः। यत्राभिगमने निष्फलो व्ययोऽनभिगमने च निष्प्रतीकारोऽनर्थः स उभयतोऽनर्थः। यत्राभिगमने निर्व्ययो दास्यति नवेति संशयोऽनभिगमने सक्तो दास्यति नवेति स उभयतोऽर्थसंशयः। यत्राभिगमने व्ययवति पूर्वो विरुद्धः प्रभाववान् प्राप्स्यते न वेति संशयोऽनभिगमने च क्रोधादनर्थं करिष्यति न वेति स उभयतोऽनर्थसंशयः॥

वाभ्रवीयास्त्विति। उभयतोयोगा वक्ष्यन्त इति शेषः। यत्रेत्युभयतोयोगे। अनभिगमने च सक्तादिति अनभिगतात्सक्तादित्यर्थः। यः सक्तो वशी सोऽनभिगत एव दास्यति। यथोक्तं प्राक्—'सक्तं तु वशिनं नारी संभाष्यान्यत्र वा व्रजेत्' इति। पूर्वस्मिन्दर्शनेऽन्यतराभिगमनेऽन्यतरस्मादर्थः। इयं (इह) त्वेकत्वा(ला)भिगमने उभयस्मादर्थः। ततश्च स एवात्र मूलसूत्रार्थः। यत्रेत्युभयतोयोगे। अभिगमन इति परस्य। निष्फलो व्यय इति अनर्थः। अनभिगमने वा (च) सक्तादित्यनुवर्तते। यः पराभिगमनेन सक्तो जातामर्षस्तस्मान्निष्प्रतीकारोऽनर्थो यद्वित्तप्रत्यादानं स उभयतोऽनर्थो नाम। यत्रेत्युभयतोयोगे। अभिगमने परस्य। निर्व्यय इति विना व्ययः। अनभिगमने सक्त इति विनाभिगमनं दास्यति न वेति।

१. 'द्राक्'. २. 'यस्य'. ३. यस्य'. ४. 'प्रत्यादास्यति'. ५. 'प्रयच्छति'.

तस्य वशित्वं न निश्चितं स चोभयतोऽर्थसंशय इति नाम। यत्रेत्युभयतो
योगे। अभिगमने परस्य। पूर्वो विरुद्धः प्राप्स्यते मया तद्द्वारेणायमपक
रिष्यति न वेति संशयः। अनभिगमने च सक्त इति वर्तते। क्रोधादन
करिष्यति न वेति संशयः। पराभिगमने तदीयामर्षस्यानिश्चितत्वात्। उ
यतोऽनर्थसंशयो नाम। एते चत्वार उभयतोयोगा दर्शनद्वयेऽपि शुद्धा उक्ता

संकीर्णानाह—

**एतेषामेव व्यतिकरेऽन्यतोऽर्थोऽन्यतोऽनर्थः, अन्यतोऽर्थोऽन्**
**तोऽर्थसंशयः, अन्यतोऽर्थोऽन्यतोऽनर्थसंशय इति षट्संकीर्णयोगाः**

एतेषामेव व्यतिकर इति। सजातीयं त्यक्त्वा शेषाणां परस्परसंकीर्
(र्णत्वे) षट्संकीर्णयोगाः। यदाह—अन्यत इति। यत्र परस्याभिगम
एकतो योऽर्थः। सक्ताच्चामर्षिताद्वित्तप्रत्यादानमित्यन्यतोऽनर्थो य उभयत
योगोऽर्थानर्थरूपः। अन्यतोऽर्थ इति पूर्ववत्। सक्तः संघर्षाद्दास्यति न वे
त्यन्यतोऽर्थसंशयः। अयमर्थार्थसंशयरूपः। यत्र परस्य स्वेन व्ययेन नि
ष्फलमभिगमनमित्यन्यतोऽनर्थसंशयः। अन्यतोऽर्थ इति पूर्ववत्। सक्तोऽम
र्षितो दत्तं प्रत्यादास्यति नवेत्यन्यतोऽनर्थसंशयरूपः। अयमर्थानर्थसंशय
रूपः। एवं बाभ्रव्यदर्शनेऽपि योज्यम्।

**तेषु सहायैः सह विमृश्य यतोऽर्थभूयिष्ठोऽर्थसंशयो गुरुरनर्थ**
**प्रशमो वा ततः प्रवर्तेत॥**

तेष्विति दर्शनद्वयेऽपि शुद्धेषु संकीर्णेषु च। सहायैः पूर्वोक्तैः। य
इति यं गम्यमाश्रित्य। अर्थभूयिष्ठ इत्यर्थबहुलो योऽर्थसंशयो नेतरः। गु
रुरनर्थप्रशमो वा। अर्थाद्धि महतोऽनर्थस्य प्रतिकार्यस्य गुरुत्वात्। त
इति तं लक्षीकृत्य प्रवर्तेत।

**एवं धर्मकामावप्यनयैव युक्त्योदाहरेत्। संकिरेच्च परस्परेण व्य**
**तिषञ्जयेच्चेत्युभयतोयोगाः॥**

अनयैवेत्युक्तयुक्त्या उदाहरेत् तत्र परस्य द्विजत्वादभिगमने धर्मः स

१. 'एषामेव'. २. 'धर्मकामावपि तैरेव प्रकारैरुदाहरेदेकैकशः संकिरेत्परस्परे
व्यतिषञ्जयेत्युभयतोयोगाः'.

क्ताच्चानुरागान्मुमूर्षोः स उभयतो धर्मः । यत्र ब्रह्मचारिणोऽभिगमनेऽधर्मः सक्ताच्च व्रतस्थादनिच्छतः स उभयतोऽधर्मः । यत्र परस्य निर्द्रव्येऽभिगमने धर्मः (अनभीत्याशङ्क्याह) सक्ताच्च निष्पादितार्थत्वादप्रयच्छतो धर्मो न वेति स उभयतो धर्मसंशयः । यत्र परस्य लिङ्गिनो भिन्नव्रतगमनेनाधर्मो(ऽर्थो) न वेति संशयः सक्ताच्च व्रतस्थाद्दित्सतोऽधर्मो नवेति स उभयतोऽधर्मसंशय इति । यत्र परस्याभिप्रेतस्याभिगमने कामः सक्ताच्चाभिप्रेतात्स उभयतः कामः । यत्र परस्यानभिप्रेतस्य विरागः सक्ताच्चानभिप्रेतात्स उभयतोऽद्वेषः[1] । यत्र परस्याविदितशीलस्य गमने कामो भविष्यति न वेत्याशङ्का सक्ताच्च निकृष्टत्वात्कामो न वेति स उभयतः कामसंशयः । यत्र परस्याभिगमने रागापनयनविवक्षायां विरागः स्यान्न वेति संशयः सक्ताच्च तथैव विरागः स्यान्न वेति स उभयतो द्वेषसंशयः । इत्यौद्दालकेः शुद्धा उभयतो योगाः । तथैव गमनागमनाभ्यां बाभ्रवीयेषूदाहरेत्संकिरेच्च । धर्मकामावप्येतैरेव प्रकारैरेकैकशः संकिरेच्च परस्परेणेति । सजातीयांस्त्यक्त्वा । तथान्यतो धर्मोऽन्यतोऽधर्म इति धर्मसंशयेनाधर्मसंशयेन संकीर्णस्त्रिविधः । तथान्यतो धर्माभ्यामन्यतो धर्मसंशयो वान्यतो धर्मसंशयेन संकीर्णास्त्रयः । इति षट्संकीर्णाः । औद्दालकेः बाभ्रव्यस्य च एवमन्यतः कामोऽन्यतो द्वेषेण कामसंशयेन च संकीर्णास्त्रयः षडौद्दालकेर्बाभ्रव्यस्य च (?) । इहापि सहायैर्विमृश्य यतो धर्मभूयिष्ठस्तत्संशयो गुरुर्धर्मद्वेषप्रशमश्च ततः प्रवर्तेत न तु यतो धर्मो द्वेषतः संशयश्चेति योज्यम् । व्यतिषञ्जयेच्चेति । अर्थादीनां विरुद्धत्वं त्यक्त्वा शेषान्परस्परतः संश्लेषयेदित्यर्थः । तत्रान्यतो धर्माधर्मकामद्वेषैस्तत्संशयैश्च संयोजितोऽष्टप्रकारः । तथानर्थसंशयोऽर्थोनर्थसंशयश्च । समुदायेन द्वात्रिंशद्भवन्ति । एवमन्यतो धर्मोऽन्यतोऽर्थानर्थकामद्वेषैस्तत्संशयैश्च संयोजितोऽष्टप्रकारः । तथा धर्मो धर्मसंशयश्चेति द्वात्रिंशत् । एवमन्यतः कामोऽन्यतोऽर्थानर्थधर्मैस्तत्संशयैश्च संयोजितोऽष्टप्रकारः । तथा द्वेषः कामसंशयश्चेति द्वात्रिंशत् । समुदायेन षण्णवतिः । विपर्ययेणैतावन्तः ।

---

१. 'अकामः'.

एवमौद्दालकेर्व्यतिषङ्गसंयोगानां च द्वानवतिशतम् । एवं बाभ्रव्यस्य । तेष्वपि सहायैर्विमृश्येत्यादियोज्यम् ।

उक्ता उभयतो योगास्त्रिविधाः—शुद्धाः संकीर्णा व्यतिषक्ताश्च । समन्ततो योगं दर्शयितुं विशेषमाह—

संभूय च विटाः परिगृह्णन्त्येकामसौ गोष्ठीपरिग्रहः । सा तेषामितस्ततः संसृज्यमाना प्रत्येकं संघर्षादर्थं निर्वर्तयेत् । सुवसन्तकादिषु च योगे यो मे इममम्रुं च संपादयिष्यति तस्याद्य गमिष्यति मे दुहितेति मात्रा वाचयेत् । तेषां च संघर्षजेऽभिगमने कार्याणि लक्षयेत् । एकतोऽर्थः सर्वतोऽर्थः एकतोऽनर्थः सर्वतोऽनर्थः अर्धतोऽर्थः सर्वतोऽर्थः अर्धतोऽनर्थः सर्वतोऽनर्थः । इति समन्ततो योगाः ॥

संभूयेत्येकीभूय जातविश्वासत्वात्परिगृह्यन्ते वैतके(गृह्णन्त्येवैकां) विटाः। प्राप्तापूर्वसमाचारत्वात् । असौ गोष्ठीपरिग्रह उच्यते यो बहुभिरेकस्याः परिग्रहः। तेनानेकपरिग्रहायाः समन्ततो योग इति तामेवाधिकृत्याह—अनेकपरिग्रहात्तेषामितस्तत इत्यनेनैकेन कदाचिद्द्वाभ्यां बहुभिर्वा संसृज्यमाना संपर्कमयन्ती । संघर्षादिति । परस्परसंघर्षाच्चेषां संसृज्यमाना प्रत्येकमेकैकशोऽर्थान्निर्वर्तयेत् । स्पर्धाकारणमाह—सुवसन्तकादिष्विति । तेषु सर्वेषु (विटाः सर्वेषु) विटानां कामदौर्बल्यं जायते । मनोरथमित्यभिप्रेतम् । वाचयेत् । सा हि निरतोरुघत्वात् (?) शक्ता व्यवस्थापयितुम् । संघर्षज इति संघर्षजनिते । कार्याणीति लाभान् । तान्याह—एकतोऽर्थ इति । यावद्भिः परिगृहीता तेषामन्यतमस्यैकस्य द्वयोरन्यतरस्यैकस्य शेषेण सह स्पर्धा तस्मादेकतोऽर्थं लक्षयेत् । सर्वत इति सर्वेभ्योऽर्थम् । एकतोऽनर्थं सर्वतोऽनर्थं यदोभौ स्पर्धेते तदोभयतोऽर्थं सर्वतोऽर्थमुभयतोऽर्थम् । उभयतोऽनर्थः सर्वतोऽनर्थ इति । यदार्धः स्पर्धेते तदार्धतोऽर्थमर्धतोऽनर्थमिति समन्ततो योगस्त्रिधा भिन्नाः ।

---

१. 'सकीर्णाश्च'. २. 'यामेका'. ३. 'यो मे मनोरथमिम युवा'. ४. 'रोचयेत्'. ५. 'उपलक्षयेत्'.

अभिन्नविषयत्वादनुबन्धो नास्ति संशयस्तु विद्यत इत्याह—

**अर्थसंशयमनर्थसंशयं च पूर्ववद्योजयेत् । संकिरेच्च तथा धर्मकामावपि । इत्यनुबन्धार्थानर्थसंशयविचाराः ॥**

पूर्ववदिति ।·································· । एकतोऽर्थः सर्वतोऽनर्थसंशय इति तृतीयः । एकतोऽनर्थः सर्वतोऽर्थसंशयश्चेति चतुर्थः । एकतोऽनर्थः सर्वतोऽनर्थसंशय इति पञ्चमः । एकतोऽर्थः सर्वतोऽनर्थ इति षष्ठः । इति संकीर्णाः षट् शुद्धाश्चत्वारः । एवं स्वजातीयं त्यक्त्वा संकीर्णाः षट् । संघर्षजेऽभिगमने कार्याण्येतान्युक्तानि । यदा त्वसंघर्षजमभिगमनं तदा तेषामेकाभिप्रायत्वाद्द्वादश समन्ततो योगाः । सर्वतोऽर्थः । सर्वतोऽनर्थः । सर्वतो धर्मः । सर्वतोऽधर्मः । सर्वतः कामः । सर्वतो द्वेषः । इति षट् । त एव संशयिताः षट् । इत्युक्ता अर्थानर्थानुबन्धसंशयविचाराः ।

वेशप्रयोजनमिदमधिकरणम् । वेशस्य कारणस्य शेषभूतमाह—

**कुम्भदासी परिचारिका कुलटा स्वैरिणी नटी शिल्पकारिका प्रकाशविनष्टा रूपाजीवा गणिका चेति वेश्याविशेषाः ॥**

कुम्भदासीति कुम्भग्रहणं निकृष्टकर्मोपलक्षणम् । लोके सामान्यास्त्रयः प्रसिद्धाः । कुम्भदासी गणिका रूपाजीवा चेति । शेषाणामपि सामान्यात्वात्तत्रैवान्तर्भावः परिचारिका याः स्वामिनं परिचरन्ति । तस्या औपनिषदिके विधिं वक्ष्यति । कुलटाया पतिभयाद्गृहान्तरं गत्वा प्रच्छन्नमन्येन संप्रयुज्यते । स्वैरिणी या पतिं तिरस्कृत्य स्वगृहेऽन्यगृहे वा संप्रयुज्यते । नटी रङ्गयोषित् । शिल्पकारिका रजकतन्तुवायभार्या । प्रकाशविनष्टा या जीवति मृते वा पत्यौ संग्रहणधर्मेण गृहीता कामचारं प्रवर्तते । एताः षट् रूपाजीवायामेवान्तर्भवन्ति विशेषः संपद्यते (?) ।

**सर्वासां चानुरूपेण गम्याः सहायास्तदुपरञ्जनमर्थागमोपाया निष्कासनं पुनः संधानं लाभविशेषानुबन्धा अर्थानर्थानुबन्धसंशयविचाराश्चेति वैशिकम् ॥**

---

१. 'उभयतोऽर्थ'. २. 'गणिका वेश्या चेति'. ३. 'निःसारणम्'.

सर्वासामिति । .......................................................................... ।

भवतश्चात्र श्लोकौ—

रत्यर्थाः पुरुषा येन रत्यर्थाश्चैव योषितः ।
शास्त्रस्यार्थप्रधानत्वात्तेन योगोऽत्र योषिताम् ॥
सन्ति रागपरा नार्यः सन्ति चार्थपरा अपि ।
[1]प्राक्तत्र वर्णितो रागो वेश्यायोगा[2]श्च वैशिके ॥

इति श्रीवात्स्यायनीये कामसूत्रे वैशिके षष्ठेऽधिकरणे अर्थानर्थानुबन्धसंशयविचारा वेश्याविशेषाश्च षष्ठोऽध्यायः ।

..........................................................................

[इत्यर्थानर्थानुबन्धसंशयविचारा वेश्याविशेषाश्चाष्टापञ्चाशं प्रकरणम् ।]

इति श्रीवात्स्यायनीयकामसूत्रटीकाया जयमङ्गलाभिधानायां विदग्धाङ्गनाविरहकातरेण गुरुदत्तेन्द्रपादाभिधानेन यशोधरेणैकत्रकृतसूत्रभाष्यायां वैशिके षष्ठेऽधिकरणेऽ[3]र्थानर्थानुबन्धसंशयविचारा वेश्याविशेषाश्च [4]षष्ठोऽध्यायः ।

समाप्तं चेदं वैशिकं नाम षष्ठमधिकरणम् ।

---

१. 'प्रागत्र'. २. 'योगस्तु'. ३. 'अनुबन्धार्थानर्थसंशयविचाराः'. ४. 'षष्ठोऽध्यायः' इत्यस्मादनन्तरं 'इत्यपरार्जुनभुजबलमल्लराजनारायणमहाराजाधिराजचौलुक्यचूडामणिश्रीमद्वीसलदेवस्य भारतीभाण्डागारे श्रीवात्स्यायनीयकामसूत्रटीकाया जयमङ्गलाभिधानायां वैशिकमधिकरण समाप्तम्' इति पुस्तकान्तरेऽस्ति. क्वचिच्च वीसलदेवस्य स्थाने महीमल्लदेवस्य इति शोधितमस्ति.

# औपनिषदिकं नाम सप्तममधिकरणम् ।



प्रथमोऽध्यायः ।

व्याख्यातं च कामसूत्रम् । तत्रोक्तैस्तु विधिभिरभिप्रेतमर्थमनधिगच्छन्नौपनिषदिकमाचरेत् । रूपं गुणो वयस्त्याग इति सुभगंकरणम् । तगरकुष्ठतालीसपत्रकानुलेपनं सुभगंकरणम् । एतैरेव सुपिष्टैर्वर्तिमालिप्याक्षतैलेन नरकपाले साधितमञ्जनं च । पुनर्नवासहदेवीसारिवाकुरण्टोत्पलपत्रैश्च सिद्धं तैलमभ्यञ्जनम् । तद्युक्ता एव स्रजश्च । पद्मोत्पलनागकेसराणां शोपितानां चूर्णं मधुघृताभ्यामवलिह्य सुभगो भवति । तान्येव तगरतालीसतमालपत्रयुक्तान्यनुलेपनम् । मयूरस्याक्षितरक्षोर्वा सुवर्णेनालिप्य दक्षिणहस्तेन धारयेदिति सुभगंकरणम् । तथा वादरं मणिं शङ्खमणिं च तेषां चाथर्वणान्योगान्गमयेत् । विद्यातन्त्राच्च विद्यायोगात्प्राप्तयौवनां परिचारिकां स्वामी संवत्सरमात्रमन्यतो धारयेत् । ततो धारितां वालां मत्वा लालसीभूतेपु गम्येपु योऽस्याः संह(घ)र्पेण वहु दद्यात्तस्मै विसृजेदिति सौभाग्यवर्धनम् । गणिका प्राप्तयौवनां स्वां दुहितरं तस्या विज्ञानशीलरूपानुरूप्येण तानभिनिमन्त्र्य सारेण योऽस्यै इदमिदं च दद्यात्स पाणिं गृह्णीयादिति संसाध्य रक्षयेदिति । सा च मातुराविदिता नाम नागरिकपुत्रैर्धनिभिरत्यर्थं प्रीयेत । तेपां कलाग्रहणे गन्धर्वशालायां भिक्षुकीभवने तत्र तत्र च संदर्शनयोगाः । तेपां यथोक्तदायिनां माता पाणिं ग्राहयेत् । तत्तावदर्थमलभमाना तु स्वेनाप्येकदेशेन दुहित्रे एतद्दत्तमनेनेति ख्यापयेत् । प्रच्छन्नं वा तैः संयोज्य स्वयमजानती भूत्वा ततो विदितेष्वेवं धर्मस्थेषु निवेदयेत् । सख्यैव तु दास्या वा मोचितकन्याभावासुपगृहीतकामसूत्रामाभ्यासिकेपु योगेपु प्रतिष्ठितां प्रतिष्ठिते

---

१. अध्यायद्वयात्मकस्यास्याधिकरणस्य जयमङ्गलाटीका नोपलभ्यते. वाराणसेयभास्करनरसिंहशास्त्रिप्रणीता वृत्तिस्त्वतीव तुच्छेति मूलमात्रमेवास्याधिकरणस्य मुद्रितम्. २. 'अवलिहेत्स'. ३. 'अनुलिप्य'. ४. 'मयूरस्याक्षतरोर्वा'. ५ 'आमयेत्'. ६ उचिता. ७. 'एव वन्धुमध्यस्थेपु'.

वयसि सौभाग्ये च दुहितरमवसृजन्ति गणिका इति प्राप्योपचाराः । पाणिग्रहश्च संवत्सरमव्यभिचार्यस्ततो यथाकामिनी स्यात् । ऊर्ध्वमपि संवत्सरात्परिणीतेन निमन्त्र्यमाणा लाभमप्युत्सृज्य तां रात्रिं तस्यागच्छेदिति वेश्यायाः पाणिग्रहणविधिः सौभाग्यवर्धनं च । एतेन रङ्गोपजीविनां कन्या व्याख्याताः । तस्मै तु तां दद्युर्य एषां तूर्यविशिष्टमुपकुर्यात् । इति सुभगंकरणम् । (एकोनषष्टितमं प्रकरणम् ॥)

धत्तूरकमरिचपिप्पलीचूर्णैर्मधुमिश्रैर्लिप्तलिङ्गस्य प्रयोगो वशीकरणम् । वातोद्भ्रान्तपत्रं मृतकनिर्माल्यं मयूरास्थिचूर्णावचूर्णं[1] वशीकरणम् । स्वयंमृताया मण्डलकारिकायाश्चूर्णं[2] मधुसंयुक्तं सहामलकैः स्नानं वशीकरणम् । वज्रस्नुहीगण्डकानि[3] खण्डशः कृतानि मनःशिलागन्धपाषाणचूर्णेनाभ्यज्य सप्तकृत्वः शोषितानि चूर्णयित्वा मधुना लिप्तलिङ्गस्य संप्रयोगो वशीकरणम् । एतेनैव रात्रौ धूमं कृत्वा तद्धूमतिरस्कृतं सौवर्णं चन्द्रमसं दर्शयति । एतैरेव चूर्णितैर्वानरपुरीषमिश्रितैर्यां कन्यामवकिरेत्सान्यस्मै न दीयते । वचागण्डकानि[4] सहकारतैललिप्तानि शिंशपावृक्षस्कन्धमुत्कीर्य निदध्यात् । षड्भिर्मासैरपनीतानि देवकान्तमनुलेपनं वशीकरणं चेत्याचक्षते । तथा खदिरसारजानि[5] शकलानि तनूनि यं वृक्षमुत्कीर्य निदध्यात्तत्पुष्पगन्धानि भवन्ति । गन्धर्वकान्तमनुलेपनं वशीकरणं चेत्याचक्षते प्रियंगवस्तगरमिश्राः सहकारतैलदिग्धा नागकेसरवृक्षमुत्कीर्य षण्मासनिहिता नागकान्तमनुलेपनं वशीकरणमित्याचक्षते । उष्ट्रस्यास्थि भृङ्गराजरसेन भावितं दग्धमञ्जनमुष्ट्रास्थ्यञ्जनिकायां निहितमुष्ट्रास्थिशलाकयैव स्रोतोञ्जनसहितं पुण्यं चक्षुष्यं वशीकरणं चेत्याचक्षते । एतेन श्येनभासमयूरास्थिमयान्यञ्जनानि व्याख्यातानि । (इति वशीकरणम् । षष्टितमं प्रकरणम् ॥)

---

१. 'मयूरास्थिचूर्णं'. २. 'मण्डलकारिका गृध्री' इति वृत्तिकृत्. ३. 'गण्डकारिकाः'. ४. 'खण्डकानि'. ५. 'खदिरसाराणि'.

उच्चटाकन्दश्च यष्टीमधुकं च सशर्करेण पयसा पीत्वा वृषो भवति। मेषवस्तमुष्कसिद्धस्य पयसः सशर्करस्य पानं वृषत्वयोगः। तथा विदार्याः क्षीरिकायाः स्वयंगुप्तायाश्च क्षीरेण पानम्। तथा पियालबीजानां मोरटाक्षीरविदार्योश्च क्षीरेणैव। शृङ्गाटककसेरुमधूकानि क्षीरकाकोल्या सह पिष्टानि सशर्करेण पयसा घृतेन मन्दाग्निनोत्कारिकां पक्त्वा यावदर्थं भक्षितवाननन्ताः स्त्रियो गच्छतीत्याचक्षते। माषकलधौतामुष्णेन घृतेन मृदूकृत्योद्धृतां वृद्धवत्सायाः गोः पयः सिद्धं पायसं मधुसर्पिर्भ्यामशित्वानन्ताः स्त्रियो गच्छतीत्याचक्षते। विदारी स्वयंगुप्ता शर्करामधुसर्पिर्भ्यां गोधूमचूर्णेन पोलिकां कृत्वा यावदर्थं भक्षितवाननन्ताः स्त्रियो गच्छतीत्याचक्षते। चटकाण्डरसभावितैस्तण्डुलैः पायसं सिद्धं मधुसर्पिर्भ्यां प्लावितं यावदर्थमिति समानं पूर्वेण। चटकाण्डरसभावितानपगतत्वचस्तिलान् शृङ्गाटककसेरुकस्वयंगुप्ताफलानि गोधूममाषचूर्णैः सशर्करेण पयसा सर्पिषा च पक्कं पायसं यावदर्थं प्राशितमिति समानं पूर्वेण। सर्पिषो मधुनः शर्कराया मधुकस्य च द्वे द्वे पले मधुरसायाः कर्षः प्रस्थं पयस इति षडङ्गममृतं मेध्यं वृष्यमायुष्यं युक्तरसमित्याचक्षते। शतावरीश्वदंष्ट्रागुडकषाये पिप्पलीमधुकल्के गोक्षीरच्छागघृते पक्के तस्य पुष्पारम्भेणान्वहं प्राशनं मेध्यं वृष्यमायुष्यं युक्तरसमित्याचक्षते। शतावर्याः श्वदंष्ट्रायाः श्रीपर्णीफलानां च क्षुण्णानां चतुर्गुणे जले पाक आ प्रकृत्यवस्थानात्। तस्य पुष्पारम्भेण प्रातः प्राशनं मेध्यं वृष्यमायुष्यं युक्तरसमित्याचक्षते। श्वदंष्ट्राचूर्णसमन्वितं तत्सममेव यवचूर्णं प्रातरुत्थाय द्विपलिकमनुदिनं प्राश्नीयान्मेध्यं वृष्यमायुष्यं युक्तरसमित्याचक्षते। (इति वृष्यायोगाः। एकषष्टितमं प्रकरणम्॥)

आयुर्वेदाच्च वेदाच्च विद्यातन्त्रेभ्य एव च।
आप्तेभ्यश्चाववोद्धव्या योगा ये प्रीतिकारकाः॥

---

१. 'मधूलिकानि'. २. 'माषकल्मा'.

न प्रयुञ्जीत संदिग्धान्न शरीरात्ययावहान् ।
न जीवघातसंबद्धान्नाशुचिद्रव्यसंयुतान् ॥
तथा युक्तान्प्रयुञ्जीत शिष्टैरपि न निन्दितान् ।
ब्राह्मणैश्च सुहृद्भिश्च मङ्गलैरभिनन्दितान् ॥

इति श्रीवात्स्यायनीये कामसूत्रे औपनिषदिके सप्तमेऽधिकरणे सुभगकरणं वशीकरणं वृष्याश्च योगाः प्रथमोऽध्यायः ।

---

द्वितीयोऽध्यायः ।

चण्डवेगां रञ्जयितुमशक्नुवन्योगानाचरेत् । रतस्योपक्रमे संबाधस्य करेणोपमर्दनं तस्या रसप्राप्तिकाले च रतयोजनमिति रागप्रत्यानयनम् । औपरिष्टकं मन्दवेगस्य गतवयसो व्यायतस्य श्रान्तस्य च रागप्रत्यानयनम् । अपद्रव्याणि वा योजयेत् । तानि सुवर्णरजतताम्रकालायसगजदन्तगवलद्रव्यमयाणि त्रापुषाणि सैसकानि च मृदूनि शीतवीर्याणि वृष्याणि कर्मसहिष्णूनि भवन्तीति बाभ्रवीया योगाः । दारुमयानि साम्यतश्चेति वात्स्यायनः । लिङ्गप्रमाणान्तरं बिन्दुभिः कर्कशपर्यन्तं बहुलैः स्यात् । एत एव द्वे संघाटी । त्रिप्रभृति यावत्प्रमाणं वा चूडकः । एकामेव लतिकां प्रमाणवशेन वेष्टयेदित्येकचूडकः । उभयतोमुखच्छिद्रः स्थूलकर्कशपृषतगुटिकायुक्तः प्रमाणयोगी कट्यां बद्धः कञ्चुको जालकं वा । तदभावेऽलाबूनालकं वेणुश्च तैलकषायैः सुभावितः सूत्रजङ्घाबद्धः श्लक्ष्णा काष्ठमाला वा ग्रथिता बहुभिरामलकास्थिभिः संयुक्तेत्यपविद्धयोगाः । न त्वपविद्धस्य कस्यचिद्व्यवहृतिरस्तीति दाक्षिणात्यानां लिङ्गस्य कर्णयोरिव व्यधनं बालस्य । युवा तु शस्त्रेण च्छेदयित्वा यावद्रुधिरस्यागमनं तावदुदके तिष्ठेत् । वैशद्यार्थं च तस्यां रात्रौ निर्बन्धाद्व्यवायः । ततः कषायैरेकदिनान्तरितं शोधनम् । वेतसकु-

---

१. 'उपमर्दनात्'. २. 'कम्बुजालक'. ३. 'सूत्रेण कट्यां बद्धः' इति वृत्तिकृत्. 'शूक;' 'सूकर'. ४. 'व्याहृतिः'; 'व्याहृतिः'.

टजशङ्कुभिः क्रमेण वर्धमानस्य वर्धनैर्बन्धनम् । यष्टीमधुकेन मधुयुक्तेन शोधनम् । ततः सीसपत्रकर्णिकया वर्धयेत् । म्रक्षयेद्भल्लातकतैलेनेति व्यधनयोगाः । तस्मिन्ननेकाकृतिविकल्पान्यपद्रव्याणि योजयेत् । वृत्तमेकतो वृत्तमुदूखलकं कुसुमकं कण्टकितं कङ्कास्थिगजप्रहारिकमष्टमण्डलिकं भ्रमरकं शृङ्गाटकमन्यानि वोपायतः कर्मतश्च बहुकर्मसहता चैषां मृदुकर्कशता यथासात्म्यमिति नष्टरागप्रत्यानयनम् । (द्वाषष्टितमं प्रकरणम् ॥)

एवं वृक्षजानां जन्तूनां शूकैरुपलिप्तं लिङ्गं दशरात्रं तैलेन मृदितं पुनःपुनरुपलिप्तं पुनः प्रमृदितमिति जातशोफं खट्वायामधोमुखस्तदन्तरे लम्बयेत् । ततः शीतैः कषायैः कृतवेदनानिग्रहं सोपक्रमेण निष्पादयेत् । स यावज्जीवं शूकजो नाम शोफो विटानाम् । अश्वगन्धाशबरकन्दजलशूकबृहतीफलमाहिषनवनीतहस्तिकर्णवज्रवल्लीरसैरेकैकेन परिमर्दनं मासिकं वर्धनम् । एतैरेव कषायैः पक्वेन तैलेन परिमर्दनं षण्मास्यम् । दाडिमत्रपुसबीजानि वालुकं बृहतीफलरसश्चेति मृद्वग्निना पक्वेन तैलेन परिमर्दनं परिषेको वा । तांस्तांश्च योगानाप्तेभ्यो बुध्येतेति वर्धनयोगाः । (त्रिषष्टितमं प्रकरणम् ॥)

स्नुहीकण्टकचूर्णैः पुनर्नवावानरपुरीषलाङ्गलिकामूलमिश्रैर्यामवकिरेत्सा नान्यं कामयेत । तथा सोमलतावल्गुजभृङ्गलोहोपजिह्विकाचूर्णैर्व्याधिघातकजम्बूफलरसनिर्यासेन घनीकृतेन लिप्तसंबाधां गच्छतो रागो नश्यति । गोपालिकाबहुपादिकाजिह्विकाचूर्णैर्माहिषतक्रयुक्तैः स्नातायां गच्छतो रागो नश्यति । नीपाम्रातकजम्बूकुसुमयुक्तमनुलेपनं दौर्भाग्यकरं स्रजश्च । कोकिलाक्षफलप्रलेपो हस्तिन्याः संहतमेकरात्रं करोति । पद्मोत्पलकन्दसर्जकसुगन्धचूर्णा-

१. 'कङ्कास्थिमज्जकप्रहारिक'. २. 'निष्पातयेत्'.

नि मधुना पिष्टानि लेपो मृग्या विशालीकरणम् । स्नुहीसोमार्कक्षीरैर्वल्गुजाफलैर्भावितान्यामलकानि केशानां श्वेतीकरणम् । मदयन्तिकाकुटजकवञ्जनिकागिरिकर्णिकाश्लक्ष्णपर्णीमूलैः स्नानं केशप्रत्यानयनम् । एतैरेव सुपक्वेन तैलेनाभ्यङ्गात्कृष्णीकरणं क्रमेणास्य प्रत्यानयनम् । श्वेताश्वस्य मुष्कस्वेदैः सप्तकृत्वो भावितेनालक्तकेन रक्तोऽधरः श्वेतो भवति । मदयन्तिकादीन्येव प्रत्यानयनम् । बहुपादिकाकुष्ठतगरतालीसदेवदारुवज्रकन्दकैरुपलिप्तं वंशं वादयतो या शब्दं शृणोति सा वश्या भवति । धत्तूरफलयुक्तोऽभ्यवहार उन्मादकरः । गुडो जीर्णितश्च प्रत्यानयनम् । हरितालमनःशिलाभक्षिणो मयूरस्य पुरीषेण लिप्तहस्तो यद्द्रव्यं स्पृशति तन्न दृश्यते । अङ्गारतृणभस्मना तैलेन विमिश्रमुदकं क्षीरवर्णं भवति । हरीतक्याम्रातकयोः श्रवणप्रियंगुकाभिश्च पिष्टाभिर्लिप्तानि लोहभाण्डानि ताम्रीभवन्ति । श्रवणप्रियंगुकातैलेन दुकूलसर्पनिर्मोकेण वर्त्या दीपं प्रज्वाल्य पार्श्वे दीर्घीकृतानि काष्ठानि सर्पवद्दृश्यन्ते । श्वेतायाः श्वेतवत्साया गोः क्षीरस्य पानं यशस्यमायुष्यम् । ब्राह्मणानां प्रशस्तानामाशिषः । (इति चित्रा योगाः । चतुःषष्टितमं प्रकरणम् ॥)

पूर्वशास्त्राणि संहृत्य प्रयोगानुपसृत्य च ।
कामसूत्रमिदं यत्नात्संक्षेपेण निवेशितम् ॥
धर्ममर्थं च कामं च प्रत्ययं लोकमेव च ।
पश्यत्येतस्य तत्त्वज्ञो न च रागात्प्रवर्तते ॥
अधिकारवशादुक्ता ये चित्रा रागवर्धनाः ।
तदनन्तरमत्रैव ते यत्नाद्विनिवारिताः ॥
न शास्त्रमस्तीत्येतेन प्रयोगो हि समीक्ष्यते ।
शास्त्रार्थान्व्यापिनो विद्यात्प्रयोगांस्त्वेकदेशिकान् ॥

---

१. 'कृष्णीकरणात्'. २. 'सद्ब्राह्मणानां'. ३. 'निवेदितम्'.

बाभ्रवीयांश्च सूत्रार्थानागमं सुविमृश्य च ।
वात्स्यायनश्चकारेदं कामसूत्रं यथाविधि ॥

तदेतद्ब्रह्मचर्येण परेण च समाधिना ।
विहितं लोकयात्रार्थं न रागार्थोऽस्य संविधिः ॥

रक्षन्धर्मार्थकामानां स्थितिं स्वां लोकवर्तिनीम् ।
अस्य शास्त्रस्य तत्त्वज्ञो भवत्येव जितेन्द्रियः ॥

तदेतत्कुशलो विद्वान्धर्मार्थाववलोकयन् ।
नातिरागात्मकः कामी प्रयुञ्जानः प्रसिध्यति ॥

इति श्रीवात्स्यायनीये कामसूत्रे औपनिषदिके सप्तमेऽधिकरणे नष्टरागप्रत्यानयनं वृद्धिविधयश्चित्राश्च योगा द्वितीयोऽध्यायः ।

समाप्तं चेदमौपनिषदिकं नाम सप्तममधिकरणम् ।

ग्रन्थश्च समाप्तः ।



१. 'यात्रार्थे'.

# श्रीवात्स्यायनप्रणीतं कामसूत्रम् ।

## श्रीयशोधरविरचितया जयमङ्गलाख्यया टीकया समेतम् ।



विरलप्रचारोऽयमतीवोपयुक्तो लोकव्यवहारादर्शभूतः प्राचीनो ग्रन्थः सहृदयसुहृदनुरोधेन साहाय्येन च पञ्चषाणि पुस्तकानी-तस्ततः संकलय्य तदाधारेण विविच्य मुद्रणं प्रापितः । मुद्रितानि च स्वल्पान्येव पुस्तकानि । अधुना यः कश्चन विपश्चित्तत्पुस्तकम-भिलषति स पत्रसमेतं पञ्चकलाधिकं रूप्यकपञ्चकं (रु० ५ आ० ५) मत्समीपे प्रहिणोतु, तदा सत्वरमेव पुस्तकं प्रहितं भविष्यति । पत्रमात्रमेव प्रेष्यते चेत्तदापि 'व्हाल्यू-पेयबल्-पार्सल्'द्वारा पुस्तकं प्रहेष्यते । पत्रं चाङ्ग्लनागरान्यतरलिपिसमुल्लसितं स्फुटं प्रहेय-मित्यभ्यर्थयते—

महामहोपाध्यायपण्डितदुर्गाप्रसाददारकः
पं० केदारनाथः ।
संघी का रस्ता ।
जयपुर ।
(राजपुताना)



श्रीः ।

# निवेदनम् ।

श्रीवात्स्यायनमुनिविरचितं कामसूत्रं गुरुदत्तेन्द्रपादाभिधानश्रीयशोधरविरचितया जयमङ्गलाख्यया टीकया समलंकृतमसत्पितृचरणैर्महामहोपाध्यायपण्डितवरश्रीदुर्गाप्रसादैः पूर्वं प्रकाशितम् । ग्रन्थस्यास्य नितरां गोपनीयत्वान्मित्रेष्वेव कृतेऽपि प्रचारेऽतीतानि प्रकाशितपूर्वाणि पुस्तकानि । अतएवास्य मया द्वितीयं संस्करणं व्यधायि । ( A. D. 1900 )

एवं संजातेऽपि संस्करणद्वयेऽन्तिमस्यौपनिषदिकाख्यसप्तमाधिकरणस्य टीकायाअनुपलब्धौ नापार्यत सा प्रकाशयितुम्। अधुना च श्रीमद्भिर्विशाखपत्तन(विजगापट्टम)वासिभिरार्यगुरुवरैः श्रीवेङ्कटरङ्गनाथस्वामिभिः सानुकम्पमस्मत्सविधे प्रेषितेति तेभ्यो धन्यवादार्पणपुरःसरं प्रकाश्य वात्स्यायनीयगुणगरिमगम्भीराशयेभ्यः श्रीमद्भ्यः उपायनीक्रियते ।

वात्स्यायनकामसूत्रस्यान्यापि श्रीरामचन्द्रसूनुवीरभद्रविरचिता काचन कन्दर्पचूडामणिनामिका टीका समुपलभ्यते । सा च वि. १६३३ संवत्सरे ( A. D. 1577 ) निर्मितेति तदीयान्तिमश्लोकेन स्फुटमवगम्यते ।

तत्रारम्भेः ।

वंशः कंसद्विष इव जयति यश्चेलायां भूभुजां मान्यः ।
अज(न)वद्योऽस्ति जगत्यां यस्मादन्यो न भूपालः ॥
प्रादुर्बभूव वंशे तत्र श्रीशालवाहनो नृपतिः ।
इन्दुर्मरन्दविन्दुर्यस्य पुरा पुण्डरीकस्य ॥

---

(१) ( See catalogue of Sanskrit Mss. of H. H. the Maharaja of Jummu and Kashmir by M. A. Stein. Ph. D. )

(२) ( पद्यान्येतानि Sanskrit Manuscripts of the Maharaja of Bikaner by R. Mitra नामकवीकानेरपुस्तकालयसूचीपत्रत उद्धृतानि )

पर्यवसानम् ।

हरलोचनहरलोचनरसशशिभि(१६३३)र्विश्रुते समये ।
फाल्गुण(न)शुक्लप्रतिपदि पूर्णो ग्रन्थः सरस्सेरः ।

श्रीवीरभद्रकृतनाट्यशास्त्रे पुष्पबाणशासनानुष्ठवे उपनिषदधिकरणे चरमोध्यायः ।
कन्दर्पचूडामणिः समाप्तः ।

टीकायाश्चास्याः पुस्तकमेकं काश्मीरमहाराजपुस्तकालये, बीकानेरराजकीयपुस्तकालये चैवं पुस्तकद्वयं वर्तते ।

इति निवेदयति

विदुषामनुचरः केदारनाथः ।

# मुद्रणावशिष्टा कामसूत्रव्याख्या जयमङ्गला।

## औपनिषदिकं नाम सप्तममधिकरणम्।

शास्त्रकार एवाधिकरणसंबन्धमाह—व्याख्यातं कामसूत्रमिति। तन्त्रावापात्मकं साधारणं तु तदङ्गत्वादुभयात्मकम्॥

तत्रोक्तैरिति। तन्त्रावापोक्तैः। अभिप्रेतमनधिगच्छन्निति। ईप्सितमप्राप्नुवन्। औपनिषदिकमिति। अभिधायकमात्मनो विधेयमिति।

सुभगंकरणमुच्यते—रूपमिति। वर्णसंस्थानं सहजमितरदनित्यम्। नित्यं स्नानं द्वितीयमुत्सादनमित्यादिसंस्कारवशाच्चेतोहारि भवति॥ गुणा ये नायकस्योक्तास्ते विरूपमपि सुभगं कुर्वन्ति। अतस्तेषु यत्नः कार्यः॥ वय इति। यौवनं सर्वकार्यसमर्थम्। तत्र पुनस्तन्मतेन स्थिरं कार्यम्। वार्धक्ये हि पलित इत्यनादरो विशेषतः स्त्रीणाम्। तदपि केशरञ्जनादिसंस्कारापाते वैमुख्यं नोत्पादयति॥ त्याग इति। दानं तत्सर्वं बाधते यतो विरूपो निर्गुणो वृद्धो वा दाता सर्वैरेवाभिगम्यते॥

यत्र रूपादयो न सन्ति तत्र विधिमाह—तगरेति। तगरं तु कन्दकमौत्तरापथिकम्, न नेपालभवम्।

कुष्ठं यच्छ्वेतम्। तालीसपत्रकं प्रतीतम्। एतैरनुलेपनं शरीरस्य॥

वर्तिमालिप्य दुकूलमयीम्। अक्षतैलेन बिभीतकतैलेन। साधितमिति। नरकपाले पातितमित्याम्नायः। कज्जलं तेन स्नेहेन योज्यम्।

पुनर्नवेति। पुनर्नवा सहदेवीदण्डोत्पलकम्। सारिवेत्युत्पलसारिवा ग्राह्या। कुरण्टकः प्रसिद्धः। उत्पलपत्रमिति यदाभ्यन्तरं न बाह्यम्। शेषाणां मूलम्। सिद्धमिति तैलविधानेन पक्वम्। एतैरेव कषायं कल्कं च कृत्वा। तैलमिति तिलानाम्। अभ्यञ्जनं तु सुभगंकरणम्।

तद्युक्ता इति। पुनर्नवादिचूर्णयुक्ताः स्रजो धारिताः सुभगंकरणम्।

नाग इति । नागः, केसरः पद्मादीनाम् । केसराण्येकीकृत्य संचूर्ण्य । अवलिह्येति । वमनविरेचनं कृत्वा, तत्रापि न तदैव सुभगो मासादूर्ध्वं दृष्टशक्तिः ।

तान्येवेति । पद्मादिकेसराणि तगरादियुक्तानि अनुलिप्येत्यनुलेपनं कृत्वा शरीरस्य सुभगो भवति ।

मयूरस्येति । यो न विशीर्णबर्हः । तरक्षोर्वेति । यो मत्तः, स हि ग्रीष्मे माद्यति । अक्षीति । दक्षिणं वामं च ग्राह्यम् । द्वयोरेव सामर्थ्यमित्याम्नायः ।

सुवर्णेनावलिप्येति । शुद्धसुवर्णपत्रेण पुष्ययोगेन वेष्टयित्वा ॥

बादरमणिमिति । बदरस्य बदरीवृक्षस्योत्तरशिफाघटितां वृत्तगुलिकाम् । शङ्खमणिमिति । दक्षिणावर्तशङ्खनाभिघटिताम् । तथैवेति । सुवर्णेनावलिप्य हस्तेन धारयेत् ॥

तेषु चेति । धारणायोगेषु । आथर्वणानिति । अथर्ववेदे बहवो धारणायोगा उक्ताः ॥

विद्यातन्त्रादिति । मन्त्रवादात्तत्रापि भूर्जपत्रलिखितविद्याधारणयोगाः ।

अनुष्ठानविशेषोऽपि क्वचित्सौभाग्यनिबन्धनमित्याह—प्राप्तयौवनामिति । या बाल(ल्य)इव अनन्यपूर्वा स्वामिनं परिचरति तां तरुणीमन्यतो वारयेद्रक्षयेत् । यथान्यैर्नाभिगम्यते । स्वयं त्वभिगच्छेदित्यर्थोक्तम् ।

तत इति । तस्याः वारितवामत्वादिति । रक्षणयोगात्कामिनो वारिताः कौतूहलात्प्रतिकूला भवन्ति । ततश्च तेषु लालसीभूतेषु अत्यन्तगृध्नुषु योऽस्यै परिचारिकायै ॥ संघर्षेणेति । स्पर्धया बहु द्रव्यं दद्यात् । दुर्लभं हि प्रियमन्वितं च भवतीति प्रायोवादः ॥ विसृजेदिति । अभिगन्तुं दद्यात् ॥ विशेषत्वात् (पतः) वेश्यापाणिग्रहणेऽपि विधिः सौभाग्यनिबन्धनम् । पाणिग्रहश्च द्विविधः । यथोक्तम्—'दैवमानवभेदेन वेश्याविवहनं द्विधा । दैवं मन्मथकाण्डेन गम्येनाप्यपरं भवेत्' इति ॥ तत्र मानुषमधिकृत्य विधिमाह—गणिकेति । प्राप्तयौवनां रक्षयेदिति संबन्धः । तस्या

इति। स्वदुहितुः यादृशं रूपादि तदानुरूप्येणेति तत्सदृशाः। तानिति। दुहितुर्ये गम्याः। अभिनिमन्त्र्य सारेणेति। विभवेन स्वेनाभिमुख्येन स्वगृहे निमन्त्र्य। अस्यै दुहित्रे। इदमिदं चेति। ईप्सितमाह। संसाध्येति। उक्त्वा रक्षयेत् पण्यधर्मित्वात् ॥

सा चेति। दुहिता। अविदिता नामेति। यथैते जानन्त्यसास्वनुरक्तेयम्। येन रक्ष्यमाणापि मातुरविदितैव, गच्छतीति। धनिभिर्नान्यैर्निरर्थकत्वात्। प्रीयेत प्रीतिं कुर्यात् ॥

प्रीतिश्च दर्शनपूर्विका। दर्शनं च विशिष्टे देशे काले चेत्याह—तेषामिति। कलाग्रहणकाले गान्धर्वशालायामिति। यत्राचार्यो नृत्यगीतं शिक्षयति। भिक्षुकीभवन इति भिक्षुक्यादिकलाविदग्धोपगम्यते। तत्र तत्र चेति। सरस्वतीभवनोद्यानादिषु।

तेषामिति। प्रीत्यनुबद्धानामिति। यथोक्तदायिनामिति। मात्रा यत्संभावितं तद्दायिनाम्। पाणिं ग्राहयेदिति। देशप्रवृत्तिरत्रानुसर्तव्या ॥

तावदिति। यावत्प्रमाणं संभाषितम्। अलभमाना पाणिग्रहणादूर्ध्वम्।

स्वेनापीति। आर्थी(त्मी)येन। एकदेशेनेति। संभाषिताद्यममातृकं न दत्तं तावनैकदेशेन संयोज्य ख्यापयेत् सौभाग्यख्यापनार्थम्।

ऊढाया वेति। दैवेन विवाहेन योजिताया इत्यर्थः। कन्याभावं विमोचयेदिति। पूर्वेणैव प्रकारेण कौमारं का(हा)रयेदित्यर्थः। तेन प्राप्तयौवनामूढां स्वां दुहितरमित्यादि सर्वं योज्यम्। विशेषोऽत्र स पाणिं गृह्णीयादित्यस्य स्थाने स कौमारकं कुर्यादिति। यथोक्तदायिनं ग्राहयेदित्यस्य स्थाने कौमारकं का(हा)रयेदिति।

प्रच्छन्नं वेति। योऽभिप्रेतः कन्याभावं विमोचयितुं तेन प्रच्छन्नं संयोज्य। अजानतीभूत्वेति। न ममानुज्ञातमिति दर्शनार्थम्। एवं च सति तत उत्तरकालं विदितेषु धर्मस्थेष्वेतं(वं) नावेदयेत्। अभिसंभाषितम(न)र्थं न दद्यादित्यभिप्रायः। तावदलभमाना तु स्वेनाप्येकदेशेनेति तत्राभियोज्यम्।

यस्यास्तु न कश्चित्कन्याभावं मोचयति तत्र विधिमाह—

सख्यैव त्विति। दास्या वा कुशलया मोचितकन्याभावा इत्यङ्गुलिकर्मणा का(हा)रितकौमारविधिः। कथमेवं सौभाग्यमिति चेदत्राह—सुगृहीतकामसूत्रामिति। आभ्यासिकेषु वाडवकादिकेषु प्रतिष्ठितां शिक्षितां वयसि तारुण्ये प्रतिष्ठिताम्। यदा रूपयौवनवती विदग्धेत्यभिपतन्ति नागरिकाः तथा(दा)सौभाग्ये प्रतिष्ठितेत्यवसृजन्ति। व्यवहारे प्रवर्तयन्ति। प्राच्योपचारादिति। व्यवहारात्। पूर्वकालिको विधिः यत्कन्याभावमोचनम्॥

पाणिग्रह इति। यः पाणिं गृहीतवान्। गृह्णातीति ग्रहः। पाणेर्ग्रह इति समासः। अन्यभिचार्ये इति। संवत्सरं तेनैव सह वसेत्॥ तत इति। संवत्सरादूर्ध्वम्। यथाकामिनीति। यथेप्सिता कामयते वेश्याधर्मेस्थितत्वात्॥

तेनेति। गृहीतपाणिना। निमन्त्र्यमाणेति। अद्य रात्रौ मया सह शयितव्यमिति। लाभमुत्सृज्य अन्यस्माद्भवन्तमपि॥

सौभाग्यवर्द्धनं चेति।

एवं च कृत्वा पुनरभियातव्यमिति वैशिकेनोक्तम्।

रङ्गोपजीविनामिति।

नटादीनां विशेषमाह—

तूर्य इति। नृत्तविधौ विशिष्टमुपरञ्जयेत् नृत्तगीतादिभिः॥

इति सुभगंकरणमेकोऽनषष्टितमं प्रकरणम्॥

एवं लोकप्रियतामात्मनो विहितवतोऽभिप्रेतसिद्ध्यर्थं वशी(द्रवी)करणमुच्यते—धत्तूरकेति। धत्तूरकबीजानि॥ चूर्णैरिति। समीकृतानाम्। मधुमिश्रैरिति। माक्षिकमधुमिश्रैरिति। यथा नच प्रयोज्या जानाति लिप्तलिङ्गो मामभिगच्छतीति।

वातोद्भ्रान्तपत्रं वामहस्तेन ग्रहीतव्यम्। मृतकनिर्माल्यं यत्तदुरसि स्थितम्। मयूरास्थि जीवंजीवकास्थि, न केकिसंबन्धि ग्राह्यम्। येषां चूर्णेन अवचूर्णनं स्त्रीणां शिरसि पुरुषाणां पादयोः॥

स्वयं मृताया इति। तस्या एव कार्यकरणात्। मण्डलकारिकाया इति। या मण्डलेन पानीये संघशो भ्रमन्ति॥

वज्रस्नुहीति या साश्निः। गण्डकानि खण्डश इति खण्डं खण्डम्। कृतानि तस्याः। सप्तकृत्व इति सप्तवारान्॥

एतेनैवेति। चूर्णेन। सौवर्णं दर्शयति विस्मापनमेतत्प्रासङ्गिकं॥

तैरेवेति। वज्रस्नुह्यादिचूर्णैः। वानरपुरीषमिश्रैरिति जातमुखरागो यो वानरः तस्य पुरीषेणेत्याम्नायः॥

वचागण्डकानि। श्वेतायाः वचायाः॥ वृक्षस्कन्धमिति। यतः शाखा निःसृता। देवकान्तं देवप्रियम्। वशीकरणं चेति स्वहृदयान्मूलमुत्पाट्य योजितमित्याम्नायः॥ केवलं त्वात्मनोऽनुविलेपनं सुभगंकरणजवशीकरणम्॥

ताम्बूलानीति। अच्छानि। सहकारतैललिप्तानीति वर्तते। यं वृक्षमिति सुरभिकुसुमम्। उत्कीर्य उत्कीर्णस्कन्धदेशम्, इत्युत्तरत्रापि योज्यम्।

प्रियंगव इति। प्रियंगुकुसुमानि। तगरमिश्र इति कौरण्टकेन तुल्यभागेन मिश्राः। नागवृक्षं नागकेसरम्। एतत्त्रिविधमनुलेपनं देवगन्धर्वनागसत्त्वेष्वेव योजयेत्। सत्त्वपरिज्ञानं च शास्त्रान्तरादनुमन्तव्यम्। उष्ट्रास्थीति। तण्डुलभेदं कृत्वा। भावितं त्रिःसप्तकृत्वः। दग्धमिति। अन्तर्धूमम्। अञ्जनमिति मषीभावमुपगतम्। नलिकायामिति। उष्ट्रास्थिनलिकायाम्। स्रोतोञ्जनेन तुल्यभागेन सह दृषदि श्लक्ष्णीकृत्य निहितः, उष्ट्रास्थिशलाकयैव घटितया चक्षुषोर्वियोजितम्। पुण्यमिति। पवित्रम्। चक्षुष्यं तिमिरापनयात्। वशीकरणं चेति। यः प्रथमं दृश्यते स वशी भवति। शेषं सुभगंकरणमित्यपदेशः॥ एतेनेति उष्ट्रास्थ्यञ्जनविधानेन। तत्र भासः गोष्ठः कर्कटकः पक्षी॥

वशीकरणं षष्टितमं प्रकरणम्॥

वशीकृतापि प्रयोज्या रन्तुमसमर्थस्य निष्फलैवेति वृषहिता वृष्या योगा उच्यन्ते—उच्चटा प्रसिद्धा तस्याः कन्दश्चव्या वणिग्द्रव्यं यष्टिमधुकं च

एतद् गोपयसा सह क्वथितम् । सशर्करेणेति । शीतीभूतं शर्करां दत्त्वा पीत्वा वृषीभवति । व्यवायक्षम(कम्) इत्यर्थः । मेषः प्रसिद्धः । बस्तः छागः । तयोरन्यतरस्य मुष्कः वृषणं तेन सिद्धस्य क्वथितस्य । विदारी प्रसिद्धा । तस्याः कन्दम् । क्षीरिका राजादनम् । तस्याः फलानि । स्वयंगुप्ता कपिकच्छुः तस्या मूलं क्षीरेण पानं क्वथितेन वृषत्वयोगः । असमासनिर्देशात्प्रत्येकं योगः ।

प्रियालबीजानामिति । अस्थ्युपनीय गृहीतानामित्येको योगः । मोरटाविदार्योरिति द्वितीयः । तत्र मोरटा इक्षुमूलम् । शृङ्गाटकः प्रसिद्धः तस्य सर्वं ग्राह्यम् । कशेरुका प्रतीता । कच मल्लिकाख्या ग्राह्या । मधूलिका मधुकफलत्वात् मधुकं यष्टीमधु क्षीरकाकोली वणिग्द्रव्यं पिष्ट्वा समांशानि । उत्कारिका अपूपिका । यावदर्थमिति यावत्तृप्ति भक्षितवान् । अनन्ता इति । बर्हीः ॥

माषकमलिनी माषविदलिका । पयसा धौतामिति जलेन निस्तुषीकृत्य संशोध्य च क्षीरेण धौताम् । वृद्धवत्सायाः इति । बर्करिकाया इति ॥ आशित्वेति शीतीभूतं मधुसर्पिर्भ्यां विषमाभ्यां सहेत्यर्थः ।

गोधूमचूर्णेनेति । कणिक्यया ॥

चटकाण्डरसेनेति ग्राम्यचटकस्य स्वयं स्फुटिते अण्डे स्वयंमृतेन पोतेन रसकः कार्यः । तेन भावितानीत्यर्थः ॥

अपगतत्वेति । निस्तुषाः । स्वयंगुप्तायाः फलानि, नतु मूलं ग्राह्यम् । पक्वसंयाव इति यावकम् ॥

द्वेद्वे इति एकैकस्य । मधुरसायाः इति तिक्तवल्लिकायाः । प्रस्थं पयस इति द्वात्रिंशत्पलानि । षडाङ्गकमिति शर्करादयः षडितिकृत्वा । अमृतं स्वादुत्वात् । मेध्यं मेधाहितम् । युक्तरथ(स)मिति । योगवाहि स्त्रीसहायमित्यर्थः ॥

शतावरी प्रतीता श्वदंष्ट्रा गोक्षुरकः । एभिः कषायैः यस्मिन्घृते पिप्पली मधूकं कल्को यस्मिन्गोक्षीरमेवापःप्रक्षेपो यस्मिन्पक्के इति पाकविधानेन ।

पुष्यारम्भणमिति । पुष्यनक्षत्रे प्राशितुमारब्धव्यम्। श्रीपर्णी काश्मीरी । चतुर्गुणितजलेनेति । शताण्डस्थापितं ततो द्विफलकं चूर्णमादाय प्राश्नीयात् ॥ उक्तमेवार्थं पङ्क्तिपरिहारार्थमाह—आयुर्वेदादिति । वैद्यकात् । वेदाच्चेति । अथर्वणवेदात् । विद्यातन्त्रेभ्य इति । मन्त्रवादेभ्यः । आप्तेभ्य इति । तन्त्रकुशलेभ्यो विश्वासिभ्यो संदिग्धान् द्रव्ययोगमात्राणां सन्देहान् । शरीरात्ययवहान् ये प्रयुक्ताः शरीरविनाशमप्यावहन्ति— जीवघातसंबद्धान् ये प्राणिनो विनाश्य युज्यन्ते । अशुचिद्रव्यसंयुतान् शुक्रशोणितादिभिः संयोज्याशनपानेन दीयन्ते । 'तपोयुक्तः प्रयुञ्जीत; सर्वसिद्धीनां तपोमूलत्वात् । शिष्टैराचारवद्भिः । विधिनेति । अविधिपूर्वं हि सुभगंकरणादिः क्रियमाणो न सिध्यति । मङ्गलैः प्रशस्तवचनादिभिः ॥

वृष्यायोगा एकषष्टितमं प्रकरणम् ॥

सप्तमेऽधिकरणे प्रथमाध्यायः ।

द्वितीयाध्यायः ।

द्विविधं रतमपत्यफलं रतिफलं च ॥ पूर्वत्र वृष्ययोगा उक्ताः । द्वितीये नष्टरागप्रत्यानयनमुच्यते ॥ कस्यचित्स्वभावतोऽवस्थाया विनष्टो रागः प्रयोगात्प्रत्यानीयते । यदाह—

चण्डवेगानामिति । रञ्जयितुं सुखयितुमशक्नुवन् नष्टरागत्वात् । योगानिति प्रयोगान् । नष्टो रागो द्विविधो मन्दो ध्वस्तश्च । तत्र मन्दः प्रवर्तकोऽप्रवर्तकश्च । तत्र पूर्वमधिकृत्याह—रतस्येति—सम्प्रयोगस्य । उपक्रम इत्ययमारम्भे यद्यपि मन्दो रागो रते प्रवर्तयति स्तब्धलिङ्गत्वात् तथापि प्रथमं संबाधस्य भगस्य । करेणोपमर्दनं गजहस्तेन क्षोभणं कार्यम् । तस्या इति चण्डवेगायाः करेणोपमर्दनाद्रसप्राप्तिकाले रतयोजनमिति । यन्त्रयोजनम् । रागप्रत्यानयनमिति । स्त्रीच्छाया तावन्तं कारश्च(?)रागस्य प्रवर्तितत्वात् ।

अप्रवर्तकमधिकृत्याह—

मन्दवेगस्येति । यस्योत्पन्नोपि रागो न प्रवर्तयति लिङ्गस्यानतिस्त-

न्धत्वात् तस्योपरिष्टकेन रागप्रत्यानयनं तेनैव विसृष्टिसुखस्योत्पादनात् । गतवयस इति वृद्धस्य । व्यायतस्य चेति । मेदस्विनः । उभयस्यापि ध्वस्तो रागो लिङ्गस्य दुःखेन उत्थाप्यमानत्वात् । ताभ्यामेवौपरिष्टकमेव रागप्रत्यानयनं रतयोजने प्रवर्तयितव्यमसमर्थत्वात् ॥

अपद्रव्याणि च योजयेत् । यस्य प्रवर्तकोऽप्रवर्तकश्च रागः स कृत्रिमाणि साधनप्रकाराणि च योजयेत् ॥

तान्यविद्धस्य विद्धस्य वा लिङ्गस्य । तत्र पूर्वमधिकृत्याह—

तानीति । सुवर्णादयो द्रव्याणि येषामपद्रव्याणामिति समासः । तत्र कालायसं लोहं गवलशृङ्गं प्रतीतम् । द्रव्यशब्दः प्रत्येकं योज्यः । त्रापुषाणि त्रपुषो विकारत्वात् 'त्रपुजतुनोः षुक्' ॥ गुणानाह—

मृदूनीति । मृदुत्वात्साधनस्पर्शं नयन्ति । शीतवीर्यत्वं च प्रवेशकाले शीतलं स्पर्शं कर्मणि च व्याहारे धृष्णूनि घर्षणशीलानि भवन्ति । अनुजेन(?) त्वात् । दारुमयानि तु विपरीतानीत्यभिप्रायः । साम्यतश्चेति । किंचिदेव कस्याश्चित् प्रियं भवति । अतो दारुमयान्यपि योज्यानीति मन्यते । तानि प्रकारान्तरेण दर्शयन्नाह—लिङ्गप्रमाणान्तरमिति । यदा स्तब्धलिङ्गस्य आनाहः प्रमाणं तदन्तरं छिद्रं यस्य तत् विन्दुभिरिति । (रित्यु)उत्कीर्णैः कर्कशपर्यन्तं कर्कशपृष्टमित्यर्थः । तद्वलयमिव पिनद्धं स्तब्धं लिङ्गं संपीड्य तिष्ठति । एते एवेति । वलये द्वे चतुर्पु त्रिपु वा स्थानेषु विशिष्टसंधिनि घटिते त्रिःप्रभृति यावत्प्रमाणं लिङ्गस्यायामतः तत्प्रमाणं चूडकः ।

एकामेव लतिकामिति । लताकारा सीसकादिमयी । प्रमाणवशेनेति । लिङ्गस्यायामपरिणाहवशेन । वेष्टयेदित्येकचूडकम् । उभयत इति । द्वयोः पार्श्वयोः । मुखच्छिद्र इति । येन भागेन लिङ्गं प्रवेश्यते तन्मुखं तद्द्वयोः पार्श्वयोः छिद्रं कटिबन्धनसूत्रप्रक्षेपणार्थं यस्याः । कर्कशपृषतगुटिकायुक्ता इति । उत्कीर्णैः कर्कशविन्दुभिः युक्तः । कञ्चुकः सर्वं लिङ्गमवच्छाद्य अवस्थितत्वात् यस्य । जालकमिति । प्रतीतिः स द्विधा खरकञ्चुको योऽयमुक्तः । श्लक्ष्णकञ्चुको यो मसृणपृष्ठः । तदुभयमपि समन्तात्कञ्चुकः । यस्तु मणिभागमाच्छाद्य तिष्ठति सोर्थ(र्धे)कञ्चुकः ॥ यस्य मणिरक्ष इति प्रतीतिः गु-

लिकाभिरन्तरान्तरा मुक्तसंधिं कृतोत्कीर्णाभिर्युक्तजालकम्। तत् द्विविधं उत्कीर्णजालकं यदिदमुक्तम्। वलयं वहुछिद्रं कृत्वा दृढसूत्राण्यवबध्य छिद्रस्फोटितगुलिकादिभिर्विवद्धगुलिका दत्त्वा विरच्यते तन्मणिजालकम्। तस्याग्रे विधानिका योजनं कार्यम्। प्रमाणवशयोगीति। उभयोरपि घटितलिङ्गस्यायामपरिणाहावपेक्ष्य समन्तात्कञ्चुकस्य जालकस्य च योग इत्यर्थः।

तदलाभत इति यथोक्तसंस्थानघटनाभावे। बिल्वादीनां योजनं तेषां लिङ्गसंस्थानत्वात्। अत्र वेण्वलाबूनालयोरग्रं तु प्रमृष्टं कार्यम्। शूकरजङ्घावद्ध इति। शूकरजङ्घातः प्रमाणवशेन निर्मोकवदाकृष्टं चर्म। स्व(सु)भावित इति च चर्मकषायैः कषायितः तैलैः स्नेहितः कर्मण्यो भवति। श्लक्ष्णकाष्ठमाला चेति। मसृणाभिः काष्ठगुलिकाभिः अन्तरान्तरामलकास्थीनि दत्त्वा ग्रथिता माला तया तथा लिङ्गस्य वेष्टनं यथा सुश्लिष्टं भवति।

विद्धमधिकृत्याह—

न त्विति। अविद्धस्य लिङ्गस्येति संबन्धः। व्यतिहृतिः संप्रयोगः। वालस्यै(स्ये)वेति। यथा कर्णयोर्बालावस्थायामेव व्यथनं तथा लिङ्गस्य यूनां च तत्र अन्यस्य वा लिङ्गस्य व्यधनविधिमाह—व(श)स्त्रेणेत्यारम्ख्येन। भेदयित्वेत्यनेन कुशलेन वहिश्चर्माकृष्य अन्यत्र स्थापयित्वा शिरां त्यक्त्वा तिर्यक् छेदयेत् यथोभयतः छिद्रं भवति। उदके तिष्ठेद्रुधिरस्तम्भनार्थम्। वैशद्यार्थमिति छिद्रस्यासंकोचार्थम्। निर्वन्धाद्व्यवाय इति वहून्वारान् मैथुनं कार्यं ममत्वे हि तत्प्रतीकारस्य पीडाभावात्—

कषायैरिति। पञ्चकषाय(यैः) शोधनं प्रक्षालनं वर्ण(व्रण)स्य॥ वेतसादिशङ्कुभिः कीलकादिभिः क्रमेण वर्धनं तेषामक्रमेण वर्धमानत्वात्। यष्टिमधुकेन मधुयुक्तेन प्रलेपनशोधनम्। शुद्धं हि व्रणं रोहति॥ तत इति उत्तरकालम्। सीसपत्रकर्णिकयेति सीसकस्य वर्धनहेतुत्वात्। तत्पत्र तु तालपत्रवत्संवेष्टितम्॥ प्रक्षिप्य वर्धयेत्॥ म्रक्षयेच्च शल्यकतैलेन प्रवेशनार्थम्॥ तस्मिन्निति वहुछिद्रे। अनेकाकृतिविकल्पानीति अनेकसंस्थानेन कल्पितानि।

वृत्तमिति । वर्तुलं मध्येऽस्य द्रोणिका कार्या यत्र चर्मपाशः तिष्ठति । एकतो वृत्तमिति । अन्यतो दीर्घमष्टमीचन्द्रसदृशं दोणिका(लूखलं) तथैवमुल्लेखनमुलूखलाकृति ॥ मध्ये निम्नं यत्र पाशः तिष्ठति । कुसुमकं कलिकाकृति(पद्म)मध्येस्य द्रोणिका । कण्टकितं कारविल्लसंस्थानं द्रोणिका । तथैव द्वयोरप्यायामेन योजनम् । काकास्थि समचतुरस्रं द्रोणिका । तथैव गजप्रहारिकं गजस्याकृति सिंहकरं उत्कीर्णनिर्मि(?)गतं तदनस्या ग्रीवा शिरोदन्तान्तरभागेन द्रोणिका । अष्टममष्टाश्रिटकं तस्योर्ध्वाधःकोणेन द्रोणिका भ्रमरकं शकटाकृति पार्श्वतः कीलिका योगाचलचक्रमायामेन द्रोणिका द्वयोरपि कोणेन प्रवेशनम् । अन्यानि च योजयेत् । तत्राप्युपायतः यान्युपायानि रतेः प्रतिपद्यन्ते ॥ कर्मतश्चेति । यानि चर्मपाशेन संयोज्य कर्मणि निरपायं व्यापार्यते । यथा साम्यमिति । मृदुमध्यातिमात्रेण संबाधस्य कार्कश्यं बुद्ध्वा तदनुरूपकार्कश्यं विधेयम् । मार्दवं येषां मसृणता विद्यते ॥

इति नष्टरागप्रत्यानयनं द्विषष्टितमप्रकरणम् ॥

यथा आपद्रव्यसंयोगाल्लिङ्गं कर्मण्यम् । तथा शसस्य(?) वर्धितमपीति वृद्धविधय उच्यन्ते—एवमिति । वृषजातानामन्येनानुयोगित्वाद्यन्नतामिति कन्दलिकानां शूकैः लोमभिः उपबृंहन्निति तदंशिकायां जन्तून्गृहीत्वा शूकैः पार्श्वेषु लिङ्गं ताडयेत् । 'तृह हिंसायाम्' इति धातुपाठात् । तैलमृदितमाकृष्य । जातशोक(फ)मिति । जातश्वयथु ।

शल्वातरेणेति । खट्वावस्रान्तरेण लम्बयेत् दैर्घ्यार्थम् ॥ तत्रे(त इ)ति । ईप्सितप्रमाणे जाते शीतैः पञ्चकषायैः कृतवेदनाग्रहणमिति परिपिच्य परिपिच्यापनीतवेदनम् । अन्यथा शोफो वर्धते वेदना चेति । शबरकन्दकं शबरमूलम् । जलशूकं लोकप्रतीतम् । हस्तिकर्णं बृहत्पत्रमटव्यां भवति ॥ वज्रवल्ली अस्थिसंहारः ॥ मासिकमिति । वर्द्धितं मासे तिष्ठति ॥ एतैरेवेति । अश्वगन्धादिभिः कल्कीकृतैः कषाययुक्तैरिति तं कृतकषाययुक्तैः । तैलेनेति परिमर्दनं वर्द्धनं षाडमास्यमिति योज्यं । दाडिमत्रपुषयोर्वा-

जानि वालुकेति एलवालुका बृहती बृहत्येव कङ्कबृहतीहस्तिनो तुंबा। अनयोः फलरसः परिमर्दनं परिषेको वा वर्द्धनं षाडमास्यमिति योज्यम् ॥ तांस्तांश्च योगानिति वर्द्धनस्य वृद्धिविषयः ॥

इति त्रिषष्टितमं प्रकरणम् ।

उक्तव्यतिरिक्तकार्यसाधनार्थं प्रकीर्णकन्यायेन चित्रा योगा उच्यन्ते-अथेति प्रकरणाधिकारार्थम् । स्नुहीति वज्री ग्राह्या ॥

अवकिरेदिति । शिरस्यवचूर्णयेत् ॥ नान्येन काम्यते[1] तस्या अनेन रक्षितत्वात्॥सोमेति। सोमलता अवल्गुजं वाकुचीबीजम् । भृङ्गो भृङ्गराजः । लोहं लोहचूर्णम्। उपजिह्विकाया वल्मीकं चिनोति व्याधिधातुकः सुवर्णसेफालिका तस्याः पत्रत्वनिर्यासः जम्बूफलम् । तत्र च निर्यासः फणितीकृतेन तैः सह कल्कीकृतेन रागो नश्यति । संस्पर्शमात्रेण लिङ्गं नोत्तिष्ठतीत्यर्थः। बहुपादिका रुण्डिका। या वर्षासु भवति । स्नाता च गच्छतो रागो नश्यति ॥ स्रजश्चेति । नापि च कुसुमयुक्तादपि नद्धार्दोभ्यां यकृतः कोकिलाक्षकः श्वेतः।बीजानि ॥ संहतिमिति संकोचम्। वृक्षात्फलस्य कुसुमम् ।

कन्दुकमिति व्रजकन्दुकमिति । सर्वसुगन्धावीरणस्थाने वर्षा सुगन्धिर्जायते । विशालीकरणमेकरात्रम् ॥

स्नुहिसोमार्कक्षारैरिति दग्ध्वा परिस्राव्य च जलं ग्राह्यम् । अवल्गुजफलैश्च क्षारैः।मदयन्तिका प्रसिद्धा । कुटजकः यस्येन्द्रयवा फलानि । अञ्जनिका कृष्णकुसुमा प्रतीता । गिरिकर्णिका नालस्य पदो ग्राह्यः लक्ष्णपर्णी कश्मारी । येषामिति श्वेतीकृतानां प्रत्यानयनं पुनः कृष्णीकरणमित्यर्थः ॥

एतैरेवेति कषायकल्कीकृतैः क्रमेणेति । दिवसक्रमेण स्वयमेव निवर्तते कार्ष्ण्यम् । मुष्कस्वेदेनेति वृषणप्रस्वेदेन उपलिप्तमिति । औषधजलेन बहिरन्तश्च बहुशः क्षालिते उपलिप्तो भवति ॥

---

१ 'नान्यं कामयेत' इति मूलाधिष्ठितपाठः.

अभ्यवहार इति । यदशनं पानं वा अभ्यवहिते गुडो भक्षितः प्रत्यानयनमभ्यवहारो वा यदा जीर्णो भवति तदा स्वच्छता हरितालमनःशिलाभक्षिण इति उपवासं कारितस्य मासेन देयम् आदराय ।

तृणं लोकप्रतीतम् ॥ हरीतकमिति । पत्रं तरथिता यस्य चटचट इति प्रतीतिः। आम्रातकः प्रसिद्धः । तयोः पत्रमित्यर्थः ॥ श्रवणप्रियंगुका ज्योतिष्मतीति तत्फलैः सह पिष्ट्वा दुकूलं शुद्धं गृहीत्वा सर्पनिर्मोकेन सह वर्तिका कार्या । दीपे प्रज्वलिते सति सर्पवद्दृश्यते तदाकारमात्रदर्शनात् विस्मायनमेतत् ॥ क्षीरपानं धन्यं पवित्रत्वात् यशसे आयुषे च हितं भवति सर्वदा सेव्यमित्युपदेशः ॥ तथा आशिषश्च प्रसन्नेभ्यो मृग्याः । चित्रा योगाः

इति चतुःषष्टितमं प्रकरणम् ।

एवं संक्षेपविस्तराभ्यां शास्त्रं प्रणीय ग्राह्यतां प्रतिपादयितुमाह—

पूर्वशास्त्राणीति । संदृश्येति शब्दतोऽर्थतश्च दृष्ट्वा । तेषां प्रमाणत्वात् प्रयोगमनुसृत्य च प्रयोगतश्च ज्ञात्वेत्यर्थः । संक्षेपेणेति । स्वशास्त्रस्य प्रयोजनं निवेदितुं कथितम्। ननु च संप्रयोगाङ्गं शास्त्रमिदम्। संप्रयोगश्च रागहेतुः । तं च रागमेवानर्थहेतुं दीपयत्येतद् इत्याह—धर्ममिति । एतस्येति शास्त्रस्य । यः तत्वज्ञः स नियतं धर्मादीन् पश्यति तांश्च पश्यन् न रागादनर्थहेतुकात्प्रवर्तते । प्रत्ययं विश्वासम् । लोकमिति । शिष्टमशिष्टं चेति । यद्येवं किमिति धर्मविरुद्धा औपरिष्टकादयोऽत्र विहिता इत्याह—अधिकारवशादिति । प्रकरणवशात् रागहेतवः । तदनन्तरमिति विधानानन्तरं प्रयत्नानिर्धारितादेशपुरुषापेक्षया निषिद्धाः ॥ तदेव स्फुटयन्नाह—न शास्त्रमस्तीति। व्याख्यातं चैतत्प्राक् । यतश्च शास्त्रात्प्राधान्येन संक्षिप्य निबद्धं येन च तदुभयं दर्शयन्नाह—बाभ्रवीयां चेति आगमय्य गुरुभ्यः विमृश्य च स्वबुद्ध्या ।

सूत्रमिति। कामसूत्रमावर्त्तयत् कृतवान्। यथावस्थ्ययथासदर्थंच(?) विहितं तद्दर्शयन्नाह—तदेतमिति । परेणच समाधिना समाहितेन येन सह । लोकयात्रार्थमिति चातुर्वर्ण्ये गृहस्थव्यवहारार्थम् । न पुना रागार्थोऽस्य संविधिः कथं न रागार्थो भवतीत्याह—रक्षन्निति । अस्य शास्त्रस्य यत्त-

त्वमवैति सोऽवश्यं धर्मादीन् परस्परस्य अनुपघातेन रक्षन् । लोकवर्तिनीमिति इहलोकपरलोकमार्गं शोभनाशोभनात् । एतत्कुशल इति । एतस्मिञ्शास्त्रे कुशलः । विद्वान् ज्ञानवान् । धर्मार्थावधर्मभयार्था कामेन न बाध्यते । कामीति गृहस्थः । प्रयुञ्जान इति शास्त्रार्थम् ॥ प्रसिध्यति लोकेषु प्रमाणपुरुषो भवति । नातिरागात् एकत्वादिति ।

इति सप्तमेऽधिकरणे द्वितीयोऽध्यायः ।

आदितः षट्त्रिंशः ॥ समाप्तं च कामसूत्रटीकायां जयमङ्गलाख्यायामौपनिषदिकं नाम सप्तममधिकरणम् ॥

समाप्तम्

PRINTED AT THE 'NIRNAYA SÂGARA' PRESS.

# An extract from Dr. P. Peterson's paper on Courtship in ancient India.

(*Read before the Bombay Branch of the Royal Asiatic Society on the 29th of July* 1891).

"Among the 540 manuscripts collected by Horace Hayman Wilson in Benares and Calcutta, and now deposited in the Bodleian Library at Oxford, there is one which contains the Kâmasûtra of Vâtsyâyana, along with a commentary by one Bhâskara Nrisimha. The commentary was written in 1788 at the request of one Vrijalâl. It is described as being the work of a man who was not sufficiently acquainted either with the language or with the subject-matter of his author. The Kâmasûtra itself is a work which is destined, I believe, to throw a great deal of light on much that is still dark in the ancient history of this country. Aufrecht, who denounces the subject-matter of the book with all a scholar's asceticism, saw its importance and gives up seven columns of his catalogue to a long extract from it He notes that Vâtsyâyana refers to the following previous writers on the subject of love:—Auddâlaki, Gonikâputra, Gonardîya, Ghotakamukha, Chârâyaṇa, Dattaka, Bâbhravya, and the Bâbhravîyas. Aufrecht also pointed out that Vâtsyâyana must be put before Subandhu, the author of the Vâsavadattâ. For both Mahes'vara and Hemachandra tell us that Vâtsyâyana is another name for Mallanâga, whom Subandhu quotes.

The extracts given by Aufrecht attracted the attention of scholars, but the book itself has only been accessible to them very recently. The translation into English (1883) was printed and circulated privately only; and it was, besides, for scholars a very inadequate representation of the original We owe it to Pandit Durgâprasâd of Jeypore that we have at last an excellent edition of the book, accompanied by a better commentary than that which Aufrecht describes. This is the commentary, a fragment of which I secured in 1883 for the Bombay Government collection, and

which is referred to in my second report, p. 67. It is called the Jayamangalâ. The author gives his name as Yas'odhara, but states that he wrote this "explanation of the Sûtras which Vâtsyâyana collected after he had retired from the world in grief at the loss of a beloved wife, and had, under the name of Indrapâla, entered the ascetic life" It can be shown that the book, as we have it now, was known to Bhavabhûti, who flourished at the end of the seventh century, and that he makes constant reference to it in his Mâlatîmâdhava. There is a statement to that effect at the beginning of the play itself, the point of which has been hitherto missed. I refer to the phrase "Auddhatyamâyojitakâmasûtram," which occurs in the enumeration by the actor of the qualities the audience expect to find in the play about to be represented before them. Jagaddhara sees no reference to a book here, and Bhândârkar, differing from Jagaddhara, translates, "bold or adventurous deed, intended to assist the progress of love (*lit.* in which is introduced the thread of love)." Bhavabhûti doubtless means this, too. But his words include a reference to this book, of which he makes great use. When Kâmandakî slyly suggests, while professing to put aside, the tales of how S'akuntalâ and others followed the dictates of their own hearts in love, she is following Vâtsyâyana When she tells Avalokitâ that the one auspicious omen of a happy marriage is that bride and bridegroom should love one another, and quotes the old saying that the happy husband is he who marries the girl who has bound to her his heart and his eye, she is quoting Vâtsyâyana. And so in many other parts of the play. One of the most conspicuous passages is in his seventh act, where Buddharakshitâ breaks through her Prâkrit to quote the Sanskrit phrase, "Kusumasadharmâṇo hi yoshitah sukumâropakramâh"—"For women are like flowers, and should be approached gently." Buddharakshitâ is quoting our book (p 199), and the whole of the context refers to a matter which Vâtsyâyana treats of at great length, and which is interwoven with the plot of the Mâlatîmâdhava.

I will say only in passing that I hope on some future occasion to show that what is true of Bhavabhûti is true of his great predecessor, Kâlidâsa. If that is so, a vista of antiquity opens up for our book. For it is certain now that Kâlidâsa must be put earlier than has lately been very generally supposed. He stands near the beginning of our era, if indeed he does not overtop it, and dates from the year of Vikrama's era. It is enough, however, for my present purpose, if you will bear in mind that this Kâmasûtra of Vâtsyâyana can be shown to have been known to Subandhu and Bhavabhûti. It contains much that is in conflict with the poet's dream of the "unchanging East" and his belief that India is a country in which all things have continued as they were from the beginning. But its evidence cannot, I believe, be overturned It is with a full conviction of the authenticity and antiquity of the book that I proceed to lay before you a translation of that chapter in which Vâtsyâyana lays down the rules which, in his opinion, in all ordinary cases, should govern the relations of the sexes before marriage. ***"

---

## OPINIONS.

"*** Your edition of Vâtsyâyana's Kâmasûtra will be a valuable publication, and I am glad that you have been induced to bring it out ***" *Dr F Kielhorn Ph. D, C I E* (*Gottingen* 23-2-87.)

---

"*** To judge from the printed sheets sent to us, the latter (Vâtsyâyana's Kâmasûtra) will be a most interesting and valuable publication" (*The Academy* 26-3-87)

---

"I had extreme pleasure in receiving your elegant aud accurate edition of the Kâmasûtra, which is a most important contribution to Indology.***" *Dr. R Garbe* (16 *Prinzenstrasse, Königsberg i / Pr.* 19-4-91.)

---

"*** I congratulate you on having done and done well a work which cannot fail to be of great service to Sanskrit Scholars The work is really a very important one. Though it is a work on Erotics only and treats principally of love, it contains a good deal of valuable information on many important subjects and will be found to be a great help in the study of Indian society in ancient times as well as in our endeavours to account for many customs and practices of mediæval and modern Indo-Aryans *** The commentary you have published is one of the best specimens of its class,—it always elucidates all the really dark points in the text and gives particulars geographical, political and social, which are not usually met with in similar works. You seem to have devoted much care and labour in bringing out your edition. I hope that it will command the success which it undoubtedly, in my opinion, deserves and pay the trouble you have taken in preparing it."—*Mr. Haridâsa S'âstrî, M A, F. S Sc. (Lond), M. R. A. S; F. R H. S. (Director of Public Instruction, Jaypur State Jaypur* 24-4-91.)

---

"Please accept my best thanks for the copy of Vâtsyâyana's Kâmasûtras which you have kindly sent me I feel sure that the editing of this difficult and important work could not have been in better hands than yours, and that by the publication of this strange book you have rendered a great service to Sanskrit scholarship."—*Dr. F. Kielhorn, Ph. D, (Göttingen* 1-5-91.)

---

"*** I think the publication of this book is likely to be of much assistance in the investigations now being carried on into the Literary History, and the social condition of Ancient and Mediæval India ***—*The Honorable Mr. Justice K. T. Telang M. A; LL B; C. I E. (High Court, Bombay,* 3-8-91.)

---

"*** The Kâmasûtra seems to me to be very valuable for all researches covering Infant Marriage in Ancient India, as it supplies many details to the marriage laws preserved in the Smritis and Grihya Sûtras.***"—*Prof J. Jolly (Professor of Sanskrit in Würzburg University, late Tagore Professor of Law, Germany,* 19-10-91)

---

" सर्वशास्त्रकलाकलापपारंगमायानेकोच्छिन्नप्रायकाव्यालंकारादिग्रन्थोद्धारकाय सकलसद्गुणसंपद्विभूषिताय श्रीदुर्गाप्रसाद इति सुगृहीतनाम्ने श्रीजयपुरनिवासिने महापण्डितशिरोमणये डाक्टर जी० ब्यूलर इत्यभिधस्य राजसभामात्य-'Hograth'पदविशिष्टस्य संस्कृताध्यापकस्य कुशलप्रश्नपुर:सरं समुल्लसत्तुतरां विज्ञप्तिरियम्—भवत्प्रेषितं कामसूत्रस्य मुद्रितं पुस्तकं मया प्राप्तम्। तत्प्रेषणेन चाहमतीवोपकृतो भवता। यद्यपि कामसूत्रस्य भूयांसि स्थलानि लज्जां बीभत्सां वोत्पादयन्ति, तथापि सा श्रीवात्स्यायनमुनिकृतिः काव्यशास्त्राध्ययने भरतखण्डीयप्राचीनवृत्तान्तनिर्णये चोच्चुच्चैरवश्यमेवावलोकनीया। तेन तत्संशोधने यो भवता प्रयत्नो विहितः स न निष्फलः, किं तु विद्याविवर्धनायैव। अन्येषामप्यस्मज्जातीयानां विदुषां स एवाभिप्रायः। * * * काव्यमाला तु चिरं तिष्ठेत्कीर्त्या च वर्धतामिति ममेच्छेत्यतिविस्तरेणालम्॥—*Dr G Buhler Ph. D, C I. E., (22 Stefanni Gasse Ober Dobling Vienna, Austria.* 3-12-91 )